# सिंधु-कन्या

भारतशासन-शिक्षासमाजकल्याण-मंत्रालय-प्रदत्तेन
आर्थिकानुदानसाहाय्येन प्रकाशिता
आख्यायिका

लेखक:
डॉ. श्रीनाथ श्रीपाद हसूरकरः
प्राचार्यः
शासकीय-महाविद्यालयः, नीमचम्, मध्यप्रदेशः

# सिंधु-कन्या

शिक्षा एवं समाज कल्याण मंत्रालय
भारत शासन, नई दिल्ली
द्वारा
प्रदत्त आर्थिक अनुदान
की
सहायता से
प्रकाशित
*उपन्यास*

लेखक
डॉ. श्रीनाथ श्रीपाद हसूरकर
आचार्य
शासकीय महाविद्यालय, नीमच (म. प्र.)

# SINDHU - KANYA

By
**Dr. Shrinath Shripad Hasurkar**
Principal
Govt. P-G. College, Neemuch (M. P.)

*Published with the financial assistance*
*from the Ministry of*
*Education and Social Welfare*
*Govt. of India*
*New Delhi*

उपन्यासमिमं स्वप्रज्ञाचक्षुषा निरीक्षितवद्भिः पंडितप्रवरैः दयाशंकरवाजपेयिमहोदयैः, तत्साहाय्यकृद्भिस्तच्छिष्योत्तमैः डॉ. संपूर्णानंदशास्त्रिभिश्च………उपकृतोऽस्मि ।

—लेखकः

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि–

–भवभूतेः

# प्रथमः परिच्छेदः

'परतीरवर्तिनस्ते चित्रलिखिता इव स्तब्धाः पंक्तिवद्धाः समुत्तुङ्गाः सरलवृक्षाः''', वैदूर्यनीलं तत्रभोऽगणं''', विगंतप्रसृता सा आकाशगङ्गा''', समीप एव तस्या अवगाहनसमुत्सुकेव मंदं मंदं प्रकाशमाना पांडुररमणीया सा शशांककला''', एकांतविश्रंभात् तया समुत्सारितं दुकूलमिव प्रसृतं तद्धवलविरलं शारदमभ्रखंडं''', समीप एव सकौतुकमिव स्मयमाना सा तारका, प्रतिबिंबितनभोवृत्तान्ताऽपरं सर्गमिव दिव्यं स्वोरसि गोपायन्ती दिगन्तवाहिनीयं सिंधुश्च'''। अहो स्वप्नसुन्दरं नाम दृश्यम् ।'

(सभ्रू-भगम्)''' 'प्रशांतवाहिनी प्रसुप्तेव दृश्यते निराहृत्य रामणीयकमेतन्निसर्गश्रियः'''। (सस्मितम्) अथवा- परितृप्ता नूनमियमाकंठं निपीयाऽऽसर्गोदयाद्विविधं सौंदर्यं तस्याः'''। प्रियकरचुंबितयुवतिकपोलारक्ता प्राभातिकी साऽऽरुणकान्तिः''', समुत्तप्ततपनीयभासुरा सा ललाटंतपतपनप्रभा, दिवसावसाने निवृत्त्य पश्चिमांबुनिधौ परलोकं प्रयातं प्रभाकरमनुगच्छन्त्या दिनश्रिय उपरि दिगंगनाभिः प्रक्षिप्ता कुंकुमधूलिरिव रक्तरक्ता सा सांध्यद्युतिः''', निरभ्रस्य घनश्यामनीलस्य प्रोषितचन्द्रस्यापि रमणीयस्य गगनस्य तारकिता सा रुचिः''', 'कामपरिक्षामकामिनीगण्डपांडुरस्य' षोडशकलस्य शशांकस्य सा रजतदीप्तिः''' केव हृद्या प्रकृतिच्छविरनया न निपीता''' आसर्गोदयात् ?'

'उग्राऽपि ? 'बद्धविद्युत्परिकराभिः' जलदघटाभिः 'कर्णकटु गर्जतीभिरर्जुनशरप्रतिकर्कशं' वर्षंतीभिरुपस्थापिता लोमहर्षिका जलप्रलयस्य शोभाऽप्यनया साक्षात्कृता····, चराचरं भस्मसात् कर्तुमुद्यतैर्मर्मदाहकैश्चण्डभास्करकरैरवतारिता प्राणान्तकारिणी योजनशतप्रसृता दावानलद्युतिरपि ।'

'कदाचित् प्रशांतं, कदाचित् प्रक्षुब्धं, कदाचित् प्रोषितभर्तृकावेणीदुर्बलं, कदाचिद्रोधोपरोधिप्रबलप्रवाहं, सदैवाविच्छिन्नं प्रवहन्त्याऽनया न जाने कियत्यः नौकाः– काश्चित् कीर्तनमुखरभावुकजनकृतसंमर्दाः, काश्चित् हिंसोदग्राऽऽयुधिकभयंकराः, काश्चित् पारदेशिकवाणिज्यप्रस्थिताः, काश्चिन्महाप्रमाणाः, काश्चित् क्षुद्रकाया विविधवृत्तान्तास्तरणयः स्ववक्षसोढाः । कियत्यश्च ग्रामटिकानां ग्रामाणां नगराणां महानगराणां स्वतीरे शनैः शनैराविर्भवतां, विकसतां चक्रनेमिक्रमेण विशीर्णतां च प्राप्नुवतां गाथारवसानकरुणाः साक्षात्कृताः ।'

'ध्रुवम् ! अतीतानामिव वर्तमानानामिवानागतानामपि घटनानामियमभिज्ञा । अत एवास्माकं गूढदर्शिभिर्महर्षिभिरियं देवतामध्ये परिगणिता ।'

(सोद्वेगम्)···· 'किमिव म्लानेव क्लान्तेव रुद्धेव सहसा परिलक्ष्यत इयम् ?'

'अप्येवं प्रसुप्ताऽनागतां कांचिद्दुर्घटनां भाविनी···· स्वप्नरूपेण····?'

"आयुष्मति !—" विचिन्तयन्त्येवमनन्यमानसा सा राजदारिका सहसाऽबुध्यत विचारतंद्राया धीरगंभीरेण स्नेहसिक्तेन वार्द्धक्यप्रकंप्यमानेन संबोधनस्वरेण । अपश्यच्च स्वपुर एवोपस्थितं क्षीणचन्द्रिकोद्भासितधवलविरलजटं कृशगात्रं किंचिदवनतपूर्वकायं धौतधवलोत्तरीयाऽऽवृतोत्तमांगं धवलपक्ष्मललोचनं सिंदूररेखा-

भासुरभ्रूमध्यं चिरपरिचितं द्विजवरं गङ्गातनयं दृष्ट्वा सकौतुकया तां स्नपयन्तम् ।

"आयुष्मति !—" यावच्च बहुमानादुत्थातुं शिलापट्टात् प्रक्रमते तावदशृणोत् पुनरपि तामेव समाहितां वाणीम् । "चिरायिता वत्साऽस्मिन् निर्जने महानदीरोधसि सार्यशोभावलोकन-कौतुकवशादागतेति किंचिदुद्विग्न:, पिधाय कपाटे सिंधुमंदिरस्य, स्वयमिहाऽऽगतः । 'मातुः-क्रोड उपविष्टा कन्या चिरायत एवेति' जानदपि हि चिंतावैक्लव्यमन्वभूदेव स्नेहपरवशमेतन्मम मानसं जराविधुरस्य विप्रस्य....। आगतश्च वत्सां विचारतंद्रानिमग्नां दृष्ट्वाऽनिच्छन् जागरयितुं समयं प्रत्यपालयम् । अतिक्रामन्तं च तं पर्यालोच्याऽन्तेऽवशो वत्सामबोधयम्....। (सस्मितं) स्वभावत एव भावुका वत्सा । तत्रापीयं वयोऽवस्था....नवीना । ततः....स्वाभावि...."

"तात ....! अपीयं माता, सिंधुः, प्राणिनामस्माकमतीतमिव वर्तमानमिव भविष्यदपि जीवितं साक्षात्कर्तुं क्षमा ?"-सहसाऽपृच्छद्राजकन्या सा ।

"क्षमैव, वत्से ....! नास्त्यत्र संदेहलेशोऽपि-" प्रत्यवदत् क्षणमेकं विचारमग्नः स द्विजवरः । "अतएव- अस्माकं पुराणादिषु देवतारूपेण कीर्तिता....। परन्तु, वत्से ! महान् खलु कालातिपातः संजातः । तदागच्छ । प्रणम्य देवतां रात्रिविश्रामोत्सुकां प्रतिनिवर्तस्व स्वकटकम् । परिचितोऽपि तव निर्भीकेन स्वभावेनासामान्येन साहसेन पुरुषदुर्लभेन शस्त्रनैपुण्येन महाराजो दहरः कालेनैतावताप्यप्रत्यागतां स्वां प्रियां ज्येष्ठां दुहितरं वीक्ष्य चिंताम्लानस्त्वां मार्गयितु कदाचिदंगरक्षकानपि समादिशेत् । तदपनुद स्वजनकस्य चिंताभ्रम् ।"

वदंश्चैवं परिवर्तितपदः शनैः शनैः क्षीणचंद्रिकाप्रकाशितया पदव्या सिकतिलया मंदिराभिमुखो बभूव ।

अनुससार तं राजकन्या निःशब्दं, क्षणमेकं निपीय वृक्षांतरालदृश्यां प्रशांतां ज्योत्स्नोज्ज्वलजलां विस्तृतां रजतपट्टामिव दिर्वाकसां भासमानां सिंधुनदीं स्निग्धया दृशा ।

प्राप चाचिरादेव नातिदूरवर्तिनमश्र्वपाश्वत्थशाखा-सभारकृतछायतयाऽस्पष्टविशेषं सद्यःकृतधूपार्चनसौरभव्याप्तप्रान्तं पर्णान्तरालप्रविशच्चंद्रिकाचित्रितगोमयलिप्त-परिसर देवालयमेकम् ।

प्रक्षाल्य पादौ, प्रविश्य गर्भगृहं, सभक्तिभावं ध्यात्वा मंदघृतदीपप्रभाभासुरां स्फाटिकी सुरभिधूपवल्लरीपरिवेष्टितां म्लानसुमनोमालापरिवेष्टितां कुंकुमर्चचितललाटपट्टां भक्तजन-मनोहारिणी कल्याणकारिणीमभयदायिनी सिंधुदेवतामूर्ति प्रसन्नमुखी, नमयित्वा तच्चरणारविंदयोः कुसुमकुंकुमर्चचितयो सुमाल्यं मस्तकं, आचम्य तच्चरणामृतं, बहिरागत्य, समापृच्छ्य द्विजवरं, परिसर-प्रांतवर्तिनो महावृक्षस्यैकस्य मूले बद्धमागच्छन्ती स्वामिनीमवलोक्य भावोत्फुल्लाभ्यां नयनाभ्यां प्रहृष्टं ह्रेषारवमुखरं खुरेण दक्षिणेन भूमिमधीरतया खनन्तं स्व मुग्धाधवलमश्वं यावदारोहति तावद्ददर्शकं महाप्रमाणतुरगाधिरूढ व्यूढककटं कौतिकं तदेव स्थानं समुद्दिश्य सरभसमागच्छन्तम् ।

अश्वारूढैव, परिज्ञाय तस्मादवलोक्य भर्तृदारिकां सहसाऽश्वादवरूढात् विनयावनतात् महाराजाधिराजस्य दहरस्य तदवलोकनेच्छां तीव्रां, सैंधवं स्वं कटकमुद्दिश्याचालयदनुगम्यमाना तेनांगरक्षकेण निभाल्यमाना च सकौतुकं मंदिरद्वारस्थितेन तेन द्विजेनानभिज्ञेन तज्जीवनलताविध्वंसिनो भीषणस्य वात्याचक्रस्य प्राप्तप्रायस्य ।

आक्रम्य चानायासेनैवोच्चावचं गहनवृक्षराजिमध्ययायि-नमीपल्लक्ष्यविशेष तृणाच्छन्नं दुरध्वं, प्रापाचिरादेव करतलसमतले विस्तृते भूभागे क्लृप्तं सिंधुराजपटकं क्षीणचंद्रिकोद्भास्यमान-मध्यवर्ति-विशालपटवेश्म नीरवमेकदेशविश्रांतसैंधवम् ।

प्रविश्य च खड्गभीषणप्रहरिपरिरक्षितेन द्वारेणावरूढाऽ-श्वादेकाकिनी धीरगतिर्मंद-निशीथगंधवहस्पृश्यमानललितालका पितुः पटवेश्म प्राविशत् ।

अपश्यच्च तं प्रज्वलद्दीपदण्डप्रकाशितविशेषे महार्हाऽऽस्तरण-संछादितभूतले प्रलंबमानपुष्पमालासुरभिते कक्षे गगननील-कौशेयकाऽऽवृतायामासन्द्यां समुपविष्टं महाप्रमाणं वृषस्कन्धं पार्श्ववर्तिप्रदीपप्रभाप्रभासितरजतधवलविरलकेशं श्रांतक्लांतमुखमुद्रं निद्राऽऽवेगारक्तोच्छूननयनमासनोपविष्टेन धीसचिवेन ब्रह्मदत्तेन वाहिनीपतिना वीरभद्रेण सांधिविग्रहिकेण वृद्धेन सुमतिना च सह मंद्रं मंद्रं संलपन्तम् ।

अवलोक्य तां प्रविशन्तीं पुरुषप्रमाणां धीरां मूर्तिमती-मिवाऽऽत्मविश्वासशक्ति सहसा सस्मितमुखमुद्रेण प्रत्यागतयौवनेनेव प्रवृद्धोत्साहसंपदेव तेन सस्नेहं स्वसमीप एवोपवेशिता च यावन्मध्यरात्रे तादृशस्य विचारविनिमयस्य विषयं स्वात्मनैव तर्कयति कौतूहलाऽऽविष्टा तावदशृणोत्तस्य वार्द्धक्यप्रकंप्यमानामपि राजाधिकारगुर्वी वाणीं— 'प्रवेशय तं द्वारपाल !' इति ।

अद्राक्षीच्च प्रतीहारेण तस्मिन्नेव क्षणे प्रवेशितमेकं प्रौढावस्थं सार्थवाहं सैंधवं धूलिधूसरितवेषं श्मश्रुलमुखम् । 'कोऽयम्'— इति जिज्ञासामुखरां दृष्टिं व्यापारयन्ती च पितुर्मुखेऽ-शृणोत्तस्य सस्मितं तामेव निभालयतो वाणीं— "निर्विवादं तव वेषपरिवर्तनकौशलं, वार्तायन, निर्विवादम्…। तीक्ष्णदृष्टिः कुशाग्रमतिरस्माकं सूर्यदेव्यपि तव यथार्थं स्वरूपं प्रत्यभिज्ञातुं नाशकत्…। तत् कः खलु विवदेत तव वेषपरिवर्तननैपुण्यमितः परम्…? अयि…! अयमस्माकं भद्रमुखो गूढपुरुषः । तवैव त्वनुरोधमनुसरद्भिरस्माभिः परिज्ञातु वास्तविकीं परिस्थितिं प्रेषित आसीदतीत आषाढमासे देवलनगरीं तुरुष्कप्रांताधिपस्याभिमानिनोऽ-लूहज्जाजस्याऽऽक्रोशदुःसहां तां विज्ञप्तिं विचारयद्भिः । निशामुख एवायमद्य समुपस्थितः । समुत्सुक इव लक्षितो वृत्तांतकथनाय । अस्माभिस्तु समादिष्टः समयप्रतिपालनाय ।…(सहासं) अस्माभिः पर्यालोचितं— श्रोष्यामस्तावदस्य वार्त्तां राजनीतिनिपुणया विचक्षणया पितृभारवहनतत्परया पुत्रतुल्यया ज्येष्ठया दुहित्रा सहैव । अस्माकं

परमविश्वासार्हा एते नीरक्षीरविवेकविदग्धा मंत्रिणोऽपि भाग्यवशादत्र कार्यान्तरेण संप्राप्ताः....। तन्निवेदय, भद्रमुख, यत्त्वया कृतवेषपरिवर्तनातीतं मासत्रयं सिंधुसरिन्मुखप्रदेशे मूलस्थानवणिग्दूतछद्मना निवसताऽधिगतं सत्यम्....। अप्यस्ति तस्य म्लेच्छप्रांताधिपस्य विज्ञप्तौ किंचित् सत्यम्....? कियती भावोदग्राऽऽसीत् तस्य सा विज्ञप्तिः सुशब्दिताऽऽपि ।"

"महाराजाधिराज ! स्वामिन आज्ञा शिरसि कृत्वा धृतसाधारणवेषेण देवलनगर्यां जनसंकुलासु पण्यवीथिकासु देशदेशान्तरागतेषु विविधभाषाभाषिषु सार्थवाहसंघेषु च स्वैरमिव परिभ्रमता, सिंधुसागरतीरवर्तिनीषु सिकतिलासु मत्स्यगंधासु नाविकजनवसतिषु यवनदेशेन सह वाणिज्यसंबंधं स्थापयितुमुत्सुकोत्सुकस्य मूलस्थानवासिनो धनाढ्यस्य सांयात्रिकविशेषस्य दूतमिषेण वारं वारं गच्छता, कणशः क्रमशश्च या वार्ता समधिगता तां स्वामिनश्चरणयोः सादरं निवेदयितु प्रगल्भतेऽयं दासानुदासः ।"

"स्वामिन् ! सत्यमेव विगते चैत्रमासे महाप्रमाणस्तुरुष्काणामेकः पोतो दमिश्कनामधेयो बहुश्रृङ्गः सिंहलद्वीपाधिपतिना मानवर्मदेवात्मजेन महाराजेनाग्रबोधिना तुरुष्कप्रांताधिपायोपायनीकृतान् रत्नखचितान् सौवर्णान् बहुमूल्यानलंकारान् तुरुष्कप्रांताय वहन्, मध्ये सिंधुसागरं, साहसिकैः कैश्चित् सूचिभेद्ये तमसि सहसा समाक्रांतः, हत्वा सर्वानपि यवननाविकान् स्ववशे कृतः, अज्ञातं च स्थलं नीतः ।"

"एवं– मकरांकप्रदेशप्रशासकस्य हारुनसुतस्य मुहम्मदस्य माध्यमेन स्वामिनश्चरणारविंदयोः प्राप्तायां तुरुष्कप्रांताधिपतेर्विज्ञप्तौ सत्यस्यांशो विद्यते ।"

"अंश एव ?"– अपृच्छत् सिंधुराजः किंचिदाकुंचितलोचनः ।

"अंश एव, स्वामिन् !"– प्रत्यवदत् सः गूढः पुरुषः। "मया हि नाविकसंलापेषु परिलक्षितं यत् तस्य साहसिकस्य चेष्टितस्य मूलं उच्छृङ्खला धनलोलुपता नासीत् प्रधानकारणीभूता, अपि तु– केरलदेशीयानां धीवराणां केषांचित् न्याय्या दुर्दमनीयाऽऽत्मसंमानभावना।"

केरलदेशीयानां धीवराणामात्मसंमानभावना....?"– अपृच्छद्धीराचिवः कौतूहलाक्रांतः।

"आम्!" प्रत्युवाच वार्त्तायिनः। "मया हि विज्ञातं– सिंहलद्वीपात् प्रस्थितो म्लेच्छानां स पोतो यदाऽपराह्णसमये पेयजलसंग्रहार्थं केरलराज्यतीरवर्तिनः प्राकृतिकपत्तनस्य मुचिरपुरस्य जलसीमायां प्रविवेश तदा तत्रत्या धीवराणां बाला बालिकाश्च स्वस्वप्लवारूढाः नारिकेलादिफलविक्रयार्थं तं यथाभ्यासं परिवव्रुः। आरुह्य च तं मर्कटचापलेन.... सहासाः जल्पाकाः परिहासमुखरान् यवनान् नाविकान् स्वस्वपण्यक्रयार्थमभ्यर्थयामासुः।"

"तदन्यतमा श्यामलैका सवंगीलतेव तन्वंगी कर्पटाऽऽवद्धप्रोच्छलदुत्तुंगस्तनमंडला हासोत्फुल्लनयनेंदीवरा सुदती धीवरयुवती पूगफलविक्रयार्थं स्वैरं भ्रमंती गुणवृक्षकावलंबिना यवनेनैकेन पोतवाहेन प्रौढवयस्केनाऽऽरक्तनयनेन सुहृन्मण्डलमध्यवर्तिनाऽऽहूता, तत्क्रय्यफलपरीक्षणव्याजेन प्रसारितहस्तेन कुचाग्रे सहासं च स्पृष्टा।"

"जानात्येव स्वामी यवनानां नीतिसंपदम्।"

"सा तु तत्तस्य कुचेष्टितमवलोक्य प्रज्वलितनेत्रा कोपातिरेककंपमानतनुवपुस्तमुच्चैराक्रोष्टुमारभत,.... सर्वे च तत्रत्या धीवराः क्षणाभ्यन्तर एव तत्र समागता विदितवृत्तांतास्तमसह्यैः दुःशब्दैः प्रताडयितुम्।"

"स्वसुहृत्समक्षमेवमपमान्यमानमात्मानमनुभूय क्रोधताम्रः प्रस्फुरल्लोहितश्मश्रुस्तीक्ष्णदृष्टिः सोऽपि बहुगर्ह्य-वाक् सहसोत्क्षिप्य परिघातनं समीपस्थं मुखरतमं बलिष्ठं धीवरयुवानमेकं प्रहर्तुमुद्यतो

बभूव। दैववशाच्चाकर्ण्य कोलाहलं तत्राऽऽगतेन कर्णधारेण विधृतहस्तः सः कथमपि व्यरम्यतातिप्रसंगात्। अनुभववृद्धै श्चिर-परिचितैः नाविकैश्चापरैः कृतककोपमुत्सारितः स धीवरसमुदायोऽपि क्षुब्धो विहाय पोतं तीरवर्तिषु स्वस्वपर्णकुटीरेषु व्यलीयत ।"

"व्यराजत च क्षुब्धा शांतिस्तस्मिन् सर्वदा कोलाहलाकुले पत्तने ततः परम् ।"

'अतीतगर्ते इव स दुष्प्रसंगोऽन्तरधत्त ।....परंतु पादपीडितस्य विषधरस्येव मनोगतमाततायिन उपमर्दितस्य सर्वथाऽनाकलनीयमेव ।'

"तेन ह्यन्तर्ज्वलता यवनेनापमानप्रतिचिकीर्षया कदा स्वसुहृद आदावुदासीना अपि साहाय्यदानायानुकूलीकृताः, कदा च सशस्त्राणां तेषां सहयोगेन कज्जलनिभेऽधतमसे निद्रावश्यतां यातेषु पोतकर्णधारादिषु पोतान्निःशब्दमवतीर्य तस्या अभागिन्या धीवरतरुण्याः कुटीरं प्रविश्य निद्राजडौ वृद्धौ तत्पितरौ छुरिकाया एकेनैव प्रहारेण व्यापाद्य सहसा प्रबुद्धा भयातिरेकविस्फारितनयना विलुप्तवागवसन्नगात्रा बलादपहृता, पोतस्य भांडारगृहाणामन्तस्तल-वर्तिनामन्यतमेऽत्यन्तमुपेक्षिते विनिगडितहस्तपादं प्रक्षिप्ता.... केनापि नालक्षि ।"

"अहो नैर्घृण्यमत्याचारिणः–" प्राहास्फुटाक्षरं क्रोधारक्ता सूर्यदेवी प्रस्फुरन्नासापुटा ।

"विधिलिखितवशाद्वा काकतालीयाद्वा– न जाने कस्मात् कारणात्– तस्या एव कालरात्रेरंतिमे प्रहरे कर्णधारेण समादिष्टः सः पोतोऽपि कृतपेयजलसंग्रहो विहाय तिमिराच्छन्नं प्रसुप्तं तीरं यात्राया अग्रिमं चरणं प्रारभत.... वहन्– अजानन्नेव– तां हतभाग्यां मूर्च्छितप्रायां धीवरकन्यकां स्वाभ्यंतरे ।"

"यदा तु प्रातः प्रबुद्धास्ते कैवर्तास्तं नैशमत्याचारं साक्षादकुर्वन् तदाऽनभ्रवज्रपातमेव ते नूनमन्वभवन् । स्वाभिमान-

धनास्त आदौ हृतबुद्धयः शोघ्रमेव त्रोधताम्रनयनाः समुपेक्ष्य दैनंदिनं कार्यजातं प्रतिशोधोपायानेव तांस्तान् पर्यालोचयन् । विशेषतो युवानः । प्रहरमात्रानंतरमेव च ते– सप्तविंशतिः– कृतगूढमंत्रणा अनापृच्छ्यैव ग्रामवृद्धान् वसतेस्तस्या निर्गतास्तरणिमेकशृङ्गिणीं नागवदनामग्रमंदिरां समारुह्य प्रजवनां पोतं तमनुसर्तुमारभन्त प्रतिहिंसाज्वलन्नयना पाषाणकठोरमुखमुद्राः ।"

"नालभन्त तु योग्यमवसरं प्रतीघाताय– प्राप्याऽपि तं पोतं नयनपथे तदहरेव सायंप्रकाशोद्भासितहरितपत्तावंशुकं वातापूरित-पंचशृंगं मंदं मंदमुत्तरस्यां दिशि प्रवसन्तम् ।"

"नालभन्त तं देवलपत्तनप्रवेशात् प्राक् । यदा तु ते तं विध्वंसितविला नागा अपकारिणमिवाहोरात्रमनुसरन्तो देवलजल-सीमायां प्राविशन् तदा ते बेलावर्तिदासवसतिषु जातिबांधवैः सहाहर्निशं निर्धूमं ज्वलन्ती स्वां व्यथां भुंजानास्तैज्वकल्पितां साहाय्यसंपदं प्राप्नुवन् । प्रवृद्धसामर्थ्याश्चापरेद्युरेवास्तं गच्छति दिनकरे विहाय देवलजलसीमां पश्चिमाभिमुखं यवनसागराय कृतप्रस्थानं तं यवनपोतं सुदूरादनुसरन्तः निशीथे प्रोषितनक्षत्रचन्द्रे परिपक्वपापफलरसमिव वर्षति गगनकटाहे शनैः शनैरुपेत्य तं निःशब्दमारुरुहुः । मार्जारपादं पोते सर्वत्र प्रसृताः सर्वानपि यवननाविकानुच्चावचान् कालमहाभुजंगदष्टान् निद्राभिभूतान् पिपासातुराभिः निशिताभिः छुरिकाभिर्वक्षसि विदारयामासुः । वशे कृत्वा च पोतं तं दक्षिणाभिमुखं व्यापारयामासुः···· वहंतो भांडारगृह उपलब्धं शवं भगिन्याः निर्वसनं हिंस्रमूषकलुंचितस्तनमुग्रगंधि राजतांगुलीयकमात्रप्रत्यभिज्ञातम्" ।

"साहाय्यकारिणः संघवान् जातिबांधवान् मध्येसागर-मवतार्य गृहगमनाय, स्वयं केरलतीरमुद्दिश्य तमस्विन्यां तस्यां कृतप्रस्थानाः शोकमूकास्ते कैवर्ताः सिंधुसागरे वैदूर्यरससंनिभे विलोपमेवाऽऽत्यंतिकमगच्छन् । न हि ते तदनंतरं कस्यचिदपि कुत्राऽपि कदाचिदपि कर्णपथमक्षिपथं वाऽव्रातरन् ।"

"वृत्तांतोऽप्ययं मया देवलतीरप्रकीर्णासु तासु तासु धीवरवसतिषु परिभ्रमता सैंधवानां धीवराणां सकाशादेव कणशोऽधिगतः, निवेदितश्च स्वामिचरणयोः–" उपसंजहार शुष्कतालु स गूढः पुरुषः।

प्रससार च तस्मिन् कक्षे दुःखभारभुग्ना निःशब्दता···· निरोधयन्तीव श्वसनं युगदीर्घा।

प्रज्वलद्दीपप्रभाऽपि निस्तेजस्केव बभूव।···· सदागतिश्चागतिकः।

प्रबोधयन्निवाऽऽत्मानं कतिपयक्षणानन्तरं महता प्रयासेन दुःखतप्तायास्तस्याः, सिंधुराजः क्षणमेकं दृष्टिं चिक्षेप स्वसमीप एवोपविष्टायाः निःशब्दाया दुहितुः स्फटिकोत्कीर्ण इव निश्चले प्रदीपप्रभारंजिते दृढमुद्रितौष्ठपुटे निवातनिष्कंपप्रदीपविनिगडितनयनआनने। अपारयंश्चावगाहितुं तस्या उद्वेल्लितभावसागरमन्तःकरणं, व्याकुल इव तां कथमपि प्रकृतिं स्वां धीरगभीरामापादयितुं, प्रेरयामास क्लांते लोचने सांधिविग्रहिकस्य दिशि।

विभावयन्निव स्वामिनो मनोगतं स मंद्रस्वरं जगाद– "नास्त्येतादृशस्य निर्घृणस्यापराधस्य सर्वथा पर्याप्तो दण्डः। तथापि दंडं यावच्छक्यं लंभिता एव ते नराधमास्तैः शूरैः कैवर्तैः। न च किंचित् कर्तव्यं मानवशक्यमवशिष्यते····। तत् सूचयतु स्वामी स्वात्मनोऽसमर्थतां किंचिदपि कर्तुमस्मिन् विषये– तस्य तुरुष्कप्रांताधिपस्य विज्ञप्तिं तां प्रत्युत्तरयन्।"

"परतु– एतादृशाः पैशाचिका अपराधा यवनैरेतैर्व्यापारनिमित्तेन सिंधुसागरे भारतीये च महासागरे लंकाद्वीपपर्यन्तं यथेच्छं परिभ्रमद्भिः भारतवर्षस्य पश्चिमतीरवर्तिषु तेषु तेषु पत्तनेषु क्रयविक्रयार्थं प्रविशद्भिः सकृत् क्रियन्त– इति नाविकेभ्यो मया परिज्ञातम्"– आह स गूढः पुरुषः।

"स्वामिन् !"– मंद्रस्वरं जगाद धीसचिवः, "भारतीयैरस्माभिरस्याः पुण्यभुवोऽपारैश्वर्यस्याति कर्णोपकर्णिकया श्रुत्वा विदेशेभ्यो– विजित्य दुर्जेयप्रायान् विघ्नान्– समापतन्तोऽत्रत्याया अगाधायाः संपदोंऽशं यावच्छक्यं व्यापारमिषेण चूषन्तः परकीयाः रोमकसदृशाः सोढा···· आरामिकैर्विकचविविधकुसुमामोदजड आरामे भ्रमरा इव । असंख्या अत्रैव निवस्तुमिच्छन्तः पारसिकसदृशाः परकीया आत्मसात्कृताः । बहवश्च लोभहिंस्राः हूणसदृशा आक्रामका बर्बराः परावर्तिताः । परंतु– सर्वथा विलक्षणा एव एते यवनाः । अननुभूतप्राया खल्वेषामहंमन्यता पराभिभविष्णुता दुर्दमनीयता····। तत्, स्वामिन्, सत्येव समय एते प्रतिरोद्धव्याः । अन्यथा– विषाला एते प्रवृद्धसामर्थ्या महान्तमनर्थमापादयिष्यन्ति ।"

"निवेदयतु तातः निखिलमिमं करुणदारुणं वृत्तान्तं तस्मै तुरुष्कप्रांताधिपाय"– सहसा जगाद देवलदेवी । "स्पष्टाक्षरं च कथयतु यद्यदि तद्देशीया नाविका एतादृशेभ्यः पाशवेभ्योऽपराधेभ्यः क्षणादेतस्मादेव न विरमेयुस्तर्हि त एतद्देशीयस्य प्राणदंडस्य भागिनो भवेयुस्तस्य सार्थवाहाश्च सिंधुसागरप्रवेशाद्वंचिताः ।"

"परंतु···· परंतु····" प्रारभत समुद्विग्नः सिंधुराजः ।

"अलमतिविचिकित्सया····। यथाऽऽह तातः– अंकुरावस्थायामेवानुत्खातेयं विषमयी प्रवृत्तिः शीघ्रमेव सर्वामप्यस्माकं मातृभुवं निरुच्छ्वासमभिभविष्यति"– दृढं प्रत्युवाच सिंधुकन्या, निश्चक्राम च वात्येव तस्मान्मंत्रणाकक्षात् ।

समर्थयन्निवेमां तस्या भविष्यद्वाणीं– सहसा समुदभवत् कटकद्वारप्रदेशे तीक्ष्णमधुरस्तूर्यध्वनिः ब्राह्मकालसंसूचको, विदारयन्निव प्रगाढां भारतीयानामवबोधनिद्रां, प्रबोधयन्निवार्यान् स्वकर्तव्यपालनाय ।

····प्रत्यागताऽप्यपरेद्युः राजधानीमालोरपुरीं स्वपित्रा सह, सिंधुराजकन्या स्वप्ननिवेदितं करुणभीषणं तं वृत्तान्तं क्षणमेकमपि विस्मर्तुं न प्राभवत् ।

समवयस्काभिः स्मितवदनाभिः सखीभिः सह जल्पन्त्यपि किमपि किमपि परिहासमधुरं रहसि प्रियंगुलताऽऽच्छादितेऽन्त.पुरारामैकदेशवर्तिनि निविडे लताकुंजे, सस्नेहै. परमविश्वासास्पदैरनुभववृद्धै रुच्चाधिकारिभिः सह विचारयन्त्यपि तानि तानि राज्यकार्याणि राजमन्त्रालये, विकसद्यौवनेन परिपुष्यद्गात्रेण किंचिदारजमानलोचनेन प्रस्फुरदहृभावाऽऽकर्षकेण योद्धृवेयरमणीयाऽऽकृतिना बंधुना जयसिंहेनाश्वारोहिणा सह विविधां शस्त्रविद्यामभ्यस्यन्त्यपि नगरीमहाप्राकारबहिर्वर्तिनि विस्तृते राजसेनानिवेशे, कैशोर्य एव चिरायमाणया कलिकयेव मधुमधुरसमीरेणास्पृष्टया बालिशया तत्प्रतिकृत्येव कौतुकिना विधात्रा स्वैरं निर्मितया तामेव सर्वथाऽनुकुर्वत्या तामेव सदाऽनुसरन्त्या कनिष्ठया भगिन्या परिमलदेव्या परिमलहृद्यया सह क्रीडन्त्यपि स्फटिकधवले शिशिरकरशीतलेऽन्तःपुरांगणे, आन्त.पुरिककार्यकलापसंचालनव्यग्रया विविधकुलाचारपरिपालनव्यापृतयाऽनतिप्रौढयाऽपि रजतछटाविच्छुरितघनकेशपाशया क्लाम्यन्नेत्रोत्पलया कृशगात्र्या जनन्या सह तास्ताः कथाः ज्येष्ठापत्योचितया प्रौढ्या कुर्वत्यपि परिचारिकाकुलाकुलेऽन्त.पुरे, यथापरिपाटि राज्यकार्यव्यग्रेणाप्यापातशांतेनाप्युत्प्रेक्षमाणेनेव कामप्यापदमशांतस्वान्तेन धवलतरकेशेन म्लानतरमुखमुद्रेण जनकेन सह स्निग्ध व्यवहरन्त्यपि विशाले तद्विश्रामकक्षे, विमृशन्त्यपि तेन सह तानि तानि कार्याणि मंत्रालये— अविदतीव तस्योत्तेजितां मनोऽवस्थां···· प्रतिक्षणं तस्या एव हतभागिन्या धीवरकन्याया विषयेऽचिन्तयत् ।

अचिन्तयच्च तस्यां निशायामनुभवविदग्धेन धीसचिवेन संसूचितां यावती विपदम् ।

अपृच्छच्चैकदाऽऽत्मानमपि निष्कारणमेवास्वस्थमुत्तेजितं चानुभवन्ती, यदृच्छयेव प्रासादं गता तस्य, गतेऽस्त भगवति मरीचिमालिनि, सबहुमानं तेनोपवेशिता चाऽऽसन्द्यां सांध्यधूपसुवासिताभ्यन्तरे बृहत्कक्षे, तं तस्या विषये ।

"आयुष्मति !" प्रत्याह स वृद्धः पुरुषप्रमाणाद्वातायनाद् बहिर्दृष्टिं विचारमग्नां व्यापारयन्, गगने च पौरस्त्येऽचिरोदितां तारकामेकामन्यमनस्कतया निध्यायन्, "इयं विपत्तिरेतेष्वशीति-संवत्सरेष्वेवाऽऽविर्भवन्ती क्रमश उग्रतरीभवन्ती च मया परिलक्षिता।"

"स्मराम्यधुनाऽपि····। तदाऽहमष्टवर्षीयो बाल एवासम्····। प्रजविनौकाऽऽरूढैर्यवनैः सिन्धुसागरे बलात् प्रविष्टैस्तंतुननामकं तंतुनदुष्प्रवेश्यजलं पत्तनं भारतवर्षस्य पश्चिमतीरे वर्तमानं प्रसह्याऽऽक्रान्तमासीत्तदा। प्राप्य च तत्र साफल्यं प्रवृद्धोत्साहैस्तदनंतरमेव वभ्रुवासनामकं गुर्जरपत्तनं लुंठितमासीत्। अस्माकं देवलपत्तनं च।"

"मन्ये- भारतवर्षं दिगन्तविश्रुतसंपदं विजेतुमातुरैर्यवनैरेतैरस्माकं पुण्यभूमेः पौरस्त्यः रक्षकोऽयं सिंधुप्रदेशः साफल्यप्राप्तौ प्रधानप्रत्यवायत्वेनाऽऽदित एव परिगणितः। अतएव- तैः जलमार्गेणैव स्थलमार्गेणाऽपि वारं वारं समाक्रान्तः"।

"श्रुतमेव स्याद्वत्सया बहुश्रुतया- पंचाशद्वर्षपूर्वं तैरस्माकं नगाधिराजपादचुंबिनी राज्यसीमा कथं प्रसह्य पीडिताऽऽसीदिति, तत्रत्यानां शूराणां स्वामिभक्तानां निवासिनां किकानानां प्राणांतिकः प्रतिरोधस्तां तेषां कुचेष्टां कथं विफलामकरोदिति च।"

"परन्तु- गुणाः···· शत्रूणामपि···· श्लाघ्या एव। एतेन वैफल्येन किंचिदप्यन्यूनीभूतोत्साहसंपद्भिस्तैस्तदनंतरमपि पट्कृत्वः सीमा अस्माकमुल्लंघितुं चेष्टितम्। सफलीभूतं चान्तेऽस्मद्राज्य-सीमावर्तिनो मकरांकप्रदेशस्य विजये"।

"एवं तर्हि- अर्थनीत्यनुसारमेते यवना अस्माकं प्राकृतिकाः शत्रवः", अवदत् सा राजदारिका। उदगृणाच्च सहसा- "मकरांक-प्रदेशादेव तु अपलायितो विद्रोही कश्चिद्यवनसामंतः समुपजात-जीवितशंकः पंचशतसंख्याकैः स्वसैनिकैः सह तातचरणकमलयोः छायायां शरण्यायां निलीन आसीत् कतिपयसंवत्सरपूर्वम्"।

"आम् !"– प्रत्यवदत् स वृद्धः । "राजधर्ममनुसृत्यैव स्वामी शरणागताय तस्मै यवनसामंतायाऽऽश्रयमददात् । परंतु– अनभिज्ञोऽस्माकमुत्तमानामार्याणां राजनीतिनियमानां···· अश्रद्दधानो वा तेषु···· दमिश्काधिपः स्वामिनस्तस्मिन् सद्व्यवहारे कुटिलतामेवाजिघ्रत् । अदर्शयच्च कालुष्यं मनसस्ततःपरम् ।"

"सत्यमेव तातो मन्यते– विपदियमस्माकं पुण्यभूमिं ग्रसिष्यत इति ?" अपृच्छत् सिंधुराजदुहिता ।

"अनागतं····केन खलु दृष्टम् ?" प्रत्यवदत् स धीरमतिर्वृद्धः । "एकं तु वैशिष्ट्यमस्या विपदोऽभिभवति मम मानसमनेकदा यक्षप्रश्नमिममेव पर्यालोचयतः···· अस्याः सातत्यं····, अस्या अविच्छिन्नत्वम् ।···· या या खलु विपदोऽस्माकं भारतभुवः क्षितिजेऽतीते काले समुदभवन्, वात्या इव च तामपीडयन्····, ता···· अलक्षेन्द्रवाहिनीरूपा वा···· अन्या वा····सर्वा अपि तास्तात्कालिमय एवासन्···· आपातभयंकरा अवसानक्षीणाश्च । न खलु विपदियं तथा । आ समुद्भवात् संततावेगा मयाऽलक्षि इयम् । प्रत्युत प्रतिदिनं वर्द्धमानाऽऽवेगा । एभिः कतिपयैरेव संवत्सरैरनया महान् भूभागोऽभिभूतः । अनेकानि च राष्ट्राणि स्ववशे कृतानि । अस्या एतत् सातत्यं ····एतदविच्छिन्नं वर्द्धिष्णुत्वमेव मामुद्वेजयति ।"

गदश्चैवैमेव व्यग्रस्वांतश्चिरमास्त···· अधोदृष्ट्या मंददीपप्रभालोकितमुखमुद्रया राजकन्यया निःशब्दं श्रूयमाणः ।

एवं साक्षात्कृत्य विहंगमदृष्ट्या यथार्थ स्वरूपं यवनविपदस्तस्मात् पितृतुल्यात् सचिवोत्तमात्, संभाव्य च तस्याः प्रस्फोटं भारतभूमौ, सिंधुराजकन्यायाः सा अस्वस्थता चिंताकालुष्यमेव परिदधौ । तिरौदधौ चात्यन्तं स्वाभाविकं चित्तप्रसादम् ।

रात्रौ, तिरोहितप्रायनैशप्रदीपमंदालोकाऽऽलोकिते प्रसरद्धूपवल्लरीसुवासिते प्रशांते स्वे शयनकक्षे, शतदलदलकोमलायां सुधाफेनधवलायां सुगंधितप्रच्छादनपटायां शय्यायां विस्तृतायां निप ि

निद्रासागरेऽगाधे प्रशमयितुं चितादाहं प्रयतमानाऽपि नालभत साफल्यं चिराय।

क्षणमेकमपि न साऽन्वशोचदात्मनस्तद्दृढं मतं यत् समादरयता सिंधुराजेन तुरुष्कप्रांताधिपस्य सः सुशब्दितोऽपि व्यंग्यकठोरोऽनुरोधोऽन्ते तिरस्कृत आसीत्। सर्वथा तिरस्करणीय एवासीत् सः····। कः खलु– ऋते जीवन्मृतात्– शासकस्तादृश-मनुरोधं स्वीकुर्वीत? प्रताडनाऽपि सा सर्वथा समुचितैवाऽऽसीत्। व्यापारार्थमादौ स्मितमधुरं, दृढीभूतायां चाऽऽधारभूमौ तथा कुत्सितं, व्यवहरन्तस्ते म्लेच्छा यदि नार्हाः प्रताडनस्य– तर्हि किं संमाननस्य?

'किं खलु विधास्यति स अल् हज्जाजः, तच्छन्दानुवर्ती तस्य स्वामी च'– अयमेव विचारस्तां तथाऽशांतस्वांतामकरोत्।

याममात्रावशिष्टायां तस्यां त्रियामायां मृदुलरल्लकाऽऽवृतसर्वांगं निमीलितनयनारविंदं मंदश्वासं शिथिलितगात्रं शय्यायां निलीनां तां···· निद्रा···· वयमानेव···· कथमपि स्वांके समगृह्णीत।

तदंकविश्रांताऽपि सा चितामुक्तिमैकान्तिकीं तु नालभत। अपीड्यत एवास्पष्टैरपि क्षीणैरपि समुद्वेजकैर्विचारैरसंबद्धप्रायैः।

समवित्त च सहसा सुस्पष्टमात्मानमेकाकिनं प्रशांतवाहिन्याः सिंधुवाहिन्या रोधसि सिकतिले विश्राम्यन्तमवलोकयन्तं च निर्निमेषं दीप्तिमस्तंगतस्य दिनकरस्य सर्वत्र विच्छुरितां सर्वां सृष्टिं प्रातिभासिकीमिव मनोरमां कुर्वतीं दिव्याम्। अन्वभवच्च शिशिरं सायंगंधवहं सहसोष्णीभवन्तं दुर्गंधदुःसहम्। अपश्यच्च निरुद्धश्वासमित-स्ततोऽवलोकयंती पश्चिमायामाशायामारक्तमूर्ध्वायां नीलं पौरस्त्यायां च कृष्टं गगनं रक्तरक्तेन भीषणेन वर्णेन सजवमाक्रम्यमाणम्। अद्राक्षीच्च विस्फारितनेत्रमूर्ध्वमवलोकयन्ती सुरवर्त्मनि गीतपंक्ति-मिव कस्यचिद्दिव्यस्य महाकवेर्डयमानां गृहगमनसमुत्सुकां श्वेतखग-पंक्तिं दीर्घदीर्घां सहसा भ्रश्यन्तीमधःपतन्तीं च सरितः प्रवाहे

निष्प्राणाम् । अवालोकयच्च दुःखजडा समग्रमपि सिंधुनदीप्रवाहं, तत्क्षणपर्यन्तं निर्मलं प्रवहन्तं, सहसोत्तप्ताय प्रवाहमिव रक्तीभवन्तम् । अद्राक्षीच्च विस्मयमूढा तदुभयतीरवृक्षपंक्ति विराजमानां प्रत्यागत-पतत्रिकोलाहलाकुलितां 'सुसंध्यं···· सुसंध्यम्'– इति शब्दायमानामिव महावृक्षराजिं दिगन्तचुंबिनीं महाविषधरश्वासस्पृष्टामिव सहसा निर्धूमं निर्ज्वालं ज्वलन्तीम् । अश्रृणोच्च सहसा प्रभंजनजवनानां तुरगसहस्राणां खुररवमिवाहकारदुःसह कर्णविदारकम् ।

प्रयतमाना चाऽऽक्रदितु जयसिंहमकस्मादवलोकयामासाऽऽत्मानं स्वे शयनकक्ष एव शय्याया शयितं, प्रस्विद्यत्सर्वांगं, कंपमानगात्रं, शुष्यन्मुख,···· समुत्तीर्णं दुःस्वप्नादेकस्मात् ।

शुश्राव च तत्क्षणमेव राजप्रासादमहाद्वारस्थितेन प्रहर-केणाऽऽहन्यमानाया विशालायाः कांस्यघंटाया ध्वनिलहरीं ब्राह्मकालप्रारंभसंसूचिकां निःशब्दे वातावरणे प्रसरन्तीम् ।

उन्निद्रा च ततः प्रभृति, पर्यालोच्य बहु स्वात्मनैव, विनिश्चित्येव किमपि, परित्यज्य शय्यां, परिसमाप्य दैनिकं क्रियाकलापं, प्रहरमात्रजीर्णे दिवसे, कृताश्वारोहवेषाऽनापृच्छ्यैव कमपि कन्यान्तःपुरान्निर्गता, प्रासादपरिसरैकदेशवर्तिनः राजकीय-स्याश्वगोष्ठस्य प्रधानेन समापतन्ती तां दृष्ट्वा सहसा प्रधावितेन ससंभ्रममुपस्थापितमधोरमश्वं स्वमारुह्यैकाकिनी राजप्रासादा-दुदीच्येन महाद्वारेण निर्गता····आलोकनगरीवहिर्यायिना निर्जनप्रायेण गन्तुमारभत मार्गेण ।

प्राप च, गगनमध्यमध्यारूढेऽप्यचंडकिरणे हैमंतिके चडकिरणे, मंदसमीरलहरीप्रकंप्यमानपर्णसंभारस्य दिगन्तराल-प्रसृतशाखावितानस्य निःशब्दस्य कदंबस्यैकस्य निबिडायां छायायां विराजमानं मृण्मयं गोमयोपलिप्तमुटजमेकम् ।

वध्द्वा च तुरगमेकदेशवर्तिनः जरत्पर्णसंभारस्य निंबतरोर्मूले तन्निःशब्दमुपससर्प । किंचिन्नमितमस्तका, उटजाभ्यन्तरे प्रविष्टा,

समवलोक्य तच्छून्यं किंचिद्विस्मिता च क्षणमेकं विचार्य ततो निर्गता, उटजदक्षिणवाहिन्याः निबिडवृक्षाच्छन्नतया प्रदेशस्याऽपरिलक्ष्यमाण-प्रवाहाया अपि शिशिरतरजलगंधवहगंधवहसंसूच्यमानायाः सिंधोस्तीरम् ।

ददर्श च तत्र, नातिदूर एव, प्रोन्नततटप्ररूढस्याभ्रंकपशाखा-शिखरस्य भूतलचुंबिजटाजूटस्य 'निष्कूजस्तिमितस्य' निष्कंपदलस्य···· समाधिलीनस्येव···· औदुंबरस्य महावृक्षस्यैकस्य मूले सुखमुपविष्टं गौरवर्णं पलितजटासंभारं धवलश्मश्रुजालं श्वेतरोमशवक्षसमवदात-परिधानं, मूर्तिमिव स्फाटिकीं कस्यचिन्महर्षेः सत्ययुगीनस्य भासमानं, जीवात्मानमिव कमपि ब्रह्मलोकवासिनं दिदृक्षया मातुः सिंधोः परिगृह्य पार्थिवं शरीरं मर्त्यलोकेऽवतीर्णं तद्दर्शने च लीनमानसं, सत्त्वगुणमिवाऽऽश्रित्य विग्रहं पवित्रायाः महानद्यास्तीरे विश्राम्यन्तं, महाप्रमाणं तपःकृशकायमतिवृद्धं प्रशांतं महर्षिं चिदानंदं नदीसंमुखमवलोकयन्तमिव निर्निमेषया दृष्ट्याऽधःप्रवहन्तं नृत्यत्सूर्यप्रभं जलप्रवाहम् ।

क्षणमेकं निरुद्धगतिः, पर्यालोच्य किमपि स्वात्मनैव, शांतमुखमुद्रा, दुहितेव पितरं विचारमग्नं, निःशंकमुपसृत्य तं विनीतस्वरा नामग्राहं प्रणनाम ।

निशम्य तस्या मंद्रमभिवादन-स्वरं व्यावर्तिताऽऽननः सहसा प्रस्फुटितस्मितोद्भासितमुखमुद्रोऽनिमेषाभ्यां वार्द्धकधूसरित-कनीनिकाभ्यां धवलपक्ष्मलाभ्यां नयनाभ्यां तां सभाजयन्निव स महर्षिः स्नेहसिक्तेन तपःपरिपूतेनाऽऽशीर्वचनेनाभ्यर्चयामास । आदिदेश समीप एवोपवेष्टुम् । व्यावर्तयामास च लोचने नद्यभिमुखं निःशब्दः ।

कतिपयक्षणानन्तरं च प्रोवाच मंद्रस्वरं– "प्राप्तप्राया.... सिंधुकन्ये···· घनसंकटघटा पाश्चात्ये भारतीये क्षितिजे····। इयं

पुण्यसलिलाऽऽपगा, इयं मूर्तिमती आर्यसंस्कृतिः, इयं महानदी, यस्याः कलकलेन संमिश्रिता मंत्रद्रष्टॄणां कवीना गिर एकदा दिवौकसामपि स्पृहणीया अभवन्, यस्याः रोधसि विकसिता विदग्धानां विवेकिनां विचक्षणानामार्याणां तास्ता महानगर्यो देवनगरीमप्येकदाऽधश्चक्रुः.....,- सेयं सिंधुः....., अयं प्राचीनः सिंधुप्रदेशो यस्मिन् संस्कृतिरार्याणां परमोदारा सर्वमंगला पूर्णं विकासमेव दाऽन्वभवत्..... सोऽय सिंधुप्रदेशः .....शीघ्रमेवाननुभूतपूर्वसदृश्या विपदः लक्ष्यीभविष्यति ।"

"इयं च विपत् न केवलं सिंधुप्रदेशं, न केवलं गुर्जरप्रदेशं, न केवलं कश्मीरराज्यं, न केवलं पंचनदप्रदेशं मालवदेशं वा, अपि तु समस्तमार्यावर्तं समस्तं दक्षिणापथं समस्तं भारतवर्षमेवाऽऽक्रमिष्यति,- आदौ मंदक्रमा, तदनंतरं जवना, सर्वदैवाप्रतिहतप्रसरा ।"

"न चावलोकयामि विलयमस्याः..... सुदूरे व्यापारयन्नपि ज्ञानचक्षुर्भविष्यत्काले ।"

"अप्रतिहतप्रसरा भविष्यति विपदियम् । अप्रतिहतप्रसरा, न तथा स्वबलप्रभावाद्यथा (सत्रिपण्णस्मितं) भारतीयानामेव कापौरुष-वशात्.....। केचिद्भारतीया अस्या विपदः प्रतीकारे स्वसर्वस्वं होष्यन्ति.....। परंतु- विरला एव..... अंगुलिगणनीयाः । बहुलास्तु- स्वात्मप्रवंचकमौदासीन्यमुररीकुर्वन्तोऽन्ते विपदोऽस्या भक्ष्या भविष्यन्ति । केचित्तु नराधमा धनलोलुपा वा क्षुद्रवैयक्तिकप्रतिशोध-भावनाग्रस्ता वा संकीर्णसांप्रदायिकद्वेषभावनाविलोपितविवेकशक्तयो वा विपदोऽस्याः साहाय्यकारिण एव भविष्यन्ति ।"

"अलमतिजिज्ञासया, वत्से.....! ज्ञात्वाऽपि तेषां नामानि स्थानानि च न किमपि कर्तुं शक्ष्यसि तेषां विषये । यद्भावि तद्भाव्येव । न खलु तदभावि भवेत्..... प्राक्परिकलितमपि ।"

"अपि च- विपदियमस्माकं भारतीयानां सनातनधर्म-विरुद्धमाचरतां चिरात् खलु संचितस्य पापसंभारस्य फलमेव ।

अस्माभिर्मार्गलिकेभ्य आदर्शेभ्यः परिभ्रष्टैः न्याय्यात् पथः प्रविचलितैः क्षुद्राहंकारप्रेरितैर्भौतिकसुखपरायणैः स्वकर्तव्यच्युतैर्याऽपारा पाप-संपदर्जिता… सैवाधुना अस्या विपदः रूपेण पाकोन्मुखा।"

"भोगेनैवास्याः क्षयः।"

"एतत्तु मां दहति यदियं विपदस्मान् न केवले स्थूले भौतिके शरीरे दूषयिष्यति, अपि तु चित्तेऽपि मत्वामप्यन्तरात्मन्यपि। प्रायः सर्वेऽपि भारतीया वृद्धास्तथा तरुणा ब्राह्मणास्तथा क्षत्रियाः सधनास्तथा निर्धना बुधास्तथा मूर्खाः नरास्तथा नार्यः पांचनदास्तथा द्राविडा वंगदेशीयास्तथा सैधवाः— प्रायः सर्वेऽपि भारतीया, अनया विपदाऽभिभूताः, स्वधर्मं तथा विस्मरिष्यन्ति यथा पशुभ्योऽप्यधमतरा भविष्यन्ति।"

"तथापि– घोरतमायामपि तमस्विन्यां नक्षत्राणि कतिचन प्रकाशन्त एव। विधातुर्विलसितमेतत्। यास्यन्त्येवामरत्वं भारतीय इतिहासे केचिद्भारतीया, अस्या विपदः प्राणान्तिकं प्रतीकारं कुर्वन्तः, केचिदस्या विनाशार्थं प्रयतमानाः, केचिद्दृढमभिभूतेऽनया विपदा भारतवर्षे सामान्यजनमनोबलोन्नयनार्थं प्रयस्यन्तः।"

(सनिःश्वासम्) "एतादृशा एव भारतीयोत्तमा अस्माकं पुण्यभुवो विपद्यस्यामाशास्थानम्। एतादृशा एवाऽऽर्या- स्तृणीकृत्य स्वं जीवितं परचक्रस्य प्रतिरोधाय प्रतीकाराय विनाशाय वाऽऽमरणं युद्धमाना, भगवता 'कर्मण्येवाधिकारस्ते, मा फलेषु कदाचन' इति गीतमुपदेशं स्वाचरणेऽवतारयन्तः, सनातनधर्मस्याऽऽशास्थानम्।"

"एतादृशानामेव भारतीयानां जीवनगाथां स्वार्थत्याग-भासुरां साक्षात्कृत्य निपीय वा कथासु कविगीतासु साधारणा जना अस्यां विपदि कथमपि स्वात्मानं धारयितुं प्रभविष्यन्ति।"

"एतादृशानामेवाऽऽर्याणां पुण्यप्रभावेण भारतभूमिरियं विमोचिता विपदोऽस्या ग्रहणात् पापात् नियतिनिर्दिष्टं स्वं कर्तव्यं कर्तुमन्ते समर्था भविष्यति।"

"दीर्घदीर्घतमाया अपि तमस्विन्या दुःस्वप्नभयंकरायाश्चरमा परिणतिः मांगलिक उषःकाल एव।"

"वत्से ! अस्मिन् प्राणसंकटे महत् खलु तव कर्तव्यम्। महान् खलु तव कार्यभारः नियतिनिश्चितः। न हि त्वत्सदृश-मात्मिकमोजः शारीरं सामर्थ्यं मानसिकं वा बलं सर्वसाधारणम्।"

"क्षणेऽस्मिन् किंचिद्विचलिताऽपि शीघ्रमेव प्रकृतिमापन्ना स्वस्थचित्ता कर्तव्यपालनाय संनद्धा भविष्यसीति दृढो मम विश्वासः।"

वचश्चैवं चिरमास्त, गंभीरवाक्, त्रिषु कालेषु परिभ्रमन्निव सर्वदर्शी, स महर्षिः, निश्चलया मूकयाऽविचलितदृक् तन्मुखं निभालयन्त्या परस्परविमर्दिभावनोल्लोलकल्लोलविलोडितमानसया पर्णांतरालप्रविशद्भास्वद्भास्करकरावघ्रातमस्तकया सिंधुजलसंस्पर्श-शिशिर– मंदसमीरसंस्पृश्यमानकपोलया सिंधुराजकन्यया श्रूयमाणः।

# द्वितीयः परिच्छेदः

विज्ञाय तस्मात् त्रिकालदर्शिनो, विग्रहवत आत्मन इव भारतवर्षस्य, तपोवृद्धादुपस्थितामपरिलक्ष्यमाणान्तां महतीं विपदं, मानसं सिंधुराजकन्यायाः स्वभावप्रसन्नमपि खेदेनाननुभूतपूर्वेणाऽऽक्रम्यत ।

व्यापृताऽपि दिनचर्यायां यथाऽभ्यासं,समागतप्रायायास्तस्या विपद एव विषये प्रतिपलमचिंतयत् ।

अतीत एव पक्षे, तस्यां सायंवेलायां क्षणमात्रमनुभूतायां मातुः सिंधोः म्लानेः रहस्यं तत्संमुखं प्राकट्यमिवालभत,– तस्य च भीषणस्य स्वप्नस्य ।

महर्षिणा दृष्टा सा विपत् परचक्रस्य रूपं धृत्वा भारतभुवमभिभविष्यतीत्येतस्मिंस्तु विषये क्षणमपि न संदिदेह तस्या विचक्षणं मनः । व्यक्तिस्थलकालविशेषान् नामग्राहं सूचयितुमनुत्सुकेनाऽपि तेन स्वयं तत् पर्याप्तं ध्वनितमासीत् । तच्च परचक्रं यावनमित्यपि तत् स्वयमेवावेत् । पादाग्रांतेषु यवनैः सर्वेष्वपि पाश्चात्यसीमावर्तिषु देशेषु किमिवान्यत् परचक्रं संभाव्योदयमासीत्? तच्च यावनं परचक्रं तस्या आग्रहं बहु मानयित्वा पित्रा तथाऽपमानितस्य तुरुष्कप्रांताधिपस्यालहज्जाजस्याऽऽज्ञया समुद्भवेदित्यपि तदभ्यजानात् ।

'एवं तर्हि तस्याः परचक्रविपदः प्रतीकारस्तस्या वैयक्तिकं कर्तव्यम् । तस्या वैयक्तिकं विशिष्टं कर्तव्यम्····। अत एव-महर्षिणा सा तथा समुद्बोधिताऽऽसीत् । स्वकर्तव्यपालनं तस्याः परमो धर्मः। तत् सा, विधूय मनोग्लानिं पराभूय चेतोवैक्लव्यं, स्वधर्माचरणाय संनद्धा भविष्यति-' निश्चिकाय तस्या मतिः ।

विनिश्चित्य चैवं सा राजदारिका, महता प्रयत्नेन समुत्सार्य खेदं, पर्यवस्थाप्याऽऽत्मानं, सुविचिन्त्याऽऽत्मनैव भाविकार्यपद्धति-मेकदा, साक्षाद्द्रष्टुमिव तत्कार्यारंभं वियन्मध्यमलंकुर्वति भगवति भास्वति, मंत्रणाकक्षे पितुः संनिधावुपविश्य तत्तद्विभागीयसचिव-साहाय्येन राज्यकार्याणि पर्यालोचयन्त्यकस्मात् समुपजातस्मृतिरिव सहसाऽपृच्छत्- "तात ! कीदृशी खलु प्रतिक्रियां व्यानक् स प्रांतप्रशासकोऽस्माकं तत् प्रत्युत्तरं प्राप्य ?"

राजा दहरस्तु दैनंदिनराजकार्यचर्चाव्यापृत, आकर्ण्य तं प्रश्नमाकस्मिकं, अहोरात्रं मनसि विवर्तमानं तं विषयं स्वदुहित्रा शब्दितमनुभूय, क्षणमात्रं विचलितोऽपरस्मिन्नेव क्षणे महता प्रयत्नेन पर्यवस्थाप्याऽऽत्मानमाहार्यस्मितरेखांकितक्लांतमुखमुद्रः, स्वरेण निरादरेणेव प्रत्युवाच- "न जानीमः, वत्से ! नापि समुत्सुकाः ज्ञातुम् ! किं खल्वार्यं चेतः जिज्ञासेत गोभक्षकाणां वसादुर्गंधीनि मनोगतानि पापानि ?"

"तुरुष्कदेशपरिचितस्य वेषांतरनिपुणस्य विश्वसनीयस्य कस्यचिद्गूढपुरुषस्य माध्यमेन तस्याल् हज्जाजस्य प्रतिक्रियाया आकलनं किं श्रेयस्करं न स्यात् ?"- सविनयमाह तद्दुहिता । अतीवाभिमानी खलु सः श्रूयते । तस्मै कदाचिदस्माकं तत् प्रत्युत्तरं न्याय्यमपि यथार्थमपि न रोचेत । दिग्विजिगीषुश्चैतदेव निमित्ती-कृत्याऽऽक्रमणायानुज्ञां स्वस्वामिनः प्रार्थयेत । तच्छन्दानुवर्ती च तत्स्वामी श्रूयते····। एवं चेष्टमानः शलभगतिं लभेत- इत्यत्र न संशयः····। ····तथाप्यस्माभिर्विधूय गौरवभ्रमं बलमदं च तस्य चेष्टितानां विषये सावधानैरेव भवितव्यमिति मन्ये ।"

"वार्द्धकस्योच्चैस्तमां काष्ठां नूनमेते वयं प्राप्ता, येषां दुहिताऽपि तानेतादृशस्योपदेशस्यार्हान् मन्यते"– सहासं प्रत्यवदद्राजा दहरः । "अयि ! अस्माकं तत् परिहासविजल्पितं त्वं परमार्थत्वेना-गृह्णीथाः ! सत्यमेव चामन्येथा यद्वयं तस्य म्लेच्छस्य विषय आत्मघात्योदासीन्यमुररीकुर्वाणा आस्महे निष्क्रिया– इति । प्रकटयति नूनमेतद्यत् त्वं,– अस्माकं ज्येष्ठा प्राणेभ्योऽपि प्रियतरा,– दुहिताऽपि साकल्येनास्मान् ज्ञातुं न शक्ता···· एतावत्कालपर्यन्तम्– इति ।"

"अयि ! अस्मत्प्रत्युत्तरवाहिनस्तस्योग्रस्य तुरुष्क-प्रतिनिधेरनुपदमेव व्यवहारेण शरीरेण भाषणेन च यवन इव परिलक्ष्यमाणो विश्वसनीयः स्पशोऽस्माभिः सार्थवाहान्यतमभिषेण तस्याल् हज्जाजस्य राजधानीं प्रेषितः निभृतम् । अतिनिपुणः स चरः । अविज्ञाय कमपि प्रतिकूलं समाचारं तस्मात् एवं निराकुला आस्महे ।"

"क्षाम्यतु तातः प्रागल्भ्यं मम"– आह सा राजकन्याऽ-घोदृष्टिः । "परंतु समतिक्रांतेऽपि मासद्वयाधिके समयेऽस्माकं पुरुषस्येदं मौनमनिष्टस्यापि कस्यचित् संसूचकं भवेत् । तद्बालबुद्धिर्मम कथयति यत्– समुत्सार्य निष्क्रियत्वमस्माभिः प्रबलतरबलसंपादन-परैर्भवितव्यम् । यदि स तुरुष्कप्रांताधिपः प्राप्याऽप्यस्माकं प्रत्युत्तरं शममेवांगीकरोति सौभाग्यवशात् समुपजातसद्बुद्धिस्तर्हि पि नो हानिः । यदि च विग्रहं विनष्टमतिस्तर्हि पि न क्षतिः ।"

"समीचीनमाह भर्तृ – दारिका"– प्राह धीसचिवः ।

"भवांस्तु– भर्तृदारिकाप्रोक्तं सर्वमेव समीचीनं मन्य-मानोऽस्माभिर्दृष्टचरः"– सहसा प्रत्याह सिंधुनरेशः समुत्तेजितः । "प्रबलतरसैनिकबलसंपादनार्थमहोरात्रमस्मान् प्रेरयन्तः सर्वेऽपि भवन्तः नूनं विस्मरन्ति यत्– अस्माभिः वंशपरंपराप्राप्तमप्युद्वर्तन-मेतद्राज्यमस्मद्वशंवदीकर्तुं, राज्यस्यास्य दाक्षिणात्येऽर्द्धे निरंकुशं

प्रशासतस्तांस्तान् सामंतानस्मदधीनान् विधातु, राज्येऽस्मिन् तत्र तत्र निर्धूमं ज्वलतो धार्मिकवैमनस्यवन्हीन् प्रशमयितुं– अद्यावधि– अविगणय्य परिश्रमं सततं प्रयतितम्। विस्मरन्ति यत्– वयमपि चिरात् खलु प्रयत्नेषु सफलीभूतेषु कृतार्था विश्रामं क्षणमात्रं वांछाम एव। विस्मरन्ति यत्– अस्माकं प्रजा अपि, चिरेण नूनमेकछत्रशासन-विश्रब्धा पारस्परिककलहजालमुक्ता अधुना सुप्रशासनफलानि कांक्षंति, न दिग्विजयफलानि।"

"विस्मृत्यैतत् सर्व–यूय काल्पनिकयवनविभीषिकया गूढं पीड्यमाना: प्रबलतरसैनिकबलसंवर्द्धनार्थमेवास्मान् प्रतिपलं नुदथ, विस्मरथ च प्रजानुरंजनमपि शासकस्य कृते तथैवाऽऽवश्यकं यथा तद्रक्षणम्।"

तं तस्यानपेक्षितं मन:क्षोभं साक्षात्कृत्य सर्वेऽपि मंत्रिणो भयस्तब्धा अधोदृष्टयो मौनमेवाऽऽश्रयंतिकमुररीचक्रु:— ऋते राजदारिकाया:।

सा हि विस्मिताऽपि समाकर्ण्य पितुराकस्मिकमुदग्रं वच:, गूढमनुमोदमानाऽपि तस्य प्रजानुरंजनविषयकं दृष्टिकोणं, स्तोकमप्य-विचलिता स्वनिश्चयात्, अधोदृष्टि:, कतिपयक्षणानन्तरं प्रत्यवदत् प्रशांतवाक्– "क: खलु विवदेत, तात, यत् प्रजानुरंजनं राज्ञ: प्रथमं कर्तव्यमिति? परंतु विभीषकमेतद्यवनसंकटं न विभीषिकामात्रम्....। पश्यतामेव सर्वेषां– विशाल: खलु भूभागोऽनेन संकटेनाऽऽक्रांतो दुष्प्रसह्यवेगेन। अभिभूतश्च भारतवर्षस्य पौरस्त्य: संपूर्ण: सीमा-प्रदेश:। एतदेव साक्षात्कुर्वाणा एते तातमनुरुन्धन्ति स्वस्वबुद्ध्या मतिमनुसरन्त:। अपि च, प्रजानुरंजनेन सह नास्ति कोऽपि विरोधो बलसंवर्द्धनस्य। प्रत्युत– बलवत: राज्ञोऽनुरंजनं प्रजानामधिक-मभिनंदनीयं भवति।"

प्रभावित इव दुहितुरनेन प्रशांतेन संबोधनेन राजा दहर: किंचित् प्रकृतिमापन्नोऽधोदृष्टिर्विचारयन्निव किमपि तूष्णीभाव-मभजत।

सूर्यदेवी तु, आ शैशवात् पितुरेव स्नेहच्छायायां वृद्धिं प्राप्ता, आ बाल्यात् तमेवानुवर्तमाना, आ कैशोर्यात् तमेवानुकुर्वाणा, आ यौवनात् तस्यैव राज्यकार्यभारं संभजमाना, तस्य मनःप्रकृत्या सुपरिचिता, परिकलय्य तस्य मनोऽवस्थां किंचिदनुकूलीभूतामाश्वस्ता, अवदत् तथैव प्रशांतवाक्–

"मन्ये– अस्माभिर्यवनानां वास्तविकं मनोगतं ज्ञातुमद्य एवापरः कश्चित् कुशलो गूढः पुरुषः प्रेषितव्यः । अप्रतिपालयद्भिश्च तत्प्रत्यागमनं, परचक्रसंकटं समासन्नप्रायं विभावयद्भिस्तत्-प्रतीकाराय रणोद्यमोऽङ्गीकर्तव्यः । स च प्रतिपक्षस्य बलाबले सुविचार्य स्वयमनुष्ठेयः । स्वयमनुष्ठितो हि उद्यमो यथा प्राणान्तिकेष्वपि संकटेषूपकरोति– न तथा परापेक्षः ।"

"उपस्थितेऽपि घोरे परचक्रसंकटेऽन्येषां भारतीयानां नृपाणां साहाय्यसंपन्न च प्रार्थनीया ?"– अपृच्छत् तत्पिता सस्मितम् ।

"नायं ममाभिप्रायः"– प्रत्याह स्मेरवदना राजकन्या "मित्रसंपद्धि सर्वदैवाभिनंदनीया । परंतु– तातस्य चरणकमलयोः छायायामुपविष्टयैव मयाऽधीतमेतदर्थशास्त्रस्याऽऽदिमं सूत्रं– स्वयं सामर्थ्यसंपन्नस्यैव मित्रसामर्थ्यमुपकारकम्– इति ।"

"अपि च", क्षणमात्रं विरम्य पुनरवदत् सा देवलदेवी, "अस्माकं मित्रसंपदुपस्थितेऽग्निपरीक्षाकाले कियती साहाय्यकारिणी स्यादित्येतस्मिन् विषये संशेते मम मनः ।"

"संशयालु तव मनः", सहसा प्रत्यवदत् तत्पिता । "संशयालु··· अनिष्टशंकि च । अत एव– तद्विभावयति यत्– समाक्रांतेऽप्यस्माकं राज्ये पार्थैर्यवनैः तल्लुंठितं स्वं स्वातंत्र्यं पुनरपि लब्धुमुद्यमं न करिष्यति स गांधारनृपतिरस्मत्पक्षपातेन, अस्मत्संकटं स्वसंकटं विभावयन्नपि साहाय्यं न करिष्यति स महाराजाधिराजः कश्मीरनृपश्चंद्रापीडः, गोभक्षकाणां म्लेच्छानां स्वागतार्थमेव

व्याकुलीभविष्यति राष्ट्रकूटराजः इंद्रराजः, औदासीन्यमेवाऽऽत्मघातक-मुररीकरिष्यति दूरदृष्टिरपि स गुर्जराधिपः शीलादित्यः, किंकर्तव्य-मूढतामेवांगीकरिष्यति प्रत्युत्पन्नमतिरपि प्रतीहारनृपतिर्नागावलोकः, अस्मत्पातं स्वाभ्युदयमेव मन्यमानः हर्षभारभुग्नो भविष्यत्युदारचेता अपि परमभट्टारकश्चालुक्यनराधिपो विजयादित्यः, आर्यनृपाणां विपदं द्राविडानां संपदं विभावयन् परमं ममुल्लासमनुभविष्यति चेरराजः पल्लवराजो वाऽन्यार्यः, राज्यं स्वमतिदूरस्थं निरापदं कल्पयन् काव्यशास्त्रविनोदेनैव कालमतिवाहयिष्यति वंगदेशाधिपः, सौहार्दपरवशो यवनसाहाय्यार्थमेवोद्यतो भविष्यति तथागतशरणोऽपि सिंहलद्वीपाधीशो मानवर्मात्मज इति ।"

"नैवं, तात ! ....नैवं...." प्रारभत तद्दुहिता ।

"जयतु.... जयतु.... देवः.... । देव ! तुरुष्कप्रांतप्रशासकेन देवसंनिधौ संप्रेषितः राजदूतो देवदर्शनं प्रार्थयते प्रासादमहाद्वारे समुपस्थितः....। श्रुत्वा देवः प्रमाणम्"– उज्जघोष सहसा प्रविष्टः प्रधानः प्रतिहारः कनकदंडधरः ।

सिंधुनरेशस्तु सर्वथाऽनपेक्षितां तां वार्ता निशम्य चकितः, क्षणमेकं स्तब्धो, विचारमग्नः, किंचित्प्रसन्नमुखमुद्रः, निक्षिप्य साभिप्रायां दृष्टिं दुहितरि, समादिदेश तं प्रवेशयितुम् ।

गुरुतरराज्यकार्यव्यग्र इव चिरादुन्नमय्य मुखं– अन्यमनस्क इव– अवलोकयामास उपस्थितं, यावनीं पद्धतिमनुसृत्य प्रणतं, तुरुष्कदूतं, षड्भिः समानवयोवेषवृत्तांतैरवनमितपूर्वकायैर्यवनैः सुचेलकावृत– बृहद्– रजतस्थालीव्यापृतहस्तैः पुरस्कृतम् । गौरव-गंभीरया वाण्या तमाज्ञापयामास समुपवेष्टुम् । शुश्राव तेन विनीतस्वरमधोदृष्टि निगद्यमानं तुरुष्कप्रांतप्रशासकस्य संदेशं– विस्मृत्य तं दुर्दैविनं पोतप्रसंगं पारस्परिकसंबंधान् यथापूर्वं स्निग्धान् रक्षितुमभ्यर्थयन्तं, यवननाविकानामाचरणमधिकृत्य तमसकृत्

समाश्वासयन्तम् । स्वीचकार तं कथमप्यपह्नुत्यान्तरुद्वेल्लन्तं हर्षसागरं, सुविचार्यैवाऽऽत्मनैव साकं किमपि । बहु मानयामास तदुपहृतान् बहुमूल्यानुपहारान् करस्पर्शमात्रेण । प्रतिसंदिदेश तन्मुखेन सुहृद्भावं यावच्चंद्रदिवाकरस्थायिनम् । विसर्जयामास च तं सबहुमानं स्वदेशगमनाय ।

अवलोकयामास चापसृते तस्मिन् विनयावनतपूर्वकायमपराङ्मुखं, स्वदुहितरं चित्रलिखितामिव निश्चलमुपविष्टां सावधानां विस्मितां सगर्वं क्षणमात्रम् । उदतिष्ठच्च समाकर्ण्य सर्वतः प्रसरन्तं दिवसावसानसंसूचकं तारमधुरं दुंदुभिध्वनिं सायंसंध्यावंदनार्थं सहसा विलुप्तवार्द्धकभार इव ।

एवं- वयोऽवस्थाप्रभावाद्वा क्षीणोत्साहसंपद्वशाद्वा वास्तविकात् प्रजानुरंजनानुरागाद्वा- न जाने किमिति- विमुक्तमात्मानं दुःसहात् समरप्रसंगाद्विचिन्तयतो, महताऽऽडंबरेण दैनंदिनेषु प्रशासनकार्येषु साधारणेष्वपि स्वात्मानं व्यापारयतः, प्रत्यहं नियते समये मंत्रणाकक्षे सेवायामुपतिष्ठन्तं धीसचिवं साभिप्रायं क्षणमेकं निभालयतोऽपि स्वात्मगौरववशादिव यवनसंकटं तत्कल्पनामात्रोद्भूतं विपर्यीकृत्य मनसि समुद्भवन्तीं तदुपहासप्रवृत्तिं महता प्रयासेन प्रतिरुन्धतो, मंत्रणाकक्षे पूजागृह आरामे भोजनकक्षे- सर्वत्रैव- छाययेव तमनुवर्तमानया तत्सुविधोपपादनतत्परया ज्येष्ठया कन्यया सह बालिकयेव राजकारणानभिज्ञया सानुकंपं व्यवहरतः, प्रसन्नस्य, हासपरिहासमुखरस्य, राज्ञो दहरस्य, साक्षाच्छ्रुत्वाऽपि तुरुष्कप्रांताधिपस्य मैत्रीसंदेशं, समक्षमवलोक्याऽपि तेन सादरं प्रेषितान् बहुमूल्यानुपहारान् नातिविश्वस्तमानसायाः, स्मारं स्मारं तेन यवनदूतेनापसरणसमये नृपतिं समुद्दिश्य प्रक्षिप्तं क्षणिकं कुत्सितभावदुर्घर्षं दृष्टिपातमलक्ष्यप्रायमशांतस्वान्ताया, वारं वारं दुःस्वप्नं तं भविष्यत्कथनं च तन्महर्षेः स्मरन्त्या, बहुमूल्यं यत्नसंवर्द्धनसमयं व्यर्थमेवापगच्छन्तं विभावयन्त्या अपि किंचिदपि कर्तुमसमर्थमात्मानं परिकल्पयन्त्याः, प्रकाशं प्रसन्नाया अपि गूढं

समुद्विग्नहृदयाया राजकन्याया देवलदेव्याः, सुपरिचिततयाऽलृह्ज्जा-जस्याहंभावदुःसहेन स्वभावेन तन्मैत्रीसंदेशे सर्वथा विश्वसितुमपार-यतो, यथापूर्वं स्वे कर्मणि व्यापृतस्यापि स्वामिनश्चित्तक्षोभमेव तं विचारयतः, एवं क्षीणप्रायायामुत्साहसंपदि स्वामिनः, क इव राज्यमेतत् सुव्यवस्थितं रक्षेत् समुपस्थिते परचक्रसंकट इत्यहोरात्रं चिंतयतो धीसचिवस्य ब्रह्मदत्तस्य, आंतरिकविद्रोहप्रशमनसंक्षीणोत्साह-संपदः, परचक्रसंरोधवार्त्तयैव परिश्रांतस्य, समपत्रांतं तत् संकटं साक्षात्कृत्य संजाताऽऽश्वासस्य वृद्धस्य महाबलाधिकृतस्य विश्रांति-सुखमिवानुभवतो वीरभद्रस्य च···· अविदितगतदिवस एव फाल्गुन-मासो व्यरंसीत् ।

अध्यगच्छच्च चैत्रमासस्य प्रतिपद्येव, प्रातः, नूतनं हायनमभिनंदयितुमिव सोत्साहमधिरोहति पूर्वाचलशिखरं भगवति मरीचिमालिनि, प्राप्तप्रायछछराजवंशनाशानभिज्ञा आनंदभरान्नृत्यं-तीरिव नवसंवत्सरमहोत्सवपताकाततीः राजप्रासादशिखरवर्तिनीः स्पृष्टकमालिंगितुमिव मंदं मंदं वहति मातरिश्वनि, सिंधुराजकन्या सद्यःप्रबुद्धा निद्रालसलोचना विलुलितालका परित्यज्य शय्यां स्थित्वा वातायनसंमुखमन्तःपुरारामशोभां नयनाभिरामामन्यमनस्कतया लोकमाना पितुः संदेशं मंत्रणाकक्षे तां सत्वरं निमंत्रयमाणम् ।

अधिगत्य तं सर्वथाऽनपेक्षितं विस्मिता, अमंगलां कांचिद् घटनां पितुः समक्षं विचारार्थमकस्मादुपस्थितामुत्प्रेक्षमाणा, अशांत-स्वान्ता, कथंचिदनुष्ठितदैहिकक्रिया,ऽकृतवेषपरिवर्तवास्नातैव चलिता, अलसालसं स्वस्वकार्येषु प्रवर्तमानेनान्तःपुरिकाजनेनासमये तस्मिन्नवलोक्य भर्तृदारिकां कुत्रापि सत्वरं गच्छन्ती चकितेन ससंभ्रमं नमस्कृताऽचिरोद्घाटितपुरुषप्रमाण- वातायनप्रविशद्-बालरविकिरणोद्भासितमपि निस्तेजस्कमिव भासमानं मंत्रणाकक्षं पितुः प्रविवेश ।

अवलोकयामास चाऽऽसन्धामुपविष्टमकस्माद्धवलतरी-भूतविरलशिरोरुहं सांद्रतरीभूतरेखांकितभालप्रदेशं पितरमधिकतर-

मवनतपूर्वकायमन्यमनस्कतया शुष्कमेव कुसुमगुच्छं कंचित् प्रकंपमानेन हस्तेन परामृशन्तमधोमुखं तदागमनमेव प्रतिपालयन्तं, प्रागेव सेवायामुपस्थितेन महार्हाऽऽस्तरणसंच्छादितायां भूमौ समुपविष्टेन गंभीरेण धीसचिवेनास्वस्थचित्तेन सेनापतिवरेण्येन सांधिविग्रहिकेण किंचिद्दूरमुपविष्टेन मलिनवेषेण कृशगात्रेण चत्वारिंशद्वर्षदेशीयेन तुरुष्कदेश्येन सार्थवाहेन चाऽदृष्टपूर्वेण केनचित् परिवृतम् ।

निशम्य तस्या अस्फुटमभिवादनवचः किंचिदुन्नमित-मस्तकः निद्रावशेषाऽऽरक्तनयनः सः निःशब्दं स्वसमीपे तामुपावेशयत् । क्षणमात्रानन्तरमवोचच्च– "अयमस्माकं महेशदत्तः, पितृचरणानां सेवकस्य श्रीदत्तस्य परमविश्वासाऽऽस्पदस्य सुतः, परं विश्वसनीयः । स्वर्गीयः श्रीदत्तः, पितृचरणैर्दूरदर्शिभिरेतद्देशीयानामिव परदेशीया-नामपि नृपाणां चेष्टितविषये परं सावधानैः, मन्ये त्रिंशद्वर्षपूर्वं, यवनसार्थवाहान्यतममिषेण तुरुष्कदेशं प्रेषितस्तत्रैव निवस्तुम् । तन्माध्यमेन तद्देशीयवार्तालाभः पितृचरणानामुद्दिष्ट आसीत् । स च तेषामुद्देशः कल्पनातीतं साफल्यमलभत । म्लेच्छानां क्षुद्रतमानामपि गतागतानां विषये एकमात्रं मर्मग्राहि चक्षुरासीदस्य पिता, ....तयोश्च स्वर्गं गतयोरस्माकमयम्....। (सविषण्णस्मितं) पोतापहरणप्रासंगिकीमल्हज्जाजस्य तां विज्ञप्तिं तथा निराकुर्वद्भिरस्माभि-स्तस्य प्रतिक्रियां ज्ञातुं समुत्सुकैः... तद्दूतानुपदमेव यो विश्वसनीयः स्पशः प्रेषित आसीत्.... स अस्यैवान्तिके । अयं च प्रहरमात्रा-वशिष्टायामतीतायां रात्रौ राजधान्यामिहाऽऽगतोऽस्माकं दर्शन-मयाचत । एवं स्वयमकस्मात् तुरुष्कदेशादागतं विज्ञाय परं विस्मितैरस्माभिः परित्यज्य शय्यां साक्षात्कृतोऽस्मभ्यं सर्वथाऽ-नपेक्षितं स्वप्नेऽप्यनुत्प्रेक्षितं वृत्तांतं तद्देशीयानां घटनानामकथयत् । आकर्ण्य तं चकितैरस्माभिर्विचारितं– युष्माभिरपि सर्वैः स श्रवणीयो विचारणीयश्च । एतदर्थमेव यूयं सर्वेऽत्राऽऽहूताः । तत्– अलं कालातिपातेन....। श्रावय महेशदत्त ! श्रावय सर्वं तव वृत्तांतं पुनरपि सविस्तरं.... आ प्रारंभात् !"

"स्वामिन् !"– प्रारभत स धर्षरया म्लेच्छप्रभावात् किंचिदशुद्धया वाण्या– "अतीतेषु कतिपयेष्वेव वर्षेष्वहं महत् खलु परिवर्तनं यवनानां जातिधर्मेऽलक्षयम् । असुसूचमेव च स्वामीचरणयोः वारं वारं तेषां सामर्थ्यानुवर्द्धमानां दिग्विजिगीषां, दिग्विजिगीषानुवर्द्धमानां स– फलतां, सफलतानुवर्द्धमानाममर्पणशीलताम् ।"

"तेषामियममर्पणशीलता तुरुष्कप्रांतप्रशासकपद आरूढस्याल् हज्जाजस्य प्रशासनकाले सांप्रतिके चरमां कोटिमारूढेव लक्ष्यते। शृगालेनेव धूर्तेन कालसर्पेणेवाऽमर्पणेन व्याघ्रेणेव साहसिकेन प्रशासनकुशलेन तेन सामर्थ्यस्याननुभूतपूर्वं समुत्कर्षं लंभितास्ते निमित्तमेव क्षुद्रतममप्यभिलषन्ति···· अनाक्रांताऽऽक्रमणाय···· अपराभूतपराभवाय···· अलुंठितलुंठनाय ।"

"अत एव– यदा स्वामी मकरांकप्रदेशात् पलायिताय साधारणाय तस्मै यवनसामंताय सानुचरं शरणागताय– क्षात्रधर्ममनुसरन्,– अभयं प्रादात्···· तदा महान् खलु क्षोभः समुदभवत् तेषां देशे····। तं च, कालवशात् किंचिच्छान्तं, पुनरपि तीक्ष्णतरीचकार पोतापहरणप्रसंगः सः····। साक्षात् अलहज्जाजोऽपि तं न्यक्कारमेव यावनस्य सामर्थ्यस्य मन्तुमधृष्णोत्, प्रेषितुं च स्वामिनः समीपे स्वं दूतमौद्धत्यपूर्णेन संदेशेन सह····। यदा तु स आध्मातशिराः स्वामिनः न्याय्यं प्रत्युत्तरं तस्य दूतस्य मुखेन विदांचकार तदा क्रोधताम्र आरभत निरर्गलं प्रलपितुम् । प्रारभत च चेष्टामविच्छिन्नामधिगन्तुं स्वस्वामिन अनुज्ञामेतद्राज्याऽऽक्रमणाय ।"

"दमिश्काधिपः, नात्युत्सुकोऽप्येतावद्दूरे स्थितं प्रबलमेतद्राज्यमाक्रमितु, प्रादात्तामपारयन् स्वसेवकस्य स्वधर्माभिमानिनः कृतिनोऽनुरोधं तिरस्कर्तुम् ।

"अशनिपातसंनिभां तां वार्तां प्रभुचरणोपजीवी दासोऽयं, तदहरेव, स्वामिना मत्समीपे संप्रेषितस्य तस्य गूढस्य पुरुषस्य मुखेन

प्रेषयामास । कथं तु स्वामी तां, समतिक्रांतेष्वपि मासेष्वेतेषु, नाध्यगच्छत्– एतत्तु न परिकलयितुं पारयति बहु चेष्टमानोऽपि ।"

राजकुलदेवतायतननिःसरद्देवतास्तुतिगीततरंगाभिभूयमानाऽपि विरराज एकछत्रं गहना निःशब्दता तस्मिन् मंत्रणाकक्षे कतिपयक्षणपर्यन्तम् । अन्तः– प्रविशद्भास्वर–कर समाक्रम्यमाणाऽपि न घना दुश्चिता ।

"प्राप्य च"– आर्द्रयन् शुष्कमोष्ठपुटमग्र उवाच स कृतकसार्थवाहः, "दमिश्काधिपस्यानुज्ञामारभत स अल्हज्जाजः सिंधुविजयाय सेनासंनाहम् ।"

"अहो कपटपाटवं तुरुष्कप्रांताधिपस्य सौहार्दसंदेशेनानृतेनास्मान् वंचयमानस्य"– सहसाऽऽह महाबलाधिकृतः ।

"स्मरन्निवातीतान् वैफल्ये पर्यवसितान् स्वप्रयत्नान्, स, आक्रमणमेतत् सफलीकर्तुं बद्धपरिकरः, संख्यातीतानां धानुष्काणां खाड्गिकानां कौंतिकानां सैनिकानां पदातिनामश्विनामौष्ट्रिकाणां युद्धप्रशिक्षणे न मनसि करोति धनव्ययं परिश्रमं वा, यावच्छक्यं परिहरन् वृथा व्ययमवसरस्य कृतकमैत्रीसंदेशप्रेषणार्जितस्य ।"

"साहसमेतदपर्याप्तमिव मन्यमानो, दिगन्तानिव विजिगीषुः, पाश्चात्यं कंचिन्नदीबहुलं देशमपि विजेतुमुपक्रमत– इत्यपि मया कर्णोपकर्णिकया श्रुतम् । लोकवार्त्तया चानया यथार्थयैव भाव्यम् । स्थलसेनाया इव हि प्रबलाया नौसेनाया अपि संघटने स व्यापृतचित्त इवावलोकित । असंख्याः किल पोता विशालकाया अनेकशृंगाः पाषाणप्रक्षेपिकाभीषणा, अगणिताः किल कोलाः ह्रस्वशरीरास्तीव्रगतयस्तस्याऽऽज्ञया निर्मीयमाणाः सुपरीक्ष्यमाणाश्च पारसिकसागरतीरवर्तिषु तेषु तेषु पत्तनेषु,– श्रुता मया,– प्रशिक्षितैर्दक्षैर्नाविकैः, साहसिकैर्ज्वलन्मार्गणप्रक्षेपकुशलैर्धनुर्धरैः, विषाक्तपृषत्कवृतहस्तैर्धनुष्मद्भिरधिष्ठीयमानाः ।"

"परंतु– स्वामिन् !"– क्षणमेकं विरम्य पुनरवदत् स स्वामिभक्तो गूढः पुरुषः, "बलवत्तरमप्येतत् सेनाबलमल् हज्जाजस्य न तथा मां विक्लवयति यथैतस्य संचालने पुरुषविशेषं नियुंजानेन तेन प्रदर्शितं चातुर्यम् । महासागरविशालस्याऽपि सुघटितस्यास्य बलस्य संचालकत्वेन तेन नियुक्तः पुरुषो योद्धृणां सहस्रेषु लक्षेषु नूनमद्वितीयः । तस्य साक्षाज्जामाता.... महाप्रमाणो वृषस्कंध ऊर्जस्वल उरसिलोऽनुकामीनः सांयुगीनः जित्वरः.... कासीमसुतो मुहम्मद.... बलमेतच्छतगुणित– बलं करोति । प्रभंजनस्येव सर्वभंजकस्यापि दावानलस्येव सर्वदाहकस्यापि प्रलयकल्लोलस्येव दुष्प्रसह्यवेगस्याप्यस्य यूनः रणचातुर्यं न तथा मां विह्वलयति, यथाऽस्य चारित्र्यम् । तरुणोऽपि विदग्धो, मितभाषी, समर्थोऽप्युदारहृदय, ऐश्वर्यसंपन्नोऽपि जितेन्द्रियः, जिष्णुरप्यधृष्णुर्धीरोऽयं युवा, प्रसारार्थमिव यावनस्य धर्मस्य नियत्या सर्वतंत्रस्वतंत्रया जगद्रंगभूमावतारितो, मन्ये, पुरातनस्यास्माकं भारतवर्षस्य दुर्भाग्योदर्को दुर्धरः । वारं वारं विचारयन्नपि न खलु संभावयामि कमपि भारतीय युवानं राजानं.... अनेन तुल्यव...."

"....केन खलु मार्गेण रौद्रमेतदाक्रमणं संभवि ?– अपि भवता ज्ञातं किंचित् ?"– सहसाऽपृच्छदुत्तेजिता सिंधुराजकन्या ।

"आम् !"– प्रत्याह क्षणमात्रं मूकः सः स्पशः । "ज्ञातं मया राजधान्याः पण्यवीथिषु सैनिकनाविकधनुर्धरयोधृजनसंकुलासु यद्विशाला सा यवनसेनाऽतिक्रम्य गांधारप्रदेशं स्ववशवदं भारतवर्षस्योत्तरपश्चिमदिशि विराजमानस्य नगाधिराजस्य हिमालयस्योपत्यकानां मार्गेणाऽस्मान् समाक्रमिष्यतीति निश्चितप्रायम् ।"

"परंतु– आक्रमणस्यायं मार्गस्तया गृहीतपूर्वः । अनुभूतश्च पराभवः"– मंदं मंदमवोचत् धीसचिवः ।

"पराजयस्तु तस्या अस्मिन्नपि समये निश्चितः,"– पुनरुज्जीवित इव प्राह सिंधुराजः । "दुर्गमो गांधारप्रदेशः स्वाभिमान-

धनक्षत्रियबहुलः सद्य एव म्लेच्छेन तेन विजित उद्वृत्तो गोभक्षकाणां सेनां सांसर्गिकरुजामिव सर्वान् बाधमानां– कापुरुषदेशवत्– निष्क्रियः सहेत इत्येतदसंभाव्यमेव।"

"अपि च, स्वामिन्!"– अवदत् प्रस्फुटितवाक् महाबलाधिकृतः, "मार्गमेतमनुसृत्य प्रवहन्त्याः रिपुवाहिन्याः प्रथमस्य भीषणतमस्य कल्लोलाघातस्य लक्ष्यीभविष्यति काश्मीरराज्यं, नास्माकं राज्यम्।"

"काश्मीरराज्यं···· मित्रराज्यमस्माकम्। गरिष्ठोऽपि काश्मीरराजश्चंद्रापीडोऽस्माकं सुहृत्····। तत्···· अस्माभिः सत्वरमेव प्रबोधनीयः परचक्रसंकटस्यैतस्य विषये"– प्रत्युवाच गंभीरमुद्रः राजा दहरः।

"परंतु– यदि रिपोः हिमवन्मार्ग एवाभिप्रेतः" साशंकं जगाद तद्दुहिता "तर्हि किमिव प्रयोजनं तस्या विशालायाः नौसेनायाः संघटनस्य?

"निवेदितमेव तन्महेशदत्तेनानेन····, पाश्चात्यस्य कस्यचित्प्रदीवहुलस्य देशस्य सागरमार्गेणाऽऽक्रमणं"– प्रत्युवाच तस्याः पिता।

"अहो विधेरनुकूलता,– यद्विपुरनुभूतपूर्वं वैफल्यं विस्मृत्य पुनरपि तेन दुर्गमेण हिमवन्मार्गेणयाऽऽक्रमितुं कुचेष्टते····! अस्मद्वशंवदेन औदीच्येन सिंधुदेशभागेन रक्षितपार्ष्णिः क्रुद्धाऽस्माकं सेना, काश्मीरनृपतेरनुज्ञया हिमवत उपत्यकाप्रदेशेष्वेव रिपुसेनया कृतसंघट्टा, तामचिरादेव निरुद्धगतिकां क्षतविक्षतां कांदिशीकां विदीर्णां नामशेषां नूनं करिष्यति।"

"तद्विधूय भयजाड्यं समुत्तिष्ठत, जागरयत काश्मीरनरेशं दुर्लभकतनयम्। बोधयत समस्तं भारतीमनृपमंडलम्। बध्नीत परिकरं रणप्रयत्नाय।"

"अदृष्टं खलु केन दृष्टम्""? कदाचिदियं विपत्तिः, सैंधवान् सुपरीक्ष्य समुत्कर्षस्य परमोच्चे शिखरे स्थापयन्ती, संपत्तिरूपेणैव पर्यवस्येत् ।"

वदंश्चैवमुदतिष्ठत् सिंधुराज आवेशप्रस्फुरद्भुजदण्डः रणावेशोच्छ्वसद्वक्षःकपाट आरक्तनयनो, वृद्धो वनराज इव मदोत्कटमतंगजघनघटाऽऽक्रमणोद्यतः प्रस्फुरत्केसरः– ससंभ्रममुत्तिष्ठद्भिः मंत्रिभिः सादरं दुहित्रा च कौतुकस्मेरयाऽपि चिताम्लाननयनकमलया विमनस्कयाऽवलोक्यमानः ।

""प्रत्यागततारुण्य इव तात, एतान् दिवसान् समाशंकितस्य परचक्रस्य प्रतीकाराय प्रतिक्षणं प्रयुनक्ति स्वात्मन उत्साहशक्तिम्"– अचिंतयत् सिंधुराजकन्या एकदा सायंसमये प्रासादाट्टालके सुखं निषण्णा, पश्चिमदिगङ्गणे प्रसृतामस्तंगतदिनकरप्रभामुत्तप्तकांचनभासुरामनिमिषदृष्ट्याऽवलोकयन्ती"" एकाकिनी ।

"निषंगिणां कृतपुंखानां, व्यूढकंकटानां पदातिकानां श्राक्तीकानां, कौंतिकानां सादिनां, मदकलानां युद्धप्रशिक्षितानां वारणानां सुतीक्ष्णदन्तानां कुशलहस्तिपकनियंत्रितानां संग्रहणे संघटने प्रशिक्षणेऽहोरात्रं व्यापृतः न मनसि करोति परिश्रमखेदं वयोऽवस्थासुलभम् । मूर्तं पराक्रममिव सर्वान् स्वोत्साहतेजसा समुद्दीपयन्तं तमवलोक्य स्मारिताऽस्मि वारं वारं तेषामतीतानां दिनानां, येष्वहं नवकिशोरी तं सुधाफेनधवलं कृष्णतिलकभूषितभालपट्टमश्वकमारुह्य तमनिच्छन्तमपि तेषु तेष्वान्तरिकोपद्रवप्रशमनप्रयाणेषु हठादन्वसरमिच्छन्तीव तस्य परिश्रमभारं तस्य चिताभारं संविभज्योपभोक्तुम् ।"

"चिरात् खलु तं राजोचितां प्रकृतिमेवमापन्नं पुनरवलोक्य तृप्तिं नु मम दृष्टिरनुभवति ।"

"न तु मम मतिः । न जाने किमिति परंतु प्रतिक्षणमनुभवति मम प्रेक्षाऽतृप्तिमिव । तातं तांस्तान् भारतीयान् नृपान् परचक्र-

निवारणार्थं सबहुमानं जागरयन्तं, सेनाबलसंवर्द्धनार्थमनवरतं प्रयतमानं, प्रशिक्षितान् सैनिकान् काश्मीरराज्यसीमावर्तिषु औदीच्येषु सिंधुराज्यकटकेषु संघट्टयन्तं, नातिदूरदर्शिनं काश्मीर-नृपमासन्नप्रायस्य यवनाक्रमणस्य विषयेऽसकृत् प्रबोधयन्तं,- समवलोकयन्ती मम धीरनक्षरं कथयतीव मां तं प्रबोधयितुम्। मन्ये- तातो गूढपुरुषेण तेनोपाहृतायां वार्त्तायामेकांतभावेन विश्वसिति। विनिश्चित्याऽऽत्मनैव- यद्यावनमाक्रमणं हिमवन्मार्गेणैव संभवीति- तदन्यान् मार्गान्, यवनाक्रांतेन मकरांकप्रदेशेन संलग्नां स्वराज्य-सीमामपि, समुपेक्षते। समुपेक्षते च संभावनां तस्या विशालाया नौसेनायाः सिंधुसागरेऽपि प्रयोगस्य। बाह्यसंकटप्रतीकारव्यग्रोऽव-धीरयति संभाव्यमाभ्यंतरविद्रोहसंकटम्। न किंचिद्गणयति सद्योविजितान् विमनस्कान् दाक्षिणात्यान् तांस्तान् सामन्तान् विलुप्तराजाश्रयान् सनातनार्यधर्मविद्वेषिणः श्रमणकसंघान् वा···· उपजापसहान्।"

"किं करोमि? संग्रामसंनाह एवं महतोत्साहेन संलग्नस्य तस्य बुद्धिभेदमपि कर्तुं नोत्सहते मम हृदयम्। धृष्णोति वा मम मानसम्····। तटस्थतया सोढुमपि तस्येममैकान्तिकं प्रतीकारव्यूहं नानुमोदते मम मतिः···· किं करोमि?"

"अथवा- तातमापृच्छ्य, समरसंनाहव्यग्रचित्तेन तेनानुज्ञाता, भ्रात्रा जयसिंहेन सहिता, प्रस्थायेतः, देवलनगर्यां प्रणम्य कुलदेवतां मकरसंक्रान्तेः पावनावसरे, तद्दुर्गपालकेनानुभववृद्धेन शीलभद्रेण विचक्षणेन सह मंत्रयित्वा, तत्परामर्शसमृद्धा, ततः राजधानीं प्रतिनिवर्तमाना, भ्रातरं वज्रबाहुं शिबिरस्थानदुर्गेऽनायासमिव साक्षात्करिष्यामि। तेन सह समीक्ष्य विगतघटना विहंगमदृष्ट्या, परीक्ष्य क्षुद्रतमान्यपि संसूचकानि चिह्नानि, समुत्प्रेक्ष्य शत्रोः सुगूढमपि मनोगतं, सुविचार्य कर्तव्यं,-सति प्रयोजने- तेन सह राजधानीं प्रत्यागता, तातं बोधयितुं प्रयतिष्ये। मद्वचनं 'संशयविलसित'- मित्युपहसन्नपि तातस्तस्य वचनं नावधीरयेत्।

महान् खलु तातस्य तस्मिन् विश्वासः। प्रबला च तत्परामर्शे तस्याऽऽस्था। अत एव तेन सः शिविस्थानसदृशे, सामरिकदृष्ट्याऽतिमहत्त्वशालिनि, दाक्षिणात्यस्योद्वृत्तस्य सिंधुराज्यार्द्धभागस्य मर्मवर्तिनि, स्थले दुर्गपालकत्वेनाधिकृतः।"

विनिश्चित्य चैवमात्मना सह, अपरेद्युरेव, प्रातः...., मंत्रणागृह उच्चावचैः सैनिकैरधिकारिभिः सह चर्चायां व्यापृतं पितरं देवलदेवीदर्शनानुज्ञामयाचत.... अधोदृष्टिः। श्रुत्वा तदनुरोधं किंचिद्विस्मितेन, क्षणमात्रानन्तरं 'कुलदेवतानुग्रहं यियाचिषते नूनमियमस्मत्कल्याणायेति, समुत्प्रेक्ष्य सहसा स्मेरवदनेन, कौतुकोत्फुल्लवृद्धनयनेन तेनानुज्ञाता, तदहरेव, अपारयतीव तस्या इममुद्यमं वैफल्यमात्रपर्यवसायिनमवलोकयितुं पश्चिमांबुनिधौ निमज्जति भगवति प्रभाकरे मंदप्रभे, सितकरकरधवलवेषा महार्हरल्लकाऽऽवृतोत्तमांगा, कैशोर्यमतिक्रामितुं बद्धपरिकरेणोद्भिद्यमानश्मश्रुरोमशचिबुकेनाऽऽरज्यमाननयनकमलेनानतिपुष्टवपुषा विनीतेनापि स्वाभाविकप्रभावातिशयानुल्लंघनीयेन विहाय चांचल्यं कैशोर्यसुलभं गांभीर्यं युवराजपदोचितं प्रतिपत्तुं प्रयतमानेन शस्त्रविद्यायां पारं जिगमिषुणा महता कौतूहलेन राज्यकार्येषु तेषु तेषु स्वावधानं ददता महतोत्साहेन रणोद्यमेऽभिरुचिं प्रकटयता पितृभक्तेनाऽपि ज्येष्ठां भगिनीमेव बहु मानयता तामेव सर्वदाऽनुसरता तस्या एव वचनमनुपालयता क्षात्रतेजोभासुरेण युवराजोचितवेषेण भ्रात्रा जयसिंहेन सिंहशावकेनेव प्रस्फुटद्‌बलदुर्धर्षेण सहिता, सशस्त्राङ्गरक्षकानुगम्यमाना, समाक्रम्य कंचिदध्वानं प्रियेण स्वतुरङ्गमेण जवनेन, समारुह्य च हंसवदनामग्रमंदिरां शोभनां नौकां राजकीयां कुशलनाविकां.... सिंधुवाहिन्या मार्गेण देवलनगरीं प्रातिष्ठत।

उह्यमाना च सागरसमागमसमुत्सुकयेव क्वचित् प्रबलवेगया, अन्तःप्रस्फुरद्विविधसंकल्पयेव क्वचिदुत्तरङ्गया, मनोरथनिमग्नयेव क्वचिन्निःशब्दया तया सिंधुसरिता, दोल इव लालनचंचले

प्लवे तस्मिन् रात्रौ तारकितायां विश्रब्धं सुप्ता, महति प्रत्यूषे प्रबुद्धा, बहिरागत्य मंदिरादासन्द्यां सुखमुपविश्यारुणोदयशोभां सूर्योदयसुषमां च निर्निमिषया दृष्ट्या लोकमाना, मध्यं गगनस्याध्यारूढेऽपि नातिचंडकिरणे चंडकिरणे कृतक्षुधोपशमना, भ्रात्रा सह किमपि किमपि जल्पन्ती... प्राप... अपराह्णकाले, विश्रमितुमिव पश्चिमाचलकंदरासु प्रविविक्षत्सु परिश्रांतेषु विषमाश्वाश्वेषु, पश्चिमाशाचुंबिभास्करकर-संस्पृष्टेन, स्वतेजसेव चकासता, सौवर्णेन देवलदेवीमंदिरकलशेन संसूचितसंनिवेशां मंदसागरसमीरदोधूयमानया मंदिरपताकया तर्जयन्तीमिव गोभक्षकानतिविस्तृतस्य सिंधुनदीमुखस्य पाश्चात्ये रोधसि विराजमानामन्तः- प्रविशद्विविधमहाप्रमाणसागरिकपोतव्याकुलाकुलतीरप्रदेशां भारतविख्यातां देवलनगरीम् ।

कृतस्वागता च सानुचरेण दुर्गपालेन वृद्धेन शीलभद्रेणानुमाय विशिष्टाऽऽवेशिकाऽऽगमनं दूराद्दृष्टेन तदुडुपध्वजस्तंभचंचलेन राजकीयेन ध्वजेनाऽऽदित एव रोधसि समुपस्थितेन, समारुह्य सादरं समुपस्थापितां शिविकां हंसवदनां रजतघंटिकामधुरनिनादिनीं भ्रात्रा सह, चचाल कुलदेवतायतनमभ्रंकषशिखरं समुद्दिश्य । प्राप च- सस्मितं स्वीकुर्वाणा प्रणामान् परित्यज्य स्वं स्वं कार्यं राजमार्गस्य पार्श्वयोरेकत्रभूतानां सकौतुकमवलोकयतां जयजीवेत्यादिशब्दमुखराणां नागरिकाणां, समतिक्रम्य नातिदीर्घमपि जनसंमर्दवशाद्दीर्घदीर्घमिव भासमानं पन्थानं, समारुह्य समुद्रभूतलोकमितां धवलपाषाणसोपानतातिं धीरचपलया गत्या- देवतायतनप्रांगणमतिविशालं सद्यःप्रज्वलितप्रांतवर्तिदीपस्तंभचतुष्कप्रकाशितविशेषं कटिप्रमाणया कृष्णशिलाभित्तिकया बद्धपरिसरं सद्यःप्रारब्धेन प्रहण्यमानपटहनिनादगंभीरेण वाद्यमानझर्झरमधुरेण सांध्यपूजास्तवगीतेन पावनेनाऽऽरुह्य सायंसमीरलहरीः सर्वत्र घनीभवत्तमोऽभिवभूषयेव प्रसरता निनादितम् ।

प्रक्षालितचरणारविंदा च, प्रविश्य भावुकजनकृतसंमर्दं विशालं सहस्रस्तंभं लंबमानकांचदीपभांडभासुरं प्रसरद्धूपवल्लरी-

सुवासितं कंठसहस्रनिःसरद्- भक्तिगीतमुखरं सभामंडपं, जनसंमर्दे निःशब्दं पुरःप्रसरद्भ्यां रजतदंडधराभ्यां सेवकाभ्यामुपदिश्यमानमार्गा, प्राप सौवर्णं गर्भगृहद्वारम् । साक्षाच्चकार च बद्धप्रणामांजलिः प्रशांतधृतदीपप्रकाशितां नयनाभिरामां स्त्रीप्रमाणां धवलदुकूलाऽऽवृतविग्रहां प्रत्यग्रकुंकुमर्चर्चितभालप्रदेशां देवच्छन्दविभूषितवक्षःस्थलां प्रसन्नामभयमुद्रां हेमकिरीटिनी हीरककुंडलिनी मूर्ति कुलदेवतायाः स्फाटिकीं विकसत्सुमनोहारमनोहारिणीम् ।

तन्मुखकमलरसपाननिरतलोचनचंचरीका ततस्तुतिगीतलुब्धश्रवणा च भक्तिप्रह्वेण भावातुरेणान्तःकरणेन मातुः सर्वसंकटशमनमाशीर्वचनमयाचत ।

न त्वलभत लेशतोऽपि संकेतं जगज्जनन्याः कृपासूचकमभयप्रदम् ।

साक्षात्कृत्य सहसा प्रार्थनावैफल्यमनभ्रवज्रपातदग्धेव विगलितचैतन्येव निष्क्रांतप्राणेव क्षणमेकं प्रस्तरमूर्तिरिव जडाऽतिष्ठत् ।

लोकोत्तरत्वात् सत्त्वस्यापरस्मिन्नेव क्षणे संनियम्य स्वात्मानं विजित्य नैराश्यं प्रकृतिस्थमिवाऽऽत्मानं दर्शयन्ती, स्मारयंती स्वमानसं महर्षेस्तस्योपदेशस्य निष्कामकर्मप्रतिपादकस्य, समर्प्य पुष्पांजलिं, परिगृह्य देवताप्रसादं, देवतायतनाद्वहिर्निर्गता, तदनुसारिणा तदिंगितं परिज्ञाय समुत्सारितपरिजनेनानुभूय भर्तृदारिकाया वास्तविकीं मनःस्थितिं गंभीरेण वृद्धेन देवलदुर्गाधिपेन सह परिसरप्राकारे तत्र तत्र निर्मितानामासनानां विस्तृतानामन्यतम उपविष्टा, सुचिरमवलोकयान्यमनस्कतयाऽधःप्रसृताया धवलविरलनैशमिहिकापटलाऽऽच्छन्नाया अस्फुटस्फुरद्दीपपरंपरायाः- शशिशुभ्रकौशेयकप्रावृताया ईषल्लक्ष्यमाणदेदीप्यमानरत्नाभरणायाः सागररोधसि सुखं प्रसुप्ताया अमरावत्या इव- देवलनगर्या रामणीयकं, दीर्घं निःश्वस्य, प्रबुद्धेव विचारतंद्रायाः, शीलभद्रं, विमनस्कतया पूर्वक्षितिजोदितां

तारकामेकां क्षीणप्रभां ध्यायन्तं, सर्वं वृत्तान्तं कथयितुमारभत मंद्रेण स्वरेण।

आह चान्ते– "....एवं समुपेक्ष्यान्यान् पर्यायान् आक्रमण-मार्गस्य, सीमाप्रदेश औदीच्य एव बलसर्वस्वं स्वं संघटयतस्तातस्याभिनिवेशं वीक्ष्य दुःशंकयाऽनामिकया वेपत इव मम हृदयम्....। यदि नाम रिपुः, शृगाल इव धूर्तः, सहसाऽन्येनैव मार्गेणाऽऽक्रामेदस्मान् तर्हि किं वयं....? अपि चिंतयति भवान् यत् स एतस्य सिंधुसागरस्य मार्गेणाभिप्रवेदस्मद्देशम् ? अपि नाम शक्यमेतादृशमाक्रमणम् ?"

"....न शक्यं सुनिश्चितं किमपि वक्तुम्"– उवाच दुर्गपालः सचितो, व्यापारयन् वलांते लोचने नातिदूरवर्तिनोऽपि घनमिहिका-स्तरणाऽऽच्छादिततयाऽलक्ष्यप्रायस्योच्चावनौश्रृङ्गदंडावलंबिदीपभांड-संसूचितसंनिवेशस्य मंदेन लवणेन समीरणेन कदुष्णेन मत्स्यगंधिना व्यक्तस्य सागरस्याऽऽजन्मनः परिचितस्य दिशि।

"एतावत्कालपर्यन्तं सीमाप्रहरिणमेतं समुल्लंघ्य न प्रामत्यत केनापि दुःसाहसिकेनेमां पुण्यभूमिमाक्रमितुम्....। परंतु.... अनागतं केन दृष्टम् !"

"सामरिकदृष्ट्या च कुतो न शक्यम् ? परमसाहसिको दृढनिश्चयः कल्पनाचतुरः कोऽपि संवर्द्ध्यं नौबलं प्रबलमनेन मार्गेणाऽऽक्रमितुं शक्नुयात्। सांप्रतिक उदीच्यभिमुखो वेगवान् सागरसमीर-प्रवाहोऽभियानस्यैतादृशस्यानुकूलः। अत एव– भर्तृदारिकामुखेन निशम्य तं गोभक्षकं नौकाबलसंवर्द्धनव्यापृतं चिंताकुलोऽस्मि संवृत्तः....। परंतु– भर्तृदारिकैव कथयति यत्तस्य बलस्य लक्ष्यं कोऽप्यन्यो देशस्तैः सद्योविजितोऽसकृदुद्वृत्त इति।"

"स गूढः पुरुषः एवं कथयति"– प्रत्युवाच भर्तृदारिका। पप्रच्छ च– "यदि नामाघटितं घटेत....यदि नाम रिपुः मार्गेणानेनाऽऽक्रमितुं चेष्टेत.... तर्हि अपि भवान् तस्याऽऽक्रमणस्य प्रतिरोधने समर्थः ?"

"न"– तत्क्षणमेव प्रत्यवदत् सः। "स्थानमेतत्, प्रथमं तावद्देवतायतनस्यास्य प्राचीनतमस्य माहात्म्येन समस्ते पश्चिमभारते प्रसिद्धं, शनैः शनैः सिंहलद्वीपादथवा गङ्गासागरपत्तनेभ्यो गृहीत्वा चंदनादि बहुमूल्यं भारतीयं क्रय्यवस्तुजातमादौ रोमकसाम्राज्यं तदनंतरं यवनसाम्राज्यं समुद्दिश्य प्रवसतां पोतानां भारतीयानां म्लेच्छानां वा यवनसागरादर्वाचीनं विश्रांतिस्थानमिति पेयस्वादुजलसंग्रहणस्थलमिति च ख्याति देशविदेशप्रसृतां प्राप्तम्। भारतवर्षस्य पाश्चात्यमंगमाप्लावयन्त्या मातुः सिंधुनद्या मुखमित्यपि समवर्द्धतास्य महत्त्वम्।"

"अधुना तु– तदेव सर्वातिशायि। परंतु– नात्युत्प्रेक्षितत्वात्तस्य नगरमेतदकृतस्वसंरक्षणोपायमेव वृद्धिमेतावतीं प्राप्तम्। नहि कोऽपि प्राकारः कुंडलयत्येतत्। न वा परिखाजलप्रवाहः। क्षुद्रमपि संकटमेतया दिशाऽनुत्प्रेक्षयद्भिः सिंधुराजैरेतावत्कालपर्यन्तं रक्षणायास्य न सैनिकबलं पर्याप्तमत्र नियुक्तम्। न वा नौबलम्। वाणिज्यसुविधामेव मनसि कुर्वद्भिः श्रेष्ठिभिरापणा अपि स्वीया आमुखसंमुखीना एव क्लृप्ताः····। किं बहुना, समृद्धमेतन्नगरं– सुपक्वं रसालफलमिव ध्वांक्षविच्छिन्नं– रिपोः प्रथमेनैव प्रहारेण विशीर्णतां यास्य····।"

"अपि नाम भवता परिलक्षिता एषु मासेषु काश्चिदसाधारणाश्चेष्टाः म्लेच्छानामस्मिन् पत्तने"– अपृच्छत् सहसा राजदारिका।

"नैव तावत्", प्रत्यवदद्दुर्गपालः। "प्रत्युत– मासैरेभिर्यवनानां, स्वभावत एव दर्पोद्धतानां– सार्थवाहानां नाविकानां वा– व्यवहारे सुखदमेव परिवर्तनमस्माभिरनुभूतं···· स्नेहसिक्तं शालीनं च....। अहो! अदृष्टपूर्वा विशाला वाणिज्यपोता यवनानां, सिंधुसागरादेतत्पत्तनदिशा समापतन्तो मध्येसमुद्रं तिष्ठन्तोऽस्माकं पत्तनकर्मचारिभिः निवेदिता अतीत एवाहनि। श्रूयते नाम यद्वंग-



[1] सिंधु-कन्या

पत्तनानि समुद्दिश्य प्रवसन्तस्ते स्वादुजलसंग्रहणार्थमत्र विश्रांता इति ।"

"भर्तृदारिके !"– उपसंजहार स वृद्धः स्वामिभक्तः । "यद्यपि नगरमेतदरक्षितप्रायं वणिक्प्रधानं च तथाप्येतत् सुनिश्चितं यदेतस्य निवासिनो देव्याः परमभक्ताः स्फुटितायां परचक्रविपदि सर्वस्वं स्वं तृणीकरिष्यन्ति तीर्थस्थानस्यैतस्य प्राचीनस्य रक्षणार्थं गोभक्षकाणां स्पर्शदोषात्'''। (दीर्घं निःश्वस्य) अयमेवास्माकं श्रेष्ठः संरक्षणोपायः सांप्रतिकः ।"

सिंधुराजकन्या तु समाकर्ण्यानुभवगरिष्ठं वस्तुनिष्ठं निवेदनं दुर्गपालस्य चिताग्रस्ताऽधीरा साक्षात्कर्तुं वज्रबाहुं,समुत्सुका तेन सह तात्कालिकान् संरक्षणोपायान् विचारयितुं, निराकृत्य शीलभद्रस्य सादरमनुरोधं यापयितुं तत्र निशां, तस्मिन्नेव क्षणे ततः प्रस्थातुं कृतनिश्चया, प्रणता कुलदेवतायाश्चरणारविंदयोरनभिज्ञा 'पश्चिममेतद्भगवतीदर्शनमेतस्या' इति मनसिकृत्य कटु स्मयमानाया नियत्याः, उन्निद्रेण गंभीरेण भ्रात्राऽनुगम्यमाना, ततो निर्गता, जनशून्येन प्रसुप्तप्रायेण राजमार्गेण प्रतिन्यवर्तत स्वां नौकां सिंधुरोधसि विश्रांताम् ।

आपृच्छ्य च विनम्रमनुगच्छतः, रात्रिविश्रामार्थं सकृदनुरुध्य मूकीभूतान्, सचिंतान् दुर्गपालादीन् राजपुरुषान् प्रधानान्– प्रातिष्ठत स्वं ज्येष्ठं भ्रातरं द्रष्टुम् ।

उह्यमाना च प्रवाहप्रतीपगामिन्या मंथरया चिंताभारभुग्नयेव तरण्या, विश्रांताऽपि शय्यायां विनिद्रा, विमनस्कतया प्रेक्षमाणा नौमंदिरवातायनाद्बहिरीपल्लक्ष्या मूका निश्चला घनीभूतनैशतिमिरभित्तीरिव पादपपंक्तीः, यामेंऽतिमे त्रियामायाः, प्रातःसमीरचुंब्यमानतप्तलुलितालकललाटपट्टा मुकुलितनयनोत्पला निद्रांकनिलीना– तुलयितुमिव प्रतापं स्वं तस्या ज्येष्ठभ्रातुः प्रतापेन सह

अवलोक्य तन्महाद्वारं पिहितकपाटं पुरःसमुपसृतैरङ्गरक्षकै-रनुप्रवसद्भिरसकृत्प्रहृतायां लंबमानायां घंटायां, चिरात् खलूपद्वार-वर्तिनो गवाक्षस्य समीप आविर्भूतैः, निरीक्ष्य सुचिरं प्रत्यभिज्ञाय साक्षाद्राजकन्यां स्वयमागतां ससंभ्रमैः दुर्गरक्षकैर्महता प्रयासेन प्रोद्घाटितेन महाद्वारेण दुर्गान्तःप्रविष्टा, समवलोक्य मंदे दीपप्रकाशे चिताम्लानाः मुखाकृतीः मुकुलितहस्तं तदभिवंदनार्थमुपस्थितानां दुर्गाधिकारिणामुच्चावचानामनवलोक्य च तेषां मध्ये भ्रातरं तस्याः स्वागतार्थं समुपस्थितं विस्मिता दुश्चिताग्रस्ता तदनामयमपृच्छत् ।

विज्ञाय च तेभ्योऽधोवदनेभ्यस्तं दुर्विज्ञेयव्याधिग्रस्तं, तस्मिन्नेव क्षणे चचाल तं द्रष्टुं जयसिंहेन सह ।

# तृतीयः परिच्छेदः

उपदिश्यमानमार्गा च सहायकेन दुर्गाध्यक्षेण, समतिक्रम्या-ऽऽभ्यंतरं विस्तीर्णं चतुष्कोणं प्रांगणं शिलाखचितमश्वगोष्ठनिबद्धो-भयपार्श्वं शस्त्रागारं च सशस्त्रप्रहरिपरिरक्ष्यमाणं, विवेश प्रासादं भ्रातुः, निषिद्ध्य च द्वाररक्षकं तदागमननिवेदनोद्यतं, सेवकेन केनचिन्निःशब्देन प्रदर्शितेन पथा तस्य विश्रामकक्षमुपससार ।

कृतप्रवेशा च मंदप्रकाशे पिहितवातायनकपाटे निःशब्दे निवाते तस्मिन्, समवलोकयामास तं स्फाटिक्यां महार्हधवलचीनांशुका-वृतायामासन्द्यां श्रांतमुपविष्टमुन्निद्रयाऽऽरक्तया तप्तयेव दृष्ट्याऽ-निमिषया ध्यायन्तं प्रज्वलद्दीपज्योतिरारक्तगौरवर्णं प्ररूढश्मश्रुजालं क्षामम् ।

सस्नेहं तदभिवादनवचः श्रुत्वा तस्मिन् निःस्वने विशाले कक्षे सहसा गुंजत्...... चकितचकितं व्यावर्तिताननं तेजोविहीनाभ्यां क्षणमेकमशक्नुवद्भ्यामिव तां प्रत्यभिज्ञातुं क्षणमात्रानन्तरं प्रत्यभिज्ञाय तां प्रत्यागतचेतनाभ्यामिव हर्षविस्फारिताभ्यां लोचनाभ्यां तां पिबन्तं, झटिति समुत्थाय प्रसार्य बाहू स्वागताय पुर आगच्छन्तं तं हस्ते गृहीत्वा तस्यामेवाऽऽसन्द्यां सबहुमानमुपावेशयत् । अपृच्छच्च कुशलमजानतीव किंचिदपि ।

स तु– अविश्वसन्निव स्वां दृष्टिं– तस्याः कमलदलकोमलं करं वज्रकठोरे स्वकरपुटे दृढं दधानः, समाकर्ण्य तस्याः कुशलप्रश्नं मूकः, कतिपयक्षणानन्तरमस्फुटाक्षरमवदत्– "कुशलं····। शरीरस्य ! ····न तु मनसः···· अतीतेन मासेन– न जाने किमिति– मम मानसमननुभूतपूर्वसदृशयोत्तेजनया निष्कारणया भीत्या निराधारया खिन्नतया प्रतिक्षणमाक्रम्यमाणं कृतेऽपि भागीरथे प्रयत्ने स्वाभाविकं प्रसादं कथंचिदप्यलभमानं जीवितं मम दुर्वहं करोति····। निरामयोऽपि, तेषु तेषु कार्येषु यथापूर्वं व्यग्रोऽपि, न खल्वनुभवामि जिजीविषां लेशतोऽपि····। विशेषतो दिनात्यये। ····यथा यथा ह्यत्ययमुपैति दिनस्तथा तथा वर्द्धते मम उत्तेजना ज्वलयन्तीव ममान्तःकरणं, मम भीतिः निरुच्छ्वासमुपमर्दयन्तीव मम हृदयम्····। युगदीर्घोऽस्येति मम निमेषोऽनिमिषः नैशः। एकाकिनः, शून्येऽस्मिन् विश्राम(?)कक्षे ध्यायत एतद्दीपज्योतिः निरुद्देश्यं, प्रसुप्ते वा दुर्गे परिभ्रमतः निष्कारणं, विजने वा जनपदे संचरतः निष्प्रयोजनं, मम निशा– कालनिशेव– अनंता नु विभाति। निशम्य क्षुद्रतममपि ध्वनिं, समवलोक्य साधारणामपि छायां, सहसा भयेनानामिकेनाऽऽक्रम्यमाणस्य मम– ब्राह्मणस्याऽपि क्षात्रबलदुर्धर्षस्य–वज्रबाहोरियमवस्था (मया लोकापवादपरिजिहीर्षया यावच्छक्यं गोपायिताऽपि), मन्ये, मद्भालदर्शिनामधिकारिणां– किं बहुना साधारणानां सैनिकानामपि– दृक्पथमवतीर्णैव। दृष्टा हि मयाऽनेकदा तेऽशांतस्वांता गाहितुमिव ममान्तःकरणे जिज्ञासातीव्रया स्वदृष्ट्या प्रयतमानाः, परिहृत्य ममावधानम्····। शरीरेण सर्वथा कुशली– भिषग्वर्यमपि कमपि न साक्षात्कर्तुमुत्सहे····! (सहासम्) अथवा– भिषग्वर्याः सर्वविधचिकित्सापारङ्गताः अनाहूता एव···· अत्र···· अद्य···· समुपस्थिताः। तत्रास्ति चिंताकारणं किमपीतःपरम्····। मन्ये– निदानमपि कृतं स्यादेतावता कालेन भिषग्वर्यैर्व्याधेः! ····अपि ज्ञातुमर्हति···· आतुरस्तत् ?"

"कृतं निदानम्····। विचारितमौषधम्····। निर्द्धारितं च पथ्यं" सहासमवदत् तस्य स्वसा, गूढं चिंताग्रस्ताऽपि तस्य तामवस्थां

विज्ञाय प्रकटं प्रयतमानाऽऽत्मानं निश्चितं दर्शयितुम्। "परंतु- तदौपधं तत्पथ्यमातुरस्यार्द्धाङ्गिन्या 'सुखदुःखयोरद्वैतया' स्वात्मजेन वाऽग्रजेन दत्तमेव प्रभावं स्वं निरतिशयं दर्शयतीति साक्षात् स्ववैद्ययोरभिमतम्....। तत्.... श्व एव रुग्णोऽस्माभिः सहाऽऽलोक- नगरीं प्रस्थास्यते, लप्स्यते चाऽऽरोग्यमनन्यसदृशं कतिपयै- रेवाहोभिः।"

"परंतु"– प्रारभत तद्भ्राता।

"अनुल्लंघनीया भिषग्वर्याणामाज्ञा"– सस्मित दृढस्वरमाह राजदारिका।

"अस्तु तावदेवम्....। परंतु त्वमेवं.... अकस्मात्.... कथ- मत्राऽऽगता"– पप्रच्छ राजकुमारः।

आकर्ण्य तं प्रश्नं पुनरुद्भूतानिष्टाशंकाप्राच्छन्नमुखचंद्रा देवलदेवी क्षणमेकं विचार्य स्वात्मनैव विनिश्चित्य च तं सर्वमपि कथयितुं– ऋते दुःस्वप्नान्महर्षेः भविष्यत्कथनाच्च– समग्रं तं वृत्तांतं तस्मै न्यवेदयत् सावधानाय विलुप्तस्मिताय व्यग्राय चिंतामग्नाय।

विरतायां च तस्यां विन्यस्य स्वचिंताभारं बलवतोः स्कंधयोः संजातोच्छ्वासायां, व्यावर्त्य दृष्टिं तस्या वदनकमलात्, निबध्नन् तां चिंताजड इव स्थिरे प्रदीपज्योतिपि, प्रत्युवाच शनैः शनैः राजकुमारः—

"अलहृज्जाजसदृशोऽहंमन्योऽधिकारी.... न्याय्यमपि तादृक् प्रत्युत्तरं स्वीकुर्यादविनतेन मस्तकेनेति नूनमपेक्षैवाऽऽसीन्निराधारा.... इच्छामातृका। हृदि संगोपयद्भिस्तां,जानद्भिरपि तस्य स्वभावकुटिलं व्यवहारं तस्य सौहार्दसंदेशे निमील्य विवेकलोचनं विश्वसद्भिश्वा- स्माभिः मूल्यवान् खलु कालो विनाशितः....। दैववशात् प्राप्याऽपि तत्कुचेष्टितप्राक्कल्पनां, तेन गूढपुरुषेण सूचितायामेव राज्यसीमाया-

मुदीच्यां बलं स्वं यावच्छक्यं संघटयद्‌भिरस्माभिः सैवादूरदर्शिता प्रकटीकृता । स्वामिभक्तस्यापि स्वकार्यनिष्णातस्यापि हि तस्य पण्यवीथिकास्वन्येषु वा सार्वजनिकेषु स्थानेषु कणशो वार्त्तां शत्रुपक्षस्य संगृह्णतस्तन्निवेदने काऽपि त्रुटिः संभवत्येव ।"

"....अपि च– सिंधुसागरमार्गेण नैतावत्कालपर्यन्तं कोऽपि सिंधुराज्यमाक्रमितुमचेष्टत इति भाविन्यपि काले न तथा कर्तुं कोऽप्युत्सहेत– इति तर्कः कुतर्क एव । यदि नाम तर्कोऽयं कुतर्कतया परिणमेत तर्हि किं नामास्माकं सा सागरसीमाऽनुत्प्रेक्षितं तदाक्रमणं प्रतिरोध्दुं समर्था भवेत्....? यथाऽऽह शीलभद्रः— देवलनगर्याः प्रजा गोभक्षकाणां स्पर्शदोषाद्रक्षितुं प्राचीनं तत् तीर्थस्थानं नूनं जीवितं स्वं तृणीकरिष्यति । करोतु नाम । परंतु तत्तस्या जीवितं, भावोद्रमपि निर्बलं, महता संनह्नेन कपटेन चाऽऽक्रामतः शत्रोः हिंसाग्नौ शलभगतिं प्राप्नुयादित्यत्र न संशयः ।"

"....अथवा– रिपुरस्माकं राज्येन संलग्नं तदधीनं मकरांक-प्रदेशमेव मूलाधारं परिकल्पयन् नैर्ऋत्या दिशा नाक्रामेदित्यत्र किं प्रमाणम्....? चिरात् खलु तदधीने तस्मिन् प्रदेशे स अलहज्जाजो गोपायित्वा स्वसंकल्पं महान्तं खलु सेनासन्नाहं कर्तुमर्हत्येव । तस्य प्रदेशस्य प्रशासक इममवसरं प्रत्यपकारचिकीर्षया बहु व मन्येत । सर्पा इव इमे यवना अनुभूतचरं क्षुद्रतममप्यपकारं न विस्मरन्ति । एवं सति– का नामास्माकं संरक्षणयोजना ? नास्त्येकोऽपि कृत्रिमोऽकृत्रिमो वा बलवान् प्रत्यवायस्तस्मिन् योजनशतव्यापिनि सीमाप्रदेशे य उद्वेलं रिपुसेनासागरं निरुन्ध्यात्, दद्याच्चास्मभ्यं सेनाव्यूह-प्रतिरचनार्थमवसरं क्षुद्रतमम् ।"

"पाश्चात्यं सीमाप्रदेशं समुल्लंध्याऽपि रिपुरस्मान् समाक्रमितुं शक्नोति नाम । अविज्ञातप्राये तस्मिन् मरुप्रदेश आदित एव सन्निधापिता औष्ट्रीः सेनाः स अस्मान् अभिभवितुं नोपयोक्ष्यति- इत्यत्र किं प्रमाणम् ? तथा सति किं नामास्माकं प्रत्युत्तरम् ? न तावद्‌गजसेनाः ।"

कारिणः काकसदृशाः सामन्ताश्च काकचतुराः प्राप्य बाह्याक्रमणसदृशमवसरं निःसंशयं प्रयतिष्यन्ते पुनर्लब्धुं स्वं स्वातंत्र्यम् ।"

"न केवलाः सामन्ता एव । अपि तु– साधारणा अपि जना मोदिष्यन्त एतादृशमवसरं लब्ध्वा…। भौगोलिकाद्वा कारणाद् व्यावसायिकाद्वा एते दाक्षिणात्याः सैंधवा हि स्वात्मानमुदीच्येभ्यो भिन्नमेव मन्यमाना मया दृष्टाः । प्रायो बौद्धधर्मानुरागिण एते सनातनधर्मानुयायिन उदीच्यान् परकीयानिव जुगुप्सन्ते । अस्माकं ब्राह्मणकुलं सिंहासनाधिरूढं न बहु मन्यन्ते । स्वधर्मविरोधि च तन्मन्यमानाः प्रतीक्षन्ते तद्विनिपातम् ।"

"दृढं विश्वसिमि यत्– साक्षात्कृत्य तातस्य शौर्यमिव चित्तौदार्यम्– अनुभूय विविधान् लाभान् प्रबलाया प्रभुसत्तायाः, सर्वेऽप्येतेऽधिकारिणः सामन्ता बौद्धधर्मानुयायिनश्च सामान्याः जनाः– क्रमशः– एकीभावमभूतपूर्वमधिगमिष्यन्ति…। परंतु– तदर्थं दीर्घकालिकी शांतिः नितांतमपेक्षिता । सा च– परचक्रवार्त्तयैव विलयमारयंतियां गमिष्यति । का कथा साक्षादाक्रमणस्य ?"

"वर्तमानायां त्ववस्थायां सिंधुसागरमार्गेण मकरांकप्रवेशमार्गेण वा दाक्षिणात्ये कस्मिंश्चिदपि प्रदेशे विजिगीषया पदं न्यस्यन्ती यवनवाहिनी विपक्रमिसंहतिरिव रोगमुक्तं दुर्बलं शरीरं– समग्रमपि सिंधुराज्यं– कांदिशीकं चेष्टमानानामेवास्माकं सर्वेषां– ग्रसिष्यतेऽप्रतिहतगतीस्यत्र न संशयलेशोऽपि ।"

अनुमोदमानेव तन्मतमनुससार तदुक्तिं प्रगाढा नीरवता कतिपयक्षणपर्यन्तम् ।

"…महान् खलु विश्वासस्तातस्य"– दीर्घं निःश्वास्याऽऽह देवलदेवी सस्नेहं परामृशन्ती विलुलितालकमंकगतं मस्तकं जयसिंहस्य, शृण्वत एव तत्संभाषणं निद्रावश्यतां गतस्य, "यत् परचक्रसंकटस्यैतस्य वास्तविकं स्वरूपं साक्षात्कृत्य सर्वेऽपि भारतीयाः नृपा अस्माकं साहाय्याय संनद्धा भविष्यन्तीति ।"

"किं बहुना– यथा यथाऽहं विचारयामि तथा तथा सर्वा अपि सीमा आक्रमणीया एव विभावयामि– ऋते पौरस्त्यायाः ।"

"उदीचीनायाश्च····। रिपुर्हि पार्ष्णीकृत्य सद्योविजित-मुद्वृत्तं गांधारसदृशं दुर्गमं प्रदेश हिमवदुपत्यकासदृशेन मार्गेणाऽऽक्रामेदिति न विश्वसितुमुत्सहे····। अनुभूतो हि स मार्गः रिपुणा····-सोढश्च पराभवो भीषणः ।"

"····किमिति खलु तातः— जानन्नपि सर्वमेतत्– समुपेक्ष्य इमे सीमे सीमाया उदीचीनाया एव संरक्षणाय बलमेकत्रकरोति– न जाने ।"

"सिंधुसागरमार्गेण वा मकरांकप्रदेशमार्गेण वा रिपोराक्रमणं परिकल्पयन् अहं तावत्···· एकं बलवत्तममाभ्यन्तरं दौर्बल्यस्थानं मनसिकृत्य यथा विषादमनुभवामि न तथाऽन्यत् किमपि ।"

"समुत्सार्य पुरातनं रायकुलं दोषदिग्धं पितामहेन प्रातः-स्मरणीयेन दृढं प्रस्थापितेऽस्मत्कुले सिंधुराजसिंहासने तस्य कुलस्य ये केचनावशेषा आसन् ते सर्वेऽपि निःसृता उदीच्याद्भागादस्मिन् दाक्षिणात्ये भागे नूनमादित एव बद्धमूलान् तांस्तान् सामंतान् शरणीचक्रुः। तेऽपि मध्यवर्तिनी सत्तां बलवत्तरीभवन्तीमसहमानास्ते-भ्योऽभयं ददुः । पितामहस्यातुलनीयेन शौर्येण विजितास्तस्य विलक्षणेन चातुर्येण प्रभावितास्ते तदाधिपत्यं महतः कालादनन्तरं स्वीचक्रुरित्यन्यदेतत् । तदपि तात्कालिकमेव । तस्मिन् हि स्वर्लोकं गते ते सर्वेऽप्यकस्मादुद्वृत्ता यथाऽस्मद्राजकुलसत्तां निराहृत्य यथेच्छा-चारिणो बभूवुस्तत् सर्वं तव विदितमेव ।"

"महता प्रयासेनाब्ददशकसंततेन पुनरपि स्ववशंवदीकृता-स्तातेन ते दाक्षिणात्याः सामंताः समुपस्थिते परचक्रसदृशे प्राणसंकटे कियत् साहाय्यं दास्यन्तीत्येतत् संदेहास्पदमेव····। अत्यल्पमिदमुच्यते– निरूढदुर्गपालसदृशा बौद्धधर्माभिमानिन उच्चावचा अस्माकमधि-

कारिण: काकसदृशाः सामन्ताश्च काकचतुराः प्राप्य बाह्याक्रमण-सदृशमवसरं निःसंशयं प्रयतिष्यन्ते पुनर्लब्धुं स्वं स्वातंत्र्यम् ।"

"न केवलाः सामन्ता एव । अपि तु– साधारणा अपि जना मोदिष्यन्त एतादृशमवसरं लब्ध्वा····। भौगोलिकाद्वा कारणाद् व्यावसायिकाद्वा एते दाक्षिणात्याः सैंधवा हि स्वात्मानमुदीच्येभ्यो भिन्नमेव मन्यमाना मया दृष्टाः । प्रायो बौद्धधर्मानुरागिण एते सनातनधर्मानुयायिन उदीच्यान् परकीयानिव जुगुप्सन्ते । अस्माकं ब्राह्मणकुलं सिंहासनाधिरूढं न बहु मन्यन्ते । स्वधर्मविरोधि च तन्मन्यमानाः प्रतीक्षन्ते तद्विनिपातम् ।"

"दृढं विश्वसिमि यत्– साक्षात्कृत्य तातस्य शौर्यमिव चित्तौदार्यम्– अनुभूय विविधान् लाभान् प्रबलाया प्रभुसत्तायाः, सर्वेऽप्येतेऽधिकारिणः सामन्ता बौद्धधर्मानुयायिनश्च सामान्याः जनाः– क्रमशः– एकीभावमभूतपूर्वमधिगमिष्यन्ति····। परंतु– तदर्थं दीर्घ-कालिकी शांतिः नितांतमपेक्षिता । सा च– परचक्रवार्त्तयैव विलयमात्यंतिकं गमिष्यति । का कथा साक्षादाक्रमणस्य ?"

"वर्तमानायां त्ववस्थायां सिंधुसागरमार्गेण मकरांकप्रदेश-मार्गेण वा दाक्षिणात्ये कस्मिश्चिदपि प्रदेशे विजिगीषया पदं न्यस्यन्ती यवनवाहिनी विषकृमिसंहतिरिव रोगमुक्तं दुर्बलं शरीरं– समग्रमपि सिंधुराज्यं– कांदिशीकं चेष्टमानानामेवास्माकं सर्वेषां– ग्रसिष्यतेऽ-प्रतिहतगतीत्यत्र न संशयलेशोऽपि ।"

अनुमोदमानेव तन्मतमनुससार तदुक्तिं प्रगाढा नीरवता कतिपयक्षणपर्यन्तम् ।

"····महान् खलु विश्वासस्तातस्य"– दीर्घं निःश्वास्याऽऽह देवलदेवी, सस्नेहं परामृशन्ती विलुलितालकमंकगतं मस्तकं जय-सिंहस्य, शृण्वत एव तत्संभाषणं निद्रावश्यतां गतस्य, "यत् परचक्र-संकटस्यैतस्य वास्तविकं स्वरूपं साक्षात्कृत्य सर्वेऽपि भारतीयाः नृपा अस्माकं साहाय्याय संनद्धा भविष्यन्तीति ।"

"अंधविश्वासोऽयं···· अंधविश्वासः"— प्रत्याह राजकुमारो वज्रबाहुः । "भारतीया राजानः क्षुद्रस्वार्थांधा नैव साक्षात्करिष्यन्ति वास्तविकं स्वरूपमस्याऽऽक्रमणस्य । संकीर्णदृष्टयः नैव द्रक्ष्यन्ति यदेते यवना भारतवर्षमस्माकं विजेतुं व्याकुलाः लब्ध्वा क्षुद्रतममपि चंचुप्रवेशावसरं महान्तं देशमिममशिष्यन्तीति ।"

"अचकथत् स गूढः पुरुषः" राजदारिकाऽवदत्, स्मृत्वेव सहसा विस्मृतप्रायमन्यतमं विशेषं, "यदभियानमेतत् सफलीकर्तुं बद्धपरिकरेण तेनाल् हज्जाजेन पुरुषविशेषः कश्चित् तत्संचालनाय नियुक्तः···· योद्धृणां सहस्रेषु लक्षेष्वद्वितीयः महाप्रमाणो वृषस्कंध ऊर्जस्वलः उरसिलः सांयुगीनोऽनुकामीनः जित्वरस्तरुणोऽपि विदग्धः जिष्णुरप्यधृष्णुः समर्थोऽप्युदारहृदयः जितेन्द्रियो मुहम्मदः कासीम-सुतः····। वज्र ! समभावयत् स स्पशस्तं युवानं यवनं योद्धार भारतवर्षस्य साक्षाद्दुर्भाग्योदर्कमवतीर्णम् । अघोषयच्च– न स पर्यकल्पयत् कमपि भारतीयं राजानं राजपुत्रं वा तत्तुल्यबलमिति ।"

"····न काश्मीरराजपुत्रं ललितादित्यं मुक्तापीडमपि ?"– सस्मितमपृच्छद्वज्रबाहुः ।

"····न मम भ्रातरं वज्रबलं वज्रबाहुमपि"– प्रत्यवदद्राज-कुमारी । समापयन्तीव तां चर्चामुदतिष्ठत् । अगदच्च– "तद्वज्र ! सुनिश्चितमेतत्– श्व एव इतः कृतप्रस्थाना वयं राजधान्यां साक्षात्कृत्य तातं तं प्रबोधयितुं प्रयतिष्यामहे– इति····। ततःपरं तु– सर्वं भाग्यायत्तम् ।"

"आम् !" स्वीचकार तद्भ्राता, आह्वयत परमविश्वासा-स्पदं परिचारकमेकमाज्ञापयामास तं राजदारिकां तद्विश्रामकक्षं नातिदूरवर्तिनं नेतुं, व्यानक् चेच्छां कनिष्ठं भ्रातरं जयसिंहं निद्रा-निमग्नं स्वसमीप एव शाययितुम् ।

राजदारिकाप्यभिज्ञा तस्य भ्रातृवात्सल्यस्य स्मेरवदना, तत एकाकिन्येव प्रस्थिता, परिचारकेणोपदिश्यमानमार्गा, समतिक्रम्य निर्जनान् विशालान् कक्षान्, प्रविश्य तदर्थमादित एव परिकल्पितं मंदप्रकाशं पिहितकपाटवातायनं महार्हाऽऽस्तरणसंछादितभूतलं विश्रामकक्षं, निक्षिप्याऽऽत्मानं शय्यायां कमलदलकोमलायां कंबलावृत-काया निराहारैव मुकुलितश्रांतलोचना प्रायतत विस्मर्तुं चिंताभारं निमज्ज्य निद्रापारावारेऽगाधे ।

प्रायतत । अलभत च साफल्यमांशिकं चिरात् ।

न तु चिराय ।

सहसा हि प्रबोधिता केनाप्यस्पष्टेन ध्वनिना, भयेनानाम-केनाऽऽक्रांता, शुष्करसना, शिथिलावयवा, समनुभूय कंचिद्‌द्रुह्‌वं तस्मिन्नेव कक्षे समुपस्थितं, तस्या एव शय्यायाः समीपे विचरन्तं किंचिदुद्घाटितपक्ष्मललोचना, निपतितैव शय्यायां, दृष्टिं विनिद्रां तीक्ष्णामभितो व्यापारयामासाऽव्यावर्तितमुखारविंदा । अवलोकया-मास च नातिदूर एव कक्षकोण एकस्मिन् मंदतरनैशप्रदीपप्रकाशे विमुखं स्थितामीषल्लक्ष्यविशेषां कृष्णां वामनां कुब्जां वृद्धामनावृतप्रायां कृशामाकृतिमेकां नागदंतावलंबिनां तद्‌दुकूलानां परीक्षणे नु व्यापृतकृशहस्ताम् । विस्मिता च यावत् प्रयतते तां प्रत्यभिज्ञातुं तावदद्राक्षीत्तां ततश्चलन्तीं हस्तेन वार्द्धकप्रकंपमानेन तद्‌वस्त्रांचलैक-देशं कथमप्यवकृत्तं सावधानतया वहन्तीं चलदोष्ठीं संभाषमाणामिव स्वात्मनैवानाक्षिप्य दृष्टिं तद्दिशि शनैः शनैः कक्षद्वारमुपसर्पन्ती-मतिक्रम्य च देहली क्रमशोऽदृश्यतां यान्तीं ध्वांते घनतरे बाह्ये ।

सहसा च विनिश्चित्याऽऽत्मनैव किमपि निर्भीका समुत्थाय परित्यज्य शय्यां निर्गता विश्रामकक्षादसाहाय्या एवाऽऽरभत तामनुसर्तुं दूरान्निःशब्दम् । यथा यथा च साऽऽकृतिः समतिक्रम्य कक्षान्तराणि निर्जनानि निःसृत्य प्रासादात् समुल्लंघ्य प्रांगणं–

अनभिज्ञा तस्या अनुसरन्त्या– दुर्गस्य तस्य प्राकाराऽऽभ्यंतरवर्ति खंडितप्रायमेकं वेश्म समुपसर्तुमारभत तथा तथाऽवर्द्धत तस्या राजदारिकाया आश्चर्यम्। श्रुतं हि तया कर्णोपकर्णिकयाऽऽसीद्यत् तद्वेश्म नामशेषाणां रायकुलीनानां राज्ञां भूतपूर्वमावासस्थानं– सांप्रतं पैशाचिकमुदवसितमिति हीयते सर्वैः दिवाऽपि।

एवं चकितचकितमनुगच्छन्त्यामेव तस्यां सा कुब्जाऽऽकृतिः, सर्वव्यापिनः नैशस्य तिमिरस्य मूर्तिरिव कयाचिद्दुर्भावनयाऽवतीर्णा, प्राविशत् तस्मिन् वेश्मनि निष्कपाटेन शवमुखेनेव सदाव्यात्तेन द्वारेणैकेन। निगीर्णेव चाऽऽभ्यन्तरिकेणाधतमसेनादृश्यतामयात्।

तदवलोक्य राजकन्याऽपि, विस्मयवशादसमर्थाऽऽत्मानं सरोद्धुं, निभृतं प्रविष्टा तस्मिन् जीर्णे निविडांधकारे पूतिगंधिनि वेश्मनि, यावद्विचिंतयति– 'केन खलु मार्गेण गता भवेत् साऽऽकृतिः' इति तावदवलोकयामास वामतस्तस्याः प्रस्खलत्पदं समापतन्तं पीतपीतं प्रकाशं क्षीणं कस्यचित् प्रदीपस्य।

समाकृष्यमाणेव तेन च– अवशा– तद्दिशि पदान्यस्थिराणि मंदं मंदं निक्षेप्तुमारभत।

ददर्श चात्मानं कतिपयक्षणानंतरमेवैकस्मिन्निविडतयांऽधकारस्यापरिज्ञेयपरिमाणे निर्वात उग्रगंधिनि विवर्णविशीर्णभित्तिके कक्षे प्रविष्टं, समवलोकयन्तं चानिमिषया भयविस्फारितया दृशा तेन प्रकाशेनोद्भास्यमानां तामाकृतिं कस्याश्चिद्वृद्धाया असमतले भूतले मृद्दीपिकाभिमुखमुपविष्टां पुरतः सैंदूर्या रेखया रक्तरक्तया कल्पितस्य वर्तुलस्यैकस्यान्तःस्थापितानां पुत्तलिकानामंगुलिपरिमाणानां कुंकुमचर्चितानामक्षतानिचितानां षण्णां मध्यादेकां गृहीत्वा हस्ते तां विश्रामकक्षादवकृत्याऽऽनीतं दुकूलांचलैकदेशं परिधापयन्तीं विदन्तं हसन्तीमस्फुटाक्षरं किमपि गदन्तीम्।

शुश्रूषया तीव्रया पदं न्यस्यन्ती चाग्रे, नागदंतावलंबि मृण्मयं किमपि भिक्षाभांडं– अजानत्येव– सहसा स्कंधसंघट्टनेन भूमावपातयत् । अपश्यच्च तत्स्फोटध्वनिना क्षुद्रेणाऽपि नीरवे तस्मिन् कक्षे विस्पष्टेन विचलितां, क्षणमेकमुन्नमय्य दुर्बलां कंपमानां ग्रीवामितस्ततः साशंकां दृष्टिं क्षिपन्तीं, क्षणेऽन्यस्मिन्नेव प्रत्यभिज्ञाय तां प्रकृतिमापन्नां, समाधानेनेवाप्रत्याशितेनाऽऽपूरितां, दृष्ट्वा, वृद्धयाऽपि तीक्ष्णया दृष्ट्याऽनिमिषया बध्नतीमिव भिन्दतीमिव छिन्दतीमिव कृन्तन्तीमिवाश्नतीमिव ताम् ।

गदन्तीं चाशृणोत्– "......स्वागतम् ! स्वागतम् राजदारिकायाः ! स्वागतं परमप्रतापिनः छछमहाराजस्य पौत्र्याः ! ......स्वागतं सामंतचक्रचुंबितचरणकमलस्य राज्ञो दहरस्य पुत्र्याः ! स्वागतम् !"

"......अवलोकयतु सिंधुराजदारिका लोमहर्षकमनुष्ठानमेतत् मया राजदारिकाकुलस्य कल्याणमात्यंतिकं...... हीः हीः ही...... कल्याणमात्यंतिकमभिकांक्षन्त्या महता प्रयासेन कृतं...... समाप्तिं चाविकलां नीतम् ।"

"मया हि...... मया हि...... छछराजवंशमनन्तां शांतिं प्रापयितुं बद्धपरिकरया ......न गणितं शीलं...... न गणितं जीवितम्......। न मनसि कृता यातनाः । ......न मनसि कृता दुश्चेष्टाः । अपि तु–सर्वं परित्यज्य प्रस्थितया कामरूपं कामप्रदमेकाकिन्याऽनुसरन्त्या वाममार्गिणोऽवधूतान् पूरयन्त्या तेषां कामना जुगुप्सिता अपि...... रहस्यं तंत्रशास्त्रस्याधिगतं, व्यापारितं च...... तत् तव कुलं,– राजदारिके !, तव कुलं– शांतिमनंतां प्रापयितुम् ।"

"किमवलोकयसि मुखं व्यादाय, राजदारिके !"

"न प्रत्यभिजानासि माम् ?"

"मूढे ! ····अहं ····अहं ····राज्ञः साहसिकस्य दुहिता····। ····आम् । तस्यैव दुर्दैविनः साहसिकस्य दुहिता,– यं, बालकमिवातिविश्वस्तं, तव पितामहः, स्वामिभक्तः सेवकः, धर्मप्राणो ब्राह्मणः, परलोकं प्राहिणोन्महता चातुर्येण । अध्यगच्छत्तस्य राज्यम् । अलभमानश्च संतोषं तावताऽपि तस्य– स्वस्वामिनः,– पत्नीं विधवां,– स्वां भूतपूर्वां स्वामिनीं, मम विमातरं···· क्षत्रियां···· उदवहत् ।"

"अस्मांश्च सर्वान्, मां किशोरीं, मम मातरं रुग्णां, मम भ्रातरं बालं, सर्वानपि राज्यादस्मान्निरकासयत् ।"

"तस्यैव दुहिताऽहं, रायकुलस्यावशिष्टा संततिरेकला ।"

"मम माता तपस्विनी, मम भ्राता वराकः, बह्वोः कालाद् प्रागेवान्तं प्रापितौ सर्वेषामपि कष्टानां परमदयालुनांऽतकेन ।"

"एतावत्कालपर्यन्तमहमेवैकाकिनी प्राणान् कथमपि धारयन्ती स्थिता । ····आहूयमानाऽपि महाकालेनासकृत्तस्य सस्नेहमामंत्रणमवधीरयमेव । ····अनिखाय खलु तस्य नराधमस्य वंशवृक्षं, येन मामकीनस्तथा खनित आसीत्, स्वर्गेऽपि गन्तुं नाभिललाप मम हृदयम् ।"

"दिष्ट्या पूर्तिं गतप्राया मम सा प्रतिज्ञा– या मया खलु तस्यां विजयदशम्याः सायंसंध्यायां शाययित्वा चिरनिद्रावशीभूतं भ्रातरं स्वं श्मशानभूमौ प्रतिनिवर्तमानया ····एकाकिन्या ····समारुह्य मदकलां हस्तिनीं महताऽऽडम्बरेण नगरसीमोल्लंघनार्थं राजमार्गेण गच्छन्तं सिंधुराजं– तव पितरं दहरं दहनदाहकदर्शनं (–त्वमपि विराजमानाऽऽसीः, अभव्ये, तत्समीप एव····, बाला···· कौतुकोत्फुल्लनयना) दृष्ट्वाऽकस्मात् प्रतिजिघांसोदग्रया कृताऽऽसीत् ।"

"····प्रणंक्ष्यति हि तव कुलम् । नामैव तव कुलस्यावशेक्ष्यति– 'अधन्ये ! भारतीयेषु राजकुलेषु तुच्छतममिति···· स्वामिद्रोहोत्थापितं···· प्रजाद्रोहनिपातितमिति ।"

"....प्रणंक्ष्यति तव कुलं"– पुनः पुनरवदत् सा जरती। "अयं ते पिता.... परमप्रतापी सिंधुराजः"–प्राह सांगुल्याऽऽवेगप्रकंपमानया स्पृशन्ती पुत्तलिकामेकाम्। "इयं ते माता.... अखंडसौभाग्यमंडिता महाराज्ञी। अयं ते ज्येष्ठो भ्राता.... वज्रवपुर्वज्रबाहुः। ....अयं कनिष्ठः जयशीलः जयसिंहः। ....इयं त्वम्....। ....इयं च तव कनिष्ठा भगिनिका। सर्वेऽपि यूयं.... मम मारणक्रियाभिभूतास्तथाऽन्तं जीवितस्य गमिष्यथ.... यथा स्मृता अपि भोपयेत्त्वं स्वामिद्रोहिणः नराधमान्.... आ कल्पान्तम्!"

"तद्गच्छ! दुर्मुखे, गच्छ! कथय पितरं पितुरपराधस्य प्रायश्चित्तं स्वेन जीवितेन कर्तुम्। कथय मातरं कालदष्टं पतिमनुगन्तुम्!"

"दक्षंमन्या त्वं...., कार्यकुशलंमन्यस्तव भ्राता वज्रबाहुः.... न कोऽपि.... न कोऽपि.... विधिलिखितं प्रमार्ष्टुं शक्ष्यति।"

"अपेहि। जाल्मे.... अपेहि.... इतः।"

वराकी राजदारिका तु, तस्मिन्निशीथे, तस्मिन् भग्नप्राये वेश्मनि दृष्ट्वा तं भीषणं मारणप्रयोगं भयाक्रांता, श्रुत्वा तं सर्वथाऽश्रुतपूर्वं वृत्तान्तं करुणदारुणं विस्मिता, समाकर्ण्य तमाक्रोशं हतबुद्धिः, वह्निर्दह्यमानेव तैर्विषदिग्धैरिव मर्मभेदकैः शब्दैः, बहिष्क्रियमाणेव कयाऽप्यदृश्ययाऽमंगलया शक्त्याऽवशाऽपारयन्ती तत्र स्थातुं क्षणमात्रमपि ततःपरं, अजानत्येव ततो व्यपवृत्ता, नावेदात्मानं प्रसारितहस्तं कथमपि तस्माज्जीर्णवेश्मनः निर्गतं, प्रस्खलत्पदं भ्रातुः प्रासादमुपसृतं, भ्रांतमस्तकं स्वशयनकक्षे कथमपि प्रविष्टं, निष्प्राणं शय्यायां पतितं, दुःस्वप्नबहुलयाऽशांतया निद्रया च कवलीकृतम्।

प्रबोधिता चान्येद्युर्विहायोदयाचलं नभोंऽगणं प्रविशत्सु विषमाश्वतुरंगेषु प्रातःस्नानसुरभिशीतलतनुना बंधुना जयसिंहेन सस्नेहं संस्पृश्य भालं उत्तप्ते, सहसोऽत्थिता, सभयमवलोक्याभितो दृष्ट्वा च विस्मितं भ्रातरं स्वसमीप एवाऽऽश्वस्ता, कथमपि

परिसमापितदैनिककृत्या, निर्जगाम, तुरगारूढा, भ्रात्रा जयसिंहेन वज्रबाहुना च महाप्रमाणतुरगाधिरूढेन सहिता, अङ्गरक्षकैरनुगम्यमाना, तस्माच्छिविस्थानदुर्गान्निक्षिप्यैकां दृष्टिं भीतां नातिदूरवर्तिनो मध्याह्नसमयेऽपि तमसेव केनचिदाक्रांतस्य तस्य जीर्णवेश्मनो दिशि।

दृष्ट्वा च तस्य द्वारे विनष्टकपाट एकत्रभूतान् कांश्चित् सैनिकान्, ज्ञात्वा समाचारं परिचारकेभ्योऽनुगच्छद्भ्यः निधनस्य कस्याश्चित् तत्र बहोः कालान्निवसन्त्या अज्ञातकुलनामधेयाया जरत्या उद्भ्रांताया आकस्मिकस्य– क्षणमात्रं स्तब्धाऽन्यस्मिन्नेव क्षणे विचार्य किमपि---- अनुदत तुरगम्।

आरभत च राजधानीं समुद्दिश्य मार्गमाक्रमितुं गंभीरमुखमुद्रा।

अतीते निशीथे, तस्मिन् जीर्णवेश्मनि, तया जरत्या निगदितं तं कुलदूषकं वृत्तान्तं वारं वारं पर्यालोचयन्ती, ललाटंतपस्य तपनस्य तापस्य, प्रतीपवाहिनः कदुष्णस्य गंधवहस्य संत्रासस्यास्तंगतं दिनपतिमनुगच्छन्त्या दिनश्रियश्चरणकमलांकितस्येवाऽऽरक्तस्य पश्चिमदिगंगणस्य मनोहारिणः सौंदर्यस्य, विलोकयितुमिव तदध्यवसायं पश्चिमक्षितिज आविर्भूतस्य मृगलांछनस्य क्षीणक्षीणस्य रामणीयकस्यानभिज्ञा, खिन्नमानसा, समाशंकितस्य परचक्रस्य विषय एव विचारयता वज्रबाहुना कैशोर्यात् सुलभोल्लासेनापि समवलोक्य भगिन्याः ज्येष्ठभ्रातुश्च चिंताकलुषितां मुखमुद्रां गभीरवर्तनेन जयसिंहेन च सहिता–न्यवर्तत राजधानीं प्रहरमात्रक्षीणायां निशायाम्।

प्रविश्य च तामनेकपुरुषोन्नतेनार्द्धपिहितकपाटेन सशस्त्रसैनिकाकुलाकुलेन महाद्वारेण, आक्रामन्ती विस्तृतमपि जनसंमर्दवशात् संकीर्णमिव भासमानं, जनसंमर्दितमपि निःशब्दप्रायं, प्रज्वालितरथ्याप्रदीपपंक्त्युज्ज्वलितमपि ध्वांतेनेव केनचिदभिभूतमुभयपार्श्ववर्तिविविधक्रय्यवस्तुमनोरम– निषद्यापरंपरोद्भासितमपि निरानंदमिव भासमानं राजमार्गं, चिंताजडेनापि समवलोक्य तां साक्षाद्राजदारिकां

राजकुमारेण वज्रबाहुना युवराजेन जयसिंहेन च सहितां सशस्त्रैरङ्ग-रक्षकैरनुगतां समापतन्तीं ससंभ्रमं दत्तप्रसरा पौरजनसंमर्देन, 'किं नाम दुर्घटितं स्यादेतया कालकलया, यद्वशात् स्वभावेनैवाऽऽमोद-प्रिया नगरीयं निरुच्छ्वासेव संजाता परिलक्ष्यते ?' इति विस्मयमाना, 'अपि नाम तात, आदित एव वार्द्धक्यवलितस्तत्राप्येषु मासेषु सेनासंनहनश्रांतोऽकस्माद्रोगेण केनचिदाक्रांतः स्यादिति दुश्चितया पीड्यमानाऽऽतुरा सत्वरमभ्यपतत् प्रासादमहाद्वारं फलकपाणिभि-र्वर्मितैः नैस्त्रिंशिकैः परिरक्ष्यमाणमन्तःप्रविष्टानां मंत्रिणां रथैः सुशोभितं प्रज्वलद्दीपदंडाऽऽलोकितम् ।

अवरुह्य चाश्वात्, सचितं दृष्ट्वा तां प्रत्यागतां चकितं समाश्वस्तं ससंभ्रममुपसृतं प्रणतिनम्रं सौविदल्लप्रमुखमपृच्छत्– 'कुत्र महाराजाधिराज' इति ।

तेन समुपदिश्यमानमार्गाऽकृतवेषपरिवर्तैव भ्रातृभ्यां सह मंत्रणाकक्षमुपासरत् । अपश्यच्च तत्र प्रविष्टा पितरमचिरदृष्टमपि चिरदृष्टमिव शांतमपि समुत्तेजितमिव समुपस्थितैः मंत्रिभिः सह चर्चाव्यापृतमपि विमनस्कमिव भासमानं, वार्द्धकेनाधिकतरमिव समाघ्रातम् । हठात् स्मारिता च तस्य पुत्तलकस्य पुरुषवेषस्य तयोन्मत्तया जरत्या निर्दिष्टस्य क्षणमेकमन्वभवत् चैतन्यं स्वं विलीयमानमिव ।

कातरमिव प्रणतिवचस्तस्याः श्रुत्वा सहसोन्नमितमस्तकेनावलोक्य तां प्रत्यागतां प्रहृष्टेन निरीक्ष्य तया सह समुपस्थितं राजकुमारं वज्रबाहुं शिविस्थानदुर्गपालकं किंचिद्विस्मितेन तेन स्वसंनिधौ समुपवेशिता निःशब्देन···· निःशब्दैव···· पृच्छामुखरया दृष्ट्या तस्य मुखमवालोकयत् ।

सिंधुराजस्तु– विज्ञाय तन्मनोगतं– स्वयं किंचिदपि वक्तु-मनिच्छुक इव दृष्ट्यैव धीसचिवं समादिशत् ।

"भर्तृदारिके ! घनतरीभूता संकटघटा व्यतीतेषु षोडश-प्रहरेषु"– प्राह शीलभद्रः । "अस्माकं परमविश्वसनीयः स गूढो दूतः, साक्षात्कृत्य स्वामिचरणावितो यवनदेशाय पुनः प्रस्थितो देवल-नगर्यामेव सिंधुसागरतीरे निर्जने कैश्चित् हतः निशीथेऽस्माकं नौसैनिकैः प्रातरुपलब्धः । अस्माभिश्च समाचारः संसूचयन् शत्रोर्महतीमौष्ट्री सेनामस्मद्राज्यस्य पाश्चात्यसीमासंलग्ने यवन-प्रदेश उपस्थितामवसरमनुकूलं सीमोल्लंघनाय प्रतीक्षमाणानाम् । "तदनागतप्रतिविधित्सया स्वामिचरणैः सायंकाल एव तदाक्रमण-प्रतिरोधक्षमा औष्ट्री सेना संप्रेषिता महत्या त्वरया ।"

"मया खलु देवलदुर्गाधिपेन सह विमृशन्त्याऽलक्षि यदस्माकं सागरसीमाऽपि, नितांतमरक्षिता, रक्षणीयेति । तत्तस्यामपि सीमायां पर्याप्तं बलं····" प्रारभत राजकन्या ।

"परंतु– सागरं योजनसहस्रविशालं समुल्लंघ्य रिपुः समाक्रमितुं नैवोत्सहेत ! एतादृशमात्मघाति धाष्ट्र्यं स नैव कदापि चकार ! स गूढो दूतोऽपि दृढं विशश्वास यदाक्रमणं स्थलमार्गेणैव संकल्पितमिति । प्रदीर्घे सागरसीमाप्रदेशेऽस्माकं चारचक्षुरपि न ददर्श कुत्रापि रिपुनौसेनासंहतिमेतावत्कालपर्यन्तम् । तन्निराधार-स्तवाऽयमाग्रहः"– सिंधुराजः सहसाऽऽक्षिपत् ।

"परंतु– तात !" प्रत्युवाच राजकुमारो वज्रबाहुः । "एतत्तु भवता सुलक्षितमेव यदतीतेष्वाक्रमणेष्विवास्मिन्नाक्रमणे बलमेव केवलं न प्रयुनक्ति रिपुः···· अपि तु शृगालचातुर्यमपि । कृतकमैत्रीसंदेश-प्रेषणेन स यथाऽस्मान् निष्कपटहृदयान् तदाऽवंचयत तथा सांप्रतमपि संभवनीयस्याऽऽक्रमणमार्गस्य विषये न वंचयितुं चेष्टत– इत्यत्र किं प्रमाणम् ? ····यदि नाम सः सिंधुसागरमार्गेणाऽऽक्रामेत् सहसा तर्हि सेनाऽस्माकं, सुदूरेषूदीच्येषु– संप्रति पाश्चात्येष्वपि– सीमाप्रदेशेषु नियुक्ता, पार्ष्णौ प्रसह्य समाक्रांता, न लभेतावसरमात्मरक्षणाय । किं पुनः प्रतिरोधाय ? विलयं चायेतात्यंतिकं– पश्यतामेवास्माकं

सर्वेषां दिग्भ्रांतानाम् । नितांतमरक्षितां सागरसीमां समुल्लंघ्य सिंधुभूमाववतीर्णः रिपुः सद्य एव भवता वशंवदीकृतमशांतस्वांत-मुपजापक्षमं दाक्षिणात्यं भागं तथाऽऽक्रमेत्.... यथा राजयक्ष्मा दुर्बलं शरीरम् ।"

"अलमलं तावद्दुश्चितया !" अपारयन्निवाधिकतरं श्रोतुं सहसा जगाद राजा दहरः । "वीरभद्र ! प्रेष्य पर्याप्तं धानुष्कबलं दंशितं सिंधुसरिन्मुखप्रदेशरक्षणाय स्थापयित्वा च तद्गूढं सागरतीर-प्रसृतेषु कांतारेष्वाक्रमणस्य (नितरामसंभाव्यस्य) प्रतिरोधायापनय तामेतयोः ।" गदन्नेयमुदतिष्ठत् सांध्यभोजनाय । विधृत्य च राजकुमारं वज्रबाहुं बाहुदंडे निरगच्छन्मंत्रणाकक्षात् स्वदुहित्राऽ-नुगम्यमानः श्रांतः ।

राजकन्या तु, प्रक्षाल्य हस्तपादमनुष्ठाय वेषपरिवर्तमुप-भुज्य नाम पित्रा भ्रात्रा च सह स्वापाय दुरापाय विश्रामकक्षं स्वं प्रतिनिवृत्ता, कमलदलकोमलायां सुधाधवलप्रच्छदायां सुमनोरजो-वासितायां शय्यायां निपत्य चिरं प्रयतमानाऽपि न शशाक विस्मर्तुं चिंताभरं निमज्ज्य निद्रासागरेऽतिगहने ।

प्रत्युत–आरभतानिच्छन्त्यपि द्रष्टुं–मुकुलित–नयनेंदीवरैव-म्यतीतं घटनाचक्रम्....

रजनीमुखे तस्मिन् प्रशांते मातुः सिंधोः रोधसि निश्चित-मुपविष्टायास्तस्यास्तत् तन्चेतोविषादस्येव संवेदनं, ततः कटकं प्रतिनिवृत्तायास्तस्यास्तत् पोतापहरणप्रसंगस्य वास्तविकस्वरूप-पर्याकलनं, तातस्यानिच्छतोऽपि तदाग्रहवशात् तत् कठोरप्रत्युत्तर-संप्रेषणं, राजधानीं प्रतिनिवृत्तायास्तस्या अशांतस्वांताया धीसचिवेन सह तत् संभाषणं, तेन विहंगमदृष्ट्या वर्णितां यावनीं विपत्तिं विचारयन्त्यास्तद्दुःस्वप्नदर्शनं, समुद्विग्नमानसायास्तस्यास्त्रिकाल-दर्शिनो महर्षेश्चिदानंदस्याऽऽश्रमे तद्गमनं, विज्ञाय तस्माद्भाविनीं

विपदं स्वकर्तव्यकरणाय बद्धपरिकरायास्तस्याः सेनासंनहनार्थं स्वपितुस्तत् प्रेरणं, तस्य तद्विचित्रं शैथिल्यं, कथमपि कार्यप्रवृत्ते तस्मिन् कृतकमैत्रीसंदेशहारिणस्तस्य यवनदूतस्य तत् समुपस्थानं, तस्मिन् गजनिमीलिकया विश्वसतस्तातस्य पुनस्तत् शिथिलीभवनं, एवं विनष्टे बहुमूल्ये समये दैवेनेव समुपजातदयेन संप्रेषितस्य तस्य गूढस्य चरस्य तातसेवायामागमनं, निशम्य तस्माद्वास्तविकीं परिस्थितिं प्रबुद्धस्य तातस्याऽऽक्रमणप्रतिरोधाय तत् परिकरबंधनं, सेनासंनहनव्यग्रस्यापि तस्याभिनिविष्टामिव कार्यप्रणालिमवलोक्य सचिंतायास्तस्या देवलदेवीदर्शनार्थं तन्नगर्या गमनं, तत्र निष्फल देवीसंस्तवनं, तद्दुर्गपालेन सह मंत्रणं, ततः राजधानीं प्रत्यागच्छन्त्या-स्तस्या भ्रातुः शिविस्थानदुर्गे तद्गमनं, तत्र चाभिभूतेनेव केनचित् प्रेतेनाकारणोत्तेजितेन तेन सह तत् संभाषणं, घोरे निशीथे सहसा प्रबुद्धायास्तस्यास्तद्– विश्रामकक्षं प्रविष्टायाः कंकालप्रायाया जरत्याः कस्याश्चित् तदवलोकनं, जिज्ञासया तदनुगमनं, श्रवणं च तत् स्वकुल-कलंकस्याश्रुतपूर्वस्य तस्या मुखात्, अपरेद्युः– अथवा तदहरेव– ततः प्रस्थितायास्तस्यास्तज्जरतीनिधनवार्ताश्रवणं, परचक्रवार्त्तया केवलया समुत्तेजितामालोकनगरीं प्रत्यागतायास्तस्याः पाश्चात्यसीमावर्तिषु रिपुसाम्राज्यप्रदेशेषु तत्सेनासंनहनवार्त्ताश्रवणं, तातस्यानिच्छतोऽपि वज्रवाहोस्तर्कवलं निवारयितुमसमर्थस्य सिंधुसागरसीमासंरक्षणाय धानुष्कबलनियोजनं···· सर्वमप्यतीतघटनाचक्रं तत्स्मृतिदीपः क्रमशो दर्शयितुमारभत ।

आरभत च तन्मनः दृढं विश्वसितुं यत्– "न्यायनिष्ठुरा नियतिस्तां तस्याः पितरं तस्या भ्रातरं तस्याः कुलं राज्यं राष्ट्रं···· सर्वमेव···· फलोन्मुखप्राक्तन– पापकर्मविपाकोपनतेऽतिगंभीरे विपत्-सागरे निमज्जयितुं बद्धपरिकरा···· केनापि···· कथमपि···· अप्रति-रोद्ध्या । एतद्यावनं परचक्रं तु निमित्तमात्रं···· निमित्तमात्रमिति ।"

विचारयन्ती किमपि किमप्येवमेव शनैः शनैः निद्राया अंकेऽलीयत ।

ऐक्षत च– आत्मानमेकाकिन पुनरप्येकवारं तस्मिन्नेव सिंधुतीरे तस्यैव प्रोन्नततटप्ररूढस्याभ्रंकषशाखाशिखरस्य भूतलनुंबि-जटाजूटस्य 'निष्कूजस्तिमितस्य' औदुंबरस्य महावृक्षस्य मूले तथैवोपविष्टं गौरवर्णं पलितजटाभारं धवलश्मश्रुजालं श्वेतरोमशवक्ष-समवदातपरिधानमतिवृद्धं महर्षि चिदानंदं संकेतितपूर्वाया विपदो विजयेऽधिकतरं कथयितुं वारं वारं विनीतस्वरमनुरुन्धंतं...., महर्षि तं धीरप्रशांतमपि परमकारुणिकमपि 'वत्से ! अलमतिजिज्ञासया'– इति तामसकृन्निवारयन्तमपि, अन्ते– जुगुप्सित्वेव तस्या दुराग्रहिण: स्वभावात् सहसा कठोरमुद्रं, 'जिज्ञाससे भाविनीमापदं प्रति-चिकीर्षया ? तत् जानीहि तां सविस्तरम्....', अथवा– साक्षात्कुरु तस्या: प्रथमं भीषणं वज्रप्रहारमेव, बधानाऽमनो दृष्टिमेकाग्रां मम दृष्ट्या, अवलोकय चानवलोकनीयमिति ब्रुवन्तं, स्वात्मानं चाऽवशमिवोन्नमय्य जिज्ञासातुरां स्वां दृष्टिं, निखानयन्तं तां तस्य तपस्विनस्तेजोऽतिरेकपिंगलायां दृष्ट्याम् ।

अन्वभूच्च सहसाऽऽत्मानं कार्पासपुत्तलकमिवाहश्यया कयाचिद्दुष्प्रसह्याया शक्त्याऽनायासमेव भूतलादुत्थाप्यमानं, प्रोषित-चंद्रे निरभ्रे बृहत्तरनक्षत्रखचिते गगनांगणे समुत्क्षिप्यमाणं, वेगेन महता विलुलितालकं प्रवहद्वस्त्रांचलं रजतरेखायमाणसिंधुसरित्-प्रवाहानुसारिणा सुरवर्त्मवर्त्मना दक्षिणदिशं नीयमानं, धार्यमाणं च स्थिरं कतिपयक्षणपर्यन्तं गगनेऽध: परिदृश्यमानप्रसुप्तदेवलनगरी-दीपमालाशोभावलोकनव्यापृतनयनम् ।

अवेच्च स्वात्मानं– सिंधुसागरवेलाप्रदेशं समुद्दिश्य शनै: शनैरुपसर्पन्तं, नैशेऽधतमसे दिङ्मंडलव्यापिनि फेनिलभासुरकल्लोल-संसूचितस्य मंद्रगर्जनध्वनिध्वनितस्य सपृषत्पृषदश्वव्यंजितस्य सागर-स्योपरि भ्रमन्तं, देदीप्यमानं देवलदेवीमंदिरशिखरवर्तिनं प्रदीपं क्षणमात्रं सादरं ध्यायन्तं, द्वितीय एव क्षणेऽञ्जनमिव वर्षन्त्या दक्षिणदिशो गर्भगह्वराग्निर्गच्छतस्तम:खंडाननुकुर्वत: नि:शब्दं सिंधु-सरिदामुखप्रदेशमुपसर्पत: पोतान् विविधप्रकारान् विस्मय-

विस्फारिताक्ष पश्यन्तं, तीरमुपसृतेभ्यस्तेभ्यः निःशब्दं निःसरतः रोधसि च सिकतिलेऽवतरतः कृष्णकवचाऽऽवृतकायान् दुर्लक्ष्यविशेषान् कांश्चित् कौतिकान् कांश्चिद्याष्टीकान् कांश्चिच्छाक्तीकान् कांश्चिद्धानुष्कान्– तमसः सर्वव्यापिनः प्रचलान् अवयवानिव, सागरान्तस्तले मातुमपारयतो वडवानलधूमस्य पुञ्जानिव बहिर्निर्गच्छतः— प्राणिजातप्राणापहरणेच्छया सागरतलादुद्गतान् हालाहलवंशजानिव–संख्यातीतान् आयुधिकान्– ऐकाधिपत्यप्रस्थापनेच्छयाऽऽर्यावर्तं प्रसह्याऽऽक्रमितुं बद्धपरिकरस्य दुरितस्यांशावतारानिव– भयविनिमेषमवलोकयन्तं, कौतूहलेन तीव्रेणावशं, शनैः शनैः निःशब्दमधोवतरन्तं, प्रयतमानं तेषां शस्त्राजीवानां वास्तविकं स्वरूपं ज्ञातुं, शृण्वमाणं तेषां संलापं मंद्रस्वरम् ।

समवित्त स्वात्मानं क्षणार्द्धं एव परिज्ञाय तेषां स्वरूपं भयेन घोरेण समाक्रम्यमाणं चेष्टमानं च प्राणपणेन···· उच्चैः····

अलक्षयच्च सहसा प्रबुद्धाऽऽत्मानं विश्रामकक्षे स्वे कमलदलकोमलायां सुधाधवलप्रच्छदायां सुमनोरजोवासितायां शय्यायां पतितं, प्रस्फुटत्स्वेदबिंदुमिलग्नगात्रं, शुष्यत्तात्वस्फुटाक्षरं चेष्टमानमाक्रोष्टुं 'यवनाः····! यवनाः····!' इति ।

नाशकत्तु चिराय पर्यवस्थापयितुमात्मानम् ।

बहोः कालादनन्तरं प्रकृतिं स्वां कथंचिदापन्नाऽपि नापारयत् लेशतोऽपि विस्मर्तुं तं दुःस्वप्नम् ।

समुत्थाय प्रातः, नित्यकर्मणि पुत्तलिकावद्व्यापृताया अपि···· '*अपि नाम सः किंचिदनिष्टमसुसूचत्*····? आहोस्वित्– आसीत् सः संतप्तकल्पनाशक्तेस्तस्या दुर्विलसितमेव केवलं'– इति प्रतिक्षणमात्मनैव वितर्कयन्त्यास्तस्याः क्षणोऽक्षणः प्रहर इव व्यत्येतुमारभत, प्रहरश्च शांतिहरो दिवस इव···· दीर्घदीर्घः ।

कथंचित् परिसमापितदैनिककृत्या शयननिपतिता म्लाना, विपादेनाननुभूतपूर्वसदृशेन समाक्रांता, 'दुःस्वप्नः स भ्रात्रे वज्रवाहवे निवेदनीयो न वेति' विनिश्चेतुमसमर्था च···· सहसाऽबुद्ध्यत वेत्रधारिणीं, सविनयमुपसृत्य शयनं तदीयं मंद्रस्वरं निवेदयन्तीं– 'जयतु जयतु भर्तृदारिका····। भर्तृदारिके ! महाराजाधिराजस्त्वामेतस्मिन्नेव क्षणे द्रष्टुं कामयत' इति ।

ऐक्षत च– स्वात्मानं शयनादुत्थितं मंत्रणाकक्षं पितुः समुद्दिश्य पदानि निक्षिपन्तं···· तंद्रितम् ।

# चतुर्थः परिच्छेदः

"सिंधुसरिन्मुखप्रदेशरक्षणायाद्य प्रातरेव कटकात् संप्रेपितस्य धानुष्कवलस्य प्रमुखोऽयं बलाहको, मार्ग एव मिलिताद्देवलदुर्गपाल-दूतादस्मात् रामशरणादधिगत्य कल्पांतभयंकरं समाचारमेकं क्षणमात्रं किंकर्तव्यविमूढोऽपरस्मिन्नेव क्षणे समादिश्य बलं स्वं प्रभंजन-वेगेनोपसतु' देवलनगरीं सरिन्मार्गेण, स्वयं स्वामिचरणयोरुपस्थितो यथोचितनिर्देशग्रहणार्थं"– प्रारभत धीसचिवः निवेदयितुं श्रांततरस्तां, प्रविश्य मंत्रणाकक्षमुपविश्य पितुः समीपं विलोक्य क्षणमात्रं पितुः वार्द्धकेनाधिकतरमेव समाक्रांतस्यापराधबोधेनेव भुग्नस्य वलितमाननं जिज्ञासामुखरया दृष्ट्या तदभिमुखीभूताम् ।

समाकर्ण्यैव च शब्दान् 'कल्पांतभयंकरं समाचारमेक'– मलीयतात्यन्तं तस्या सा तंद्रा । बोधिता नामातींद्रियया कयाचिच्छक्त्या साप्रागेव निवेदनात्– सुस्पष्टमबुद्ध्यत तस्य समाचारस्य स्वरूपम् । अबुद्ध्यत तस्य दुःस्वप्नस्य वास्तविकमर्थम् । सहसा धीरहृदया चाऽऽरभत– एकाग्रेण मनसा धीसचिवस्य तन्निवेदनं श्रोतुम् ।

"सः समाचारः स्वामिचरणैः श्रुतः, प्रमितश्च मंत्रिपरिषदा राजकुमारेण वज्रबाहुना भवत्या– सर्वैरपि– श्रवणीयो विचारणीय-श्चेति । अत एव– वत्सा राजकुमारो मंत्रिणश्च– सर्वे इमे त्वरया महत्याऽऽहूताः ।"

"तन्निवेदय रामशरण ! समाचारं तम् ।"

"आक्रांताऽस्माकं देवलनगरी पापै"– राह सः क्षामवदनो मार्गधूलिधूसरितसर्वाङ्गः श्रांतो दूतः ।

"सविस्तरं कथय"– नुनोद ब्रह्मदत्तः ।

"अतीते निशीथेऽर्द्धेऽवसिते तमस्विन्यास्तमोबहुलाया अस्माकं दुर्गाधिपः शीलभद्र,– आदित एवाशांतस्वांतः, निद्रामलभमानः, शयने लुठन्, क्षणमात्रं तंद्रितः,– सहसाऽजागः"" श्रुत्वेव कस्याश्चिदुत्तेजितमस्फुटमाक्रोशम् । विस्फारिताक्षं शयनकक्षे सर्वतोऽवलोक्यानवलोक्य कमप्यभितो विस्मयमान आकृष्यमाण इव केनापि समुत्थाय शनैः शनैः सागरसंमुखीनं शयनकक्षवातायनमुपसृत्याधः-प्रसृतस्य नैशेऽधतमसे दिङ्मंडलव्यापिनि फेनिलभासुरकल्लोल-संचितस्य मंद्रं मंद्रं गर्जतः सागरस्य दिशि दृष्टिं क्षिपन् विमनस्कां सहसाऽक्षिलक्ष्यीचकार दक्षिणदिशो गर्भगह्वरान्निर्गच्छतस्तमःखंडान् विडंबयतः निःशब्दं सिंधुसरिन्मुखप्रदेशमुपसर्पतः प्रवातोत्फुल्लकृष्ण-शृङ्गान् पोतान् ।"

"अश्रद्दधानश्च स्वदृष्टिं यावत् सावहितं पश्यति पुनस्तावदपश्यत् तान् सवेगं देवलपर्वततीरभागमुपरुन्धतः"", उपरोधकेभ्यश्च तेभ्यः निःशब्दं निःसरतः, रोधसि च सिकतिले दीर्घदीर्घे विधवाकपालशून्यशून्येऽवतरतः, कृष्णवस्त्रान्, दुर्लक्ष्य-विशेषान् संख्यातीतान् सैनिकान् ।"

"तत्क्षणे च– विदितवेद्यो वीतसंशयो, विस्मितोऽप्यनाकुलितः, सावधानः, प्रत्युत्पन्नमति स्वां सर्वयरज्जुसरन्, संकट-घोषिकां प्रचंडां कांस्यघंटां लंबमानां वादयितुमारभत– सरभसं प्रांगणे निर्गत्य ।"

"नीरवे तस्मिन् नैशे वातावरणे प्रसह्य प्रसरन्तं दिङ्-मंडलानुनादिनमश्रुतपूर्वं श्रुत्वा तं घंटारवं सहसा प्रबुद्धा दुर्गरक्षकाः–

निद्राऽऽरक्तनयना एव- अनावृतप्रायकाया एव- आविरभवन् प्राकारप्राङ्गणे, दुर्गपालसूचितया दिशा प्रेरितदृशोऽवालोकयन् रिपुसैनिकान् सागरतीरेऽवतरतः, धैर्येण च महताऽऽरभन्त प्रलय-मेघजलवर्षाघनां पाषाणवर्षां मर्मभेदिकाम् ।"

"आकर्ण्य घंटारवमनपेक्षितं चकिताः, साक्षात्कृत्य निजगूढावतरणप्रयासवैफल्यं विचलितास्त्वरमाणा आक्रामका आयुधिकास्तावत्कालपर्यन्तमसंघट्टिता, अनुभूय सहसा तां पाषाणवर्षां व्याकुलाः, कृष्णपिपीलिका इव पीडिताः, सागररोधसीतस्ततः पलायितुमारभन्त । विजयगर्जनां च कर्तुं प्राकारभित्तिभ्योऽधोऽव-लोकयन्तः पाषाणवर्षका दुर्गसैनिका. ।"

"क्षणिकेन तेन विजयेन किंचिदप्यनुत्तेजितो दुर्गपालस्तु प्राकारशिखरान्निरीक्षमाणोऽनिमिषया तीक्ष्णया दृष्ट्या दक्षिण-दिगन्तादनवरतं समापतदरिबलं विचारमग्न, आहूय मां समीपवर्तिनं, जगाद- 'रामशरण ! दुष्प्रसह्यं खल्वेतद्रिपुबलम् । अपर्याप्तं चाऽऽस्माकीनं प्रतिरोद्धुमेतत् । तन्निर्गत्यास्मिन्नेव क्षणे देवतायतन-गर्भगृहवर्तिना गूढमार्गेण प्रतिष्ठस्व राजधान्यै, निवेद्य च स्वामि-चरणयोः सर्वमिमं वृत्तांतमनुरुद्ध्यस्व सेनासाहाय्यं मनोजवेन प्रेषयितुम्'- इति ।"

"शिरसि कृत्वा तदादेशं, गूढं निर्गतस्तस्माद्दुर्गात्, प्रवसन् सततं, समुपस्थितः स्वामिचरणयोः समक्षं, न्यवेदयं तत्सदेशम्....। श्रुत्वा देवः प्रमाणम् ।"

विरत एवमभिधाय तस्मिन् दूते प्रससार कतिपयक्षणान् तस्मिन् मंत्रणाकक्षे चिताधना नीरवता । उत्सारयन्निव तां प्रयासेन महता प्राह स्वगतमिव महाबलाधिकृतः "कालेनैतावताऽस्माकं धानुष्कबलं देवलनगरीपरिरक्षणे व्यापृतमपि स्यात् ।"

"अपि चिंतयति भवान् तत् पर्याप्तम् ?"- अपृच्छत्तीव्र-स्वरा राजदारिका ।

"सिंधुसागरचुंबिसिंधुसरिन्मार्गपरिरक्षिकायाः नौसेनाया एको भागस्तुरगबलस्य चांशः प्रेषयितुं शक्यः"–प्रत्यवदत् सः ।

"समुपेक्ष्यान्याः सर्वाः सीमा, आकृष्य सर्वाः सेनास्ताभ्यो विनियोजनं तासां दाक्षिणात्यायामेव सीमायां तु न श्रेयस्करम्"–आह सांधिविग्रहिकः ।

"कूटयुद्धप्रशिक्षितया पदातिसेनया नौसेनया च सह भ्राता वध्यो यद्यस्मिन्नेव क्षणे देवलनगर्याः परिरक्षणाय प्रतिष्ठेत;··· तर्हि स पत्तनाभ्यन्तरे प्रविष्टानपि यवनान् निष्कासयेत्, प्रयत्नांश्च तेषां सिंधुमुखप्रवेशाय दृढं प्रतिरुन्ध्यात्"–प्राह राजदारिका ।

"जयतु····जयतु····देवः"– सहसा प्रविश्य निवेदयामास प्रतिहारः । "एष दूतः शिविस्थानदुर्गादुपस्थितो देवदर्शनं सद्यः प्रार्थयते । श्रुत्वा देवः प्रमाणम् ।" क्षणमेकमवलोक्य राजकुमारं वृषवाहुं विमनस्केन राज्ञाऽनुमोदितश्च प्रवेशयामास स्थूलकायमेकं घर्मजलक्लिन्नाश्ववारवेषं प्रौढवयसं पुरुषम् ।

"जयतु····जयतु देवः"– प्रणम्य स्वामिनं मुकुलितहस्तः निवेदयितुमारभत स गूढपुरुषः । "सविनयं विज्ञापयति स्वामिचरणयोः शिविस्थानदुर्गस्योपपालो यत् राज्यस्य पाश्चात्यसीमास्पर्शिषु यवन-प्रदेशेष्वादित एव कृतसंनाहा रिपोः औष्ट्री सेनाऽभिक्रंस्यमाना नूनं लक्ष्यते । स्वामिप्रेषिता औष्ट्री सेना गजसेना च तत्प्रतिरोधाय सुनियोजितैव । एतत्त्वपरं चिन्तास्थानं यदधिगम्य कर्णोपकर्णिकया परचक्रवार्तामितद्देशीयाः सामन्ता ग्रामप्रधानाश्च बहवः, स्वामिनः प्रतापेनैतावत्कालपर्यन्तं किंचिदपि विपरीतं चेष्टितुमसमर्थाः, स्वशिरांस्युन्नमयन्त इव स्पर्शाविश्वासार्हैः सूचितास्तदनुयायिनः सामान्याश्च जनाः । विशेषतोऽस्मिन् शिविस्थाने । आदित एव मौर्ख्यवशादवशंवदाः स्वामिनोऽन्त्याः सामान्याः जनाः सद्योमृतायाः कस्याश्चिज्जरत्या उन्मत्तप्रायाया निधनं निमित्तीकृत्यानर्गलं

किमपि किमपि प्रलपन्तः न लक्षयन्ति स्वकुशलं, न चित्ते कुर्वन्ति स्वामिनश्चित्तौदार्यं, न विगणयन्ति स्वामिनः प्रतापम्। उत्तेजिता इव उद्वृत्ता इव निरंकुशा इव विचरन्ति शस्त्रहस्ताः। नितान्तमशांतेयमांतरिकी परिस्थितिः निवेदिता स्वामिचरणयोरिति।"

"वज्रस्य तूपस्थितिः शिबिस्थानप्रदेश एवाभीष्टतरा"–सहसा प्राह राजा दहरः। "स हि तत्र स्थितः न केवलं पाश्चात्यां सीमां रक्षेदपि तु निरंकुशायमानान् तान् क्षुद्रान् सामंतान् ग्रामणीब्रुवान् साधारणांश्च जनान्नियंत्रणे कठोरे स्थापयेत्। स्वभावत एव राजद्रोहिणस्ते नराधमा अस्यां संकटवेलायां प्रतिशोधावेशांधा विलुप्तविवेकास्तथा नाम आचरेयुर्यथा राज्यमिदं शतशः स्वतोविदीर्णं शत्रो सर्वभक्षकस्य भक्ष्यतामनायासेनैवोपेयात्। ···वद्वज्र ! प्रतिष्ठस्व शीघ्रमेव····। देवलनगरीपरिरक्षार्थं च, सेनापते !, कूटयुद्धनिपुणां पदातिसेनां– यथाऽऽह वत्सा– अद्यैव प्रेषयतु भवान्। प्रतिरोधार्थं च यवनानां सरिन्मुखेनान्तःप्रविविक्षूणां शाक्तीकवाहिनी नौवाहिनीम्····। शीघ्रमेव वयं स्वसुहृदामन्येषां भारतीयानां नृपाणां सेनाभिः साहाय्यार्थमागताभिरुपोद्बलितसामर्थ्याः प्रबलतरां सेनां तत्र प्रेषयितुं समर्थाः स्याम।"

वदंश्चैवमुदतिष्ठत् विश्रामार्थं किलाशांतस्वांतः।

... राजदारिकायास्तु मानसं, निशम्य पितुर्व्यवस्थामनाश्वस्तमपि प्राप्तायां परिस्थितौ कामप्यन्यां समीचीनतरां सूचयितुमसमर्थं, स्तब्धं, शिबिदुर्गायैकलमेव प्रस्थितं सस्मितमपि चिताम्लाननयनं सपरिहासमापृच्छमानमपि तदनुज्ञां लोचनाभ्यां संगृह्णन्तमिव तस्या भगिनिकाया बाल्यसख्याः मूर्तिमपुनर्दर्शनाऽऽशंकया भ्रातरं वज्रबाहुं प्रणम्योदासीनं, ततो तस्मिन् निर्गते एकाकिनमिवाऽऽत्मानमनुभवद्दुश्चितयाऽऽक्रम्यत।

सा च तस्या दुश्चिंता, युगदीर्घ इव शनैः शनैरन्तमुपयाते तस्मिन् दिवसे, पाश्चात्यसागरे निमग्ने दिनकरे तत्समवेदनयेव

निष्प्रभे, घनतरीबभूव। मंत्रणाकक्षे हि सद्योविकसितकुसुममाला-सुवासिताभ्यंतरेऽपि रत्नदीपभाभासितेऽपि निस्तेजस्क इव भासमाने, पितुः संनिधौ समुपविश्यान्यमनस्कतया तस्य मंत्रणां मंत्रिभिस्तैस्तैः सह शृण्वती— सा— सहसाऽक्षिलक्ष्यीचकार द्वारपालेन ससंभ्रम-मन्तःप्रवेशितं परिम्लानं दीर्घदीर्घं श्वसन्तं रक्तारक्तवस्त्रमश्वसा-दिनमेकम्। अनुमाय च तं देवलदुर्गाधिकारिष्वन्यतमं दुर्वार्ताहरं सावधाना कर्णागतपंचप्राणेव श्रोतुमारभत।

"विनष्टाः स्मः— स्वामिन्! विनष्टाः स्मः" प्रारभत निवेदयितुं स दूतो भावातिरेकास्फुटाक्षरः। निहतः पापैरस्माकं दुर्गपालः। विजितो दुर्गः। दूषितो देवालयः। खंडितो देवीविग्रहः। पादाक्रांतश्च समस्तो देवलनिगमः।"

"अहो— अत्याहितम्"— उज्जगार धीसचिवः।

"सविस्तरं निवेदय!"— आज्ञापयामास राजा दाहरः।

"—यदा खलु पाषाणवर्षया तीव्रया समुद्विग्नाः आक्रामकाः सागरतीरे कांदिशीका इतस्ततः पलायितुमारभन्त तदा विरली-भवति निशांतध्वांते ईषल्लक्ष्यविशेषो महाकायः पोतः एकः सागर-मध्यवर्तिनः निश्चलाद्विशालान्नौसमूहादग्रे सृत्वा वेगेन महता तीरमुपससार। सांनिध्यमात्रेण च तस्य शांतोद्वेगाः— शतगुणित-साहसा इव— ते यवनाः पाषाणवर्षां धैर्येण महता सहमानाः, स्वस्व-कर्मणि व्यापृताः, : केचिन्नौसमूहात्तस्मादवतीर्योपतीरमागच्छद्भ्य उडुपेभ्योऽसंख्येभ्यः शस्त्रास्त्रसंभारान् रोधस्यवतारयितुं, केचिद्दुर्ग-द्वारविदारकान् तीक्ष्णलोहकीलमुखान् प्रबलान् दारुखंडान्— पोतेभ्यः रोधस्यवतारितान्— दुर्गद्वारसमीपे नेतुं, केचित् प्रलंबाः रज्जुनिर्मिताः निःश्रयणीः— प्लवैस्तीर आनीताः— प्राकारमभितः सर्वासु दिक्षु स्थापयितुं, बहवश्च वर्मिता अप्रतिहतगतयः पाषाणवर्षया फलकपाणयः नैस्त्रिंशिकाः नगरी— एतावत्या कालकलया विनिद्रां भयजडां— समुद्दिश्य तैस्तैर्मार्गैरुपसर्तुमारभन्त।"

रक्षकान्, निशितशरवर्षिणो धनुर्धरान्, तिरस्कृत्य मृत्युभयं शनैः शनैरप्रतिहतगति समुपसर्पतः रिपुसैनिकान् शक्तिभिर्विकलांगान् कुर्वतः शाक्तीकान्, समुल्लंघ्य मृतशरीराणि प्राकारभित्तिमारोढुं प्रवृत्तान् यवनान् कुंतैश्छिन्दतः कौंतिकान्, आरुह्य महता प्रयासेन प्राकारभित्तिं पदमन्तः स्थापयितुं प्रयतमानान् म्लेच्छान् खड्गैः कृन्ततः नैस्त्रिंशिकान् प्रोत्साहयितुं प्रारभतानवरतम् ।"

"....सहसाऽनामिकया कयाचिदाशंकया समाकृष्टचित्तश्च.... उपरि निरभ्रे नीले गगने सगर्वं चलन्तीं बालभास्करकरप्रोद्भासितां सिंदूरवर्णां प्रोत्तुङ्गध्वजदंडमंडनायमानां देवीपताकां क्षणमेकम-पश्यत् ।"

"....अपश्यच्च तामनवरतं पतद्भिः दुःसहवेगैर्मुष्टिप्रमाणैः पाषाणखंडैः निशितकोणैरसंख्यैः लक्ष्यीक्रियमाणाम् ।"

" 'अधःपतितायामस्यां सर्वेषां देवलवासिनामधःपतेन्नूनं धैर्यम्'– इति विदन्, 'कुतः खलु वर्षेयं पाषा' इति दृष्टिं तीक्ष्णामधः सागरतीरेऽसंख्ययवनसैनिकदुर्लक्ष्यप्रायसिकते व्यापारयन्, अद्राक्षीत् तमेव महाकायं पोतम्– अधुना बालभास्करकरप्रोद्भासितहरित-पताकं– तीरमुपगतं, तन्निगडिताया एकस्या अश्मप्रक्षेपिकायाः समीपे लोहमूर्तिवदविचलं तिष्ठन्तं तच्चालकांश्च त्रिचतुरान् बलान् नाविकसैनिकान् दर्शयित्वाऽसकृत् तामेव देवीपताकां पाषाणवर्षाय निरंतराय समादिशन्तं महाप्रमाणं बलशालिनं च कंचित् योद्धारम् ।"

'अयमेवास्या दुश्चेष्टायाः परिकल्पकः'– इति विनिश्चित्य च यावत् समीपवर्तिनं धनुर्धरं तं लक्ष्यीकर्तुमादिशति, तावदक्षि-लक्ष्यीचकार तां देवीपताकां पाषाणाघातभग्नात् ध्वजदंडात् सहसाऽधःप्रशमानां विदीर्णपट्टवस्त्राम् ।"

"तन्मात्रव्यग्रचित्तश्च सहसाऽशृणोत् पार्ष्णिसमुद्भूतं रणगर्जनं विपरीततया भागधेयस्य सर्वथा समुपेक्षितामुदीचीं प्राकार-

"अवलोकयंस्तान् दृष्ट्याऽनिमेषया, प्राकाराग्रे दृढमवस्थितोऽस्माकं दुर्गपालश्च यावद्विचिंतयति– 'सुनिश्चितमाक्रमणव्यूहं प्रत्यक्षेऽवतारयन् द्विषन्, समुपरुद्ध्य तीरं, नगरमाक्रमितुं बद्धपरिकर इव लक्ष्यते। कदाचिद्विजित्य नगरीं, निष्क्रियीकृत्य दुर्गसैन्यं स: निष्कंटकेन सिंधुसरिन्मार्गेणान्त:प्रवेशयितुं स्वसेना ईहते····। अत एव···· तास्तस्य भीमकाया नौका:···· समूहान्निश्चलात् पृथग्भूत्वा प्राच्यां दिशि सरन्त्य इव लक्ष्यन्ते····। परंतु···· परंतु···· काश्चिन्नौका: प्रतीच्यामपि दिशि प्रवसन्त्य इव दृश्यन्ते····। तत्···· किं खलु संकल्पितं स्यात् तेन'– इति, तावदनुबभूवानभ्रवज्रपातं पतन्तीं मर्मभेदिनी पाषाणवृष्टिम्।"

"कुत: खल्वियम्– इति चकित–चकितं सर्वतो दृष्टि व्यापारयन् चाऽद्राक्षीत् तां···· सागरमध्यवर्तिनि नौकासमूहे दृढं खचिताभ्योऽश्मप्रक्षेपिकाभ्यो दुर्गमेव केवलं समुद्दिश्य मुसलधारं समापतन्तीम्।"

"अशृणोत् तत्क्षणमेव, चर्मफलकेन संरक्ष्यमाण:, नौकास्थितानां तीरवर्तिनां नगरीमुपसर्पतां दुर्गं परिवेष्टयतां संख्यातीतानां यवनसैनिकानां कंठेभ्य: सहसोद्गत न्यक्कृत्य सागरगर्जनं तिरस्कृत्य प्रभंजनतर्जनं प्रसह्य दिक्षु सर्वासु प्रसरन्तं रणघोषं···· 'अल्लाहो अकबर····! अल्लाहो अकबर!' इति।"

"अपश्यच्च तत्क्षणमेव, तीरवर्तिन: नगरीसमीपवर्तिनश्चाऽऽक्रामकान् समुद्यतखड्गमुत्क्षिप्तभल्लं समुद्धृतशक्तिकमाक्रामतो दुष्प्रसह्येन वेगेन, नौस्थितांश्च कृतपुंखान् धनुर्धरान् वर्षतस्तीक्ष्णान् शरान्।"

" 'समारब्धं नूनं शत्रुणाऽऽक्रमणम्'– इति विचिन्त्य च स: सहसा समुत्तेजितो– 'मायया पुरुरूप इव'– रक्षास्थानेषु प्राकारपरिक्लृप्तेषु बहुषु युगपदिवोपस्थाय, दारुणदृषद्वर्षिणो दृप्तान्

रक्षकान्, निशितशरवर्षिणो धनुर्धरान्, तिरस्कृत्य मृत्युभयं शनैः शनैरप्रतिहतगति समुपसर्पतः रिपुसैनिकान् शक्तिभिर्विकलांगान् कुर्वतः शाक्तीकान्, समुल्लंघ्य मृतशरीराणि प्राकारभित्तिमारोढुं प्रवृत्तान् यवनान् कुंतैश्छिन्दतः कौंतिकान्, आरुह्य महता प्रयासेन प्राकारभित्तिं पदमन्तः स्थापयितुं प्रयतमानान् म्लेच्छान् खड्गैः कृन्ततः नैस्त्रिंशिकान् प्रोत्साहयितुं प्रारभतानवरतम् ।"

"....सहसाऽनामिकया कयाचिदाशंकया समाकृष्टचित्तश्च.... उपरि निरभ्रे नीले गगने सगर्वं चलन्तीं बालभास्करकरप्रोद्भासितां सिंदूरवर्णां प्रोत्तुङ्गध्वजदंडमंडनायमानां देवीपताकां क्षणमेकमपश्यत् ।"

"....अपश्यच्च तामनवरतं पतद्भिः दुःसहवेगैर्मुष्टिप्रमाणैः पाषाणखंडैः निशितकोणैरसंख्यैः लक्ष्यीक्रियमाणाम् ।"

" 'अधःपतितायामस्यां सर्वेषां देवलवासिनामधःपतेन्नूनं धैर्यम्'– इति विदन्, 'कुतः खलु वर्षेयं पापा' इति दृष्टिं तीक्ष्णामधः सागरतीरेऽसंख्ययवनसैनिकदुर्लक्ष्यप्रायसिकते व्यापारयन्, अद्राक्षीत् तमेव महाकायं पोतम्– अधुना बालभास्करकरप्रोद्भासितहरितपताकं– तीरमुपगतं, तन्निमण्डिताया एकस्या अश्मप्रक्षेपिकायाः समीपे लोहमूर्तिवदविचलं तिष्ठन्तं तच्चालकांश्च त्रिचतुरान् दक्षान् नाविकसैनिकान् दर्शयित्वाऽसकृत् तामेव देवीपताकां पाषाणवर्षायै निरंतरायै समादिशन्तं महाप्रमाणं बलशालिनं च कंचित् योद्धारम् ।"

'अयमेवास्या दुश्चेष्टायाः परिकल्पकः'– इति विनिश्चित्य च यावत् समीपवर्तिनं धनुर्धरं तं लक्ष्योकर्तुमादिशति, तावदक्षिलक्ष्यीचकार तां देवीपताकां पाषाणाघातभग्नात् ध्वजदंडात् सहसाऽधःभ्रंशमानां विदीर्णपट्टवस्त्राम् ।"

"तन्मात्रव्यग्रचित्तश्च सहसाऽशृणोत् पार्ष्णिसमुद्भूतं रणगर्जनं विपरीततया भागधेयस्य सर्वथा समुपेक्षितामुदीचीं प्राकार-

भित्ति निःश्रेणीभिः निःशब्दमारुह्य मंदिरप्रांगण अकस्मादाविर्भूतानां संनद्धानामासिकानामसंख्यानां शत्रुसैनिकानाम् ।"

"तत्क्षण एव साक्षात्कृत्य संकटमकल्पितोपनतमीपदप्यविचलितः सहसाऽऽकृष्य समीपवर्तिनो मम हस्तात् खड्गमारक्तलोचनोऽग्रे ससार । एकाक्येव च प्रारभत योद्धुं संख्यया प्रतिक्षणं परिवर्द्धमानैः शत्रुसैनिकैः सह ।"

"प्रवृत्त एव चाकस्मादशृणोद्देवलदेवीमंदिराभ्यंतरप्रदेशादाविर्भवन्तं जयघोषमुभयलोकविरुद्धमाचरता केनापि भारतीयेनाधमेन प्रदर्शितं गुह्यं प्रवेशमार्गमाक्रम्योद्गच्छतां, गर्भगृह एव खड्गाघातेनैकेनैव मारयित्वा भयजडं विस्फारिताक्षं देवीपूजकम्, अश्राव्यैरपशब्दैस्तिरस्कृत्य तीक्ष्णैः शस्त्रप्रहारैः खंडयित्वा देवीविग्रहं चूर्णयित्वा काचदीपभांडानि सदर्पमुपहसतां, सगर्वं च पदं मंदिरप्राङ्गणे न्यस्यतां म्लेच्छानाम् ।"

"विदित्वा चाऽऽत्मानं पराजितं, रणाङ्गण एव प्राणान् विस्रष्टुं कृतनिश्चयो मां दृष्टिक्षेपेणैकमात्रेण निःशब्देनाऽपि भावमुखरेण ततो निर्गन्तुं निवेदयितुं च तस्यान्तिमं प्रणामं स्वामिचरणयोः समादिदेश ।"

"अनिच्छुकोऽपि तं तत्र खड्गमात्रद्वितीयं हातुं योद्धुमसंख्यैः रिपुसैनिकैः सह " अहं तस्य तं चरममादेशमुपेक्षितुमपारयन् ततोऽपासरम् । प्रयस्यंश्चात्मानं म्लेच्छसैनिकानामन्यतममिव प्रदर्शयितुं शनैः शनैश्च प्राकारप्राङ्गणान्निष्क्रमितुं– कतिपयक्षणानंतरमेव– अद्राक्षं तं युगपत्पातितैर्यवनखड्गैः कृतांतदंष्ट्रासंनिभैः शतशः शकलीकृतम् !"

सहसा समाक्रांतेवाभाय हृदयेषु श्रोतॄणां बहिरुत्प्लवमानेन शोकेन शब्दातीतेन निस्तेजस्का बभूव रत्नदीपप्रभा– निश्चला– स्वयं श्रूयमाणेव तं दारुणं वृत्तांतम् ।

"अहं तु वराकः"– विरम्य क्षणमात्रं पुनरारभत सः स्वामिभक्तः पुरुष उच्छुष्कतालुः, "संयम्य कथमप्यात्मानं, तावता कालेन विदीर्णमहाकपाटेन शवमुखेनेव व्यात्तेन महाद्वारेणानवरतमन्तःप्रविशद्भिर्यवनसैनिकैः सोत्साहैर्दीनदीनशब्दमुखरैर्मंदिरमेवोद्यतायुधमुपसर्पद्भिरपरिलक्षितः, प्रविश्य दुर्गपालनिवासं शून्यशून्यं तच्छयनकक्षाभ्यंतरवर्तिना गुप्तेन मार्गेण प्रस्थितः, समाक्रम्य योजनदीर्घमुग्रगंधिनं तमस्विनं विषमं पंथानं···· नगरात् सुदूरे क्षेत्र एकस्मिन् पचेलिमसस्यसंपन्ने निर्गतः, निरन्तरं प्रवसन्, स्वामिचरणयोरुपस्थितो यथाऽऽदेशम् ।"

"····रिपोः प्रथमोऽयं पदप्रक्षेपोऽस्माभिः प्राणानपि तृणीकृत्य प्रतिक्षेप्यः"– प्रयासेन महता पर्यवस्थाप्याऽऽत्मानमाह सिंधुराजकन्या, दीपशिखायां विनिगडिताऽऽरक्तदृष्टिः । "चातुर्येण महताऽस्माकं चारचक्षूंपि वंचयित्वा, निश्चयेन वज्रदृढेन सेनासंनहनं सर्वांगीणं कृत्वा, कौशल्येनाद्वितीयेन स्वं बलं सिंधुसागरवेलायामवतार्य···· रिपुणाऽस्माकं मर्मस्थाने···· तीर्थस्थाने योऽयं तीव्रः प्रहारः कृतः, स यदि शीघ्रमेव रिपुं समूलमुत्खाय क्षिप्त्वा च तमगाधे सिंधुसागरे न प्रतिघृतस्तर्हि स– यथाऽऽह वज्रः– पश्यतामेवास्माकं सर्वेषां मूलं व्यादाय समस्तं राज्यमाक्रमिष्यति ।"

"देवलपत्तनं हि तडिद्वेगेनैवं विजित्य यवनेन···· न केवलमस्मद्राज्यस्य दुर्बलतमं स्थानं···· अपि तु श्रद्धापरवशस्यास्माकं प्रजाजनस्य धैर्यमपि दूषयितुं चेष्ट्यते ।"

'आदित एवास्मद्राजवंशं कुत्सिततया दृष्ट्याऽवलोकयन्तो दाक्षिणात्याः सैधवा, देवलदेवीविग्रहखंडनं दैवप्रकोपसूचकं मन्यमाना, भवनमयिष्यन्ति स्वशिरांसि रिपुसंमुखं···· क्षुद्राणि तृणानीव झंझावाताभिमुखम् ।"

"अत्यल्पमिदमुक्तम् । समस्ते सिंधुदेशे पूज्यमानायाः, मेघवानां राजवंशानां रक्षिकात्वेन समयादतिप्राचीनाद्विख्याताया

देवलदेव्या भंजनमिदं राजभक्तानपि सैंधवान् नूनं क्लीवयिष्यति ।"

"सागरमार्गेण च", प्राह धीसचिवः, "निष्प्रतिरोधं समापतद्भिरायुधिकैस्तुरगैः शस्त्रास्त्रैश्चानवरतमुपचीयमानबलो यवनः शीघ्रमेवाजय्यो भविष्यति ।"

"अस्माभिः संप्रेषिता कूटयुद्धनिष्णाता सेना···· एतावता कालेन विज्ञाय देवलनगरीं रिपुणा पादाक्रांतां मार्गाक्रमणाद्विरता, तात, भवतः समयोचितमादेशं प्रतीक्षमाणा भवेत् । अतः सा त्वरितमेवाधिकसैनिकबलोपवृंहितसामर्थ्या कुशलतरसंचालकसंचालिता भवता गूढैः भूमार्गैः देवलनगरीवर्तिषु प्रासादेषु गृहेष्वापणेषु निभृत-मुद्गन्तुमकस्माच्चाऽऽक्रमितु विद्युद्वेगेन यवनसैनिकान् नगरे दुर्गे तीरे च तत्र तत्र वर्तमानान् विश्रब्धान् विजयोन्मत्तान् समादेश्या इति मम मतम् ।"

"अनभ्रवज्रपातसंनिभेन प्रथमेन शत्रोः प्रहारेण भयजाड्यं लंभिता अपि देवलनगरीवासिनो देवीविग्रहखंडनमत्याचारिणां विज्ञाय समुत्तेजिता, अवलोक्यासंख्यान् बांधवसैनिकान् नः सशस्त्रान् धरणीमातुरुदरादाविर्भूतान् पुनःप्रादुर्भूतधैर्या, अस्मान् सहायिष्यन्त–इत्यत्र न संशयलेशोऽपि"– जगाद राजदारिका ।

परंतु– 'वामे विधौ नहि फलन्त्यभिवांछितानि'– इत्यत्र न संशयलेशोऽपि ।

यदा हि सिंधुराजेनाविलंबं प्रेषितैरभ्यासादननिपुणैरासिकैः परिवर्धितसामर्थ्या सेना, प्राप्य स्वामिन आदेशं, समाक्रम्याध्वानं सजवं, समुपगत्य गूढं देवलनगर्याः परिसरवर्तीनि सस्यबहुलानि क्षेत्राणि, भूमार्गैः सुगूढैः वणिक्श्रेष्ठानामावासेषु सार्थवाहानां भांडारगृहेषु सामान्यनागरिकाणां गृहेषु च नैशेऽघतमसे निःशब्दं प्रादुरभवत्– तदा, भूमिमुद्भिद्य प्रकटितामिव तामवलोक्य महान् खल्वासीन्नागरिकाणां विस्मयः, प्रत्यभिज्ञाय तां सैंधवसेनामाततायि-

शासनार्थमागतां तेषां हर्षः । संप्राप्य तन्माध्यमेन सिंधुराजस्य साहाय्यदानार्थमनुरोधं तेषां समुत्साहः । परिहरन्तश्च कालातिपातं ते तस्यामेव कालतमस्विन्यां ज्ञात्वा नगरमभितस्तेषु तेषु चत्वरेषु तासु तासु पण्यवीथिकास्वधिकृतान् यवनसैनिकगुल्मान् तंद्रालसान्– सहसा तान् आचक्रमुः । विदधुश्चासावधानान् तान्– कांश्चिदुत्सारित-तनुत्रान् दूरीकृतशिरस्त्राणान् निःशस्त्रान् सिंधुसलिलसंस्पर्श-शीतलस्य नैशसमीरस्य स्पर्शसुखं मुद्रितनयनमनुभवतः, कांश्चित् स्मारं स्मारं वियुक्तं कौटुंबिकं परिजनं निःशब्दं खिद्यतः, कांश्चिदसकृत् परिगणय्य मनस्येव सौवर्णमुद्राराशिं लुंटितं नगरश्रेष्ठि-नामावासेषु हृष्यतः, कांश्चिद्वारं वारमाक्रमणचातुर्यं विलक्षणं स्वसेनापतेः सुहृद्गोष्ठीषु प्रशंसतः, कांश्चिन्मूर्तिपूजकानां– खंडितायामपि मूर्तौ निष्क्रियत्वमुररीकुर्वतां– भीरुत्वं परिशीलयतः, कांश्चिद्भीषणं समरप्रसंगं नातिचिरादेवावश्यंभाविनं परिकल्पयतः, कांश्चिदसंख्येष्वपि भीषणेषु भाविसमरप्रसंगेषु सुनिश्चितं विजयं स्वपक्षस्यैवोच्चैः प्रतिपादयतो– गतप्राणान् ।

इयान् तीव्रः खल्वासीत् तेषां प्रहारोऽनपेक्षितश्च यदसंख्याः किल यवनसैनिका, अनभिज्ञा एव प्रत्याक्रामकाणामम्रियन्त ।

कतिपयेष्वेव च क्षणेषु देवलनगरीवासिन आक्रामकेभ्यो मुक्तिमलभन्त ।

....अलभन्त मुक्तिम् । परंतु तात्कालिकीम् ।

तिरस्कृत्य दुर्गपालप्रासादवासं सुखकरं, सिंधुसागरतीर-वर्तिनि प्रबलपयोनिधिपवनदोलायमाने पोत एव स्वकीये क्लृप्त-वसतेर्यवनसेनापतेः संख्यातीतानां च तत्सैनिकानां सिंधुसरिन्मुख-प्रदेशविश्रांतास्वगणितासु नौकासु निवसतां, हि, ते किंचिदप्यपकर्तुं नाशकन् ।

दुर्दैवोपहतमतयश्चाचिंतयन्त एवोपायान् कष्टसाध्यान् तेषां विनाशस्य, प्राप्तेन क्षणिकेन विजयेनैव धन्यंमन्या, दाहं दाहं मृत-

यवनदेहान् बृहतीषु चितासु होलिकोत्सवमिव मानयितुमारभन्त ।

यवनसेनापतिस्तु···· अधिगत्य स्वपोतरक्षकेभ्यः प्रत्याक्रमण-वार्त्तामपेक्षितामप्यनपेक्षितविधां किंचिदप्यनुत्तेजितः सावधानोऽनभिज्ञः प्रत्याक्रामकस्य सैंधवसैन्यस्य वास्तविकसामर्थ्यस्य विनिश्चित्य प्राप्तायां परिस्थितौ चातुर्यमेव शौर्यापेक्षयाऽधिकं श्रेयस्करमिति····, सहसाऽऽज्ञापयामास नौबलं स्वकीयं तीरादपसर्तुम् । मध्येसागरं नीत्वा च तत्, संप्रधार्य किमप्यात्मनैव, विबभाज तद्द्विधा । आदिदेश च तत् प्रत्येकं सद्यःप्रतिशोधभावनोदग्रयाऽपि संयमितया तीक्ष्णयाऽपि प्रशांतया वाण्या समुपसर्तुं प्राच्यं पाश्चात्यं च सागरतीरप्रदेशं रिपुनगर्या योजनमात्रदूरवर्तिनं, समवतारयितुं तत्र नैस्त्रिंशिकबलं पादातं, ग्रहीतुं शत्रुबलमवलोक्य सिंधुसरिन्मुखप्रदेशात् क्वाऽपि विलीनान् यवनपोतान् समुत्प्रेक्ष्य तान् पलायितान् विजयोल्लासमग्नं शत्रुस्थानमेकमात्रमवशिष्टं देवलदुर्गमुत्साहेन विवेकशून्येन प्रतिरुन्धत् पार्ष्णिग्राहं, समाक्रमितुं तद्दुःसहेन वेगेन, कर्तितुं च तद्भयचकितं विषादजडं विलुप्तधैर्यं···· निरपवादम् ।

यथा वाहिनीपतिस्तथा वाहिनी । सा हि स इव प्रत्याक्रमणेनाऽऽकस्मिकेनैपदप्यविचालिता, समवलोक्य स्वजातिबांधवान् सहस्रशः हन्यमानान् स्तोकमप्यनिर्विण्णा, तीक्ष्णप्रतिशोधभावनामात्रप्रेर्यमाणा, मंत्रचालितेव, घोरे तस्मिन् नैशे तमसि तस्याऽऽदेशान् पालयामासाक्षरशः ।

आरभत च सैंधवसेना समनुभवितुं विषदिग्धं परिणाममात्मन आक्रमणस्यासर्वंकषस्य । अथाच्चाचिरादेव दिष्टान्तमात्यंतिकं विरलीभवति नैशे तमसि दृष्ट्वाऽसंख्यान् वर्मितान् खड्गोदग्रान् यवन- सैनिकान् प्राच्याः प्रतीच्याश्च गर्भगह्वराभ्यामिव सहसाऽऽविर्भवतो विस्मिता, समनुभूय तेषां दुष्प्रसहमाक्रमणवेगं कतिपयेष्वेव क्षणेषु प्रद्रावप्रवृत्ता, देवलदुर्गस्थितेन यवनसैन्येन प्रवृद्धोत्साहेनोद्घाट्य महाद्वारं समाक्रांता, साक्षात्कृत्याऽऽत्मानं सर्वतः निरुद्धप्रसरं विगलितधैर्या, भयकांदिशीका ।

आरभत च तदनंतरं निष्प्रतिरोधाऽकुतोभया यवनसेना विजयोन्मत्ता तत्पतिना निःशब्दमनुज्ञाता– विचार्यैव किमपि स्वात्मनैव– देवलनगरीनिवासिनो विलुप्तोल्लासान् भयजडान् तत्र तत्र निलीनान् तथा हन्तुमन्विष्यान्विष्य यथाऽचिरादेव तन्नगरं···· जंघयोविदारितानां बालकानां छिन्नमस्तकानां युवकानां वक्षसि हिंसितानां प्रौढानां कंठे छुरित्वा मारितानां वृद्धानां स्तनयोः लूनानां युवतीनां जघने विदीर्णानां नारीणां क्षतेभ्यः प्राणांतकारिभ्योऽजस्रं प्रवहता रुधिरप्रवाहेणाऽऽप्लावितं, निरंतरं निःसरता मेदसा पिच्छिलं, कुगंधि··· पूर्वाचलाधिरूढं कोपेनेवाऽऽरक्तं भगवन्तं सहस्रकिरणं समुपेक्ष्य निर्नातिपोः पिशाचाधिपस्य रंगस्थललीलां भीषणामधारयत् ।

प्रहरमात्रानन्तरं च– लुंठितप्रासादैरुच्चैर्हसद्भिरपशब्दमुखरैराक्रामकैः पण्यवीथिषु प्रासादेष्वट्टालिकास्वावासेषु देवतायतनेषु तत्र तत्र प्रज्वालितैर्निर्घृणैः प्रस्फुरत्स्फुलिंगैः ज्वलनैस्तीव्रज्वालैः लेलिह्यमानं स्थातंत्र्यमेधस्थंडिलशोभाम् ।

"····स्वामिन् ! भस्मसात्–कृतं निदाघचंडभास्करकरप्रवर्द्धितैः प्रचंडैस्तैः ज्वलनैः समस्तं तद्देवलनगरमधुना योजनदीर्घं विकीर्णकीकसं लोटघ्नरमुंडं प्रकीर्णास्थिपंजरं महाश्मशानमिव भयंकरं लक्ष्यते"– आह गुप्तचरोऽन्यः प्रवृद्धश्मश्रुः क्षामवदन आरक्तनयनः, कथमपि तस्मान्नगरान्निर्गतः, कष्टेन महताऽतिक्रम्य दीर्घदीर्घतममप्यध्वानं राजधान्यामागतः, स्वामिसंमुखं च समुपस्थितः, श्रावयन् पितुः समीपे मूर्तिवन्निश्चलमवस्थितां राजकन्यामधोमुखमुपविष्टान् किंकर्तव्यविमूढान् राजमंत्रिणश्च– अपरेद्युरेव सायंकाले ।

"एतत्तु मां व्यस्मापयदरयंतं यत्– समवलोक्य देवलनगरीं नामशेषीभूतां सिद्धसाध्य इव तत्क्षण एव नियंत्रितस्वबलः प्राप्तेनानेनाभूतपूर्वेण विजयेनेपदप्यविस्मितः स यवनसेनानीः स्थापयित्वा देवलदुर्गे उद्ध्वस्तप्राये प्रधानं स्वं कटककार्यालयं, प्रहरमात्रमप्यविश्राम्यन्,– प्रचंडतरं घनराशिं विजेतुं बद्धपरिकरोऽक्षदेवी इव

शारिपट्टे परिणायोद्यतः— सागरमध्यादविच्छिन्नं समापतद्भ्यो महाकायेभ्यः पोतेभ्योऽसंख्यान् पारसीकान् तुरङ्गमान् संख्यातीतान् सैनद्धान् खड्गधारिणः पिनद्धान् कौंतिकान् कृतहस्तान् धानुष्कान् सागररोधसि निष्कंटकेऽवतारयितुं, प्लवांश्चातिदृढान् प्रक्षेपिकावाहिनस्तीव्रगतीन् सहस्रशस्तेभ्योऽवतार्यमाणान् सिंधुसरिन्मुखप्रदेशे विशाल आयोजयितुं– स्वशक्तीः लीलयैव प्रेरयामास ।"

"पश्यत एव च ममाग्रन्यस्याऽऽरुह्य दूरवर्तिनमेकं महावृक्षं, स योजनदीर्घः सिंधुसागरतीरप्रदेशः सिकतिलः स्वस्वकार्यमग्नैर्यवनसैनिकैराकुलाकुलः, लब्ध्वा चिराद्भूस्पर्शं हृष्टानां रेचितोत्सुकानामश्वानां ह्रेषारवैर्निनादितः, स्कंधावार इव भातुमारभत, विस्तृतं सिंधुसरिन्मुखं च सर्पद्भिरुपतीरं जवनैरुडुपैः कुशलनाविकसंचालितैः संमर्दितं सैनिकपत्तनमिव ।"

"....कुष्ठव्रण इवाऽऽपाततुच्छोऽपि विपाकभयंकरोऽयं रिपुसैन्यसंनयः, सत्येव समयेऽचिकित्सितः, समग्रं भारतवर्षमाक्रमेत नूनम्"– आह धीसचिवः चिंतितः ।

"निरापदेन सागरेण रक्षितपार्ष्णिभागो, यवनदेशेभ्योऽनवरतं समापतद्भिरनुकूलैः सामयिकवातप्रवाहैः सजवमुपतीरं प्रापितैर्भीमकायैः पोतैः सततमुपोद्वलितसामर्थ्यः रिपुरयं न जय्यः सुहृत्साहाय्यं विना । यदि नाम चेरराजो वलभीशो वा शिलादित्यः स्वाभिमानीन्द्रराजो वा राष्ट्रकूटवंश्यः.... समाकर्ण्यास्माकमावाहनं साक्षात्कृत्य विपदोऽस्या वास्तविकं स्वरूपं राष्ट्रभक्तिप्रेरितो विजित्य संकीर्णां स्वार्थपरायणतां स्वं नौकाबलं प्रबलमस्माकं साहाय्यार्थं प्रेषयेत्.... तर्हि व्यापार्य तत् सिंधुसागरे यवनसागरे वा वयं रिपुं पार्ष्णिपीडं पीडयन्त, उदीच्यायाः सीमाया आहूतैः दक्षिणाशाभिमुखं दुःसहवेगं प्रसरद्भिः स्वपदातिबलैरभिभवन्तः,– सैंधवसैन्यसागरस्य सिंधुसागरस्य च मध्ये निष्पीडयन्तः,– तं शीघ्रमेव नामशेषीकर्तुं समर्था भवेम"– प्राह महाबलाधिकृतः ।

"सुष्ठु भणितं भवता"– जगाद सकाकु राजदारिका। "कति नाम मासा व्यतीता ---भारतवर्षीयान् तांस्तान् नृपान् राष्ट्रसंकटस्यैतस्य प्रतीकारायाऽऽहूय ?"

"चत्वारः" प्रत्युवाचास्फुटाक्षरं सांधिविग्रहिकः।

"कियद्भिर्भारतवर्षीयैर्नृपैः वद्दु मानयित्वाऽस्माकमावाहनं स्वं स्वं बलमतिप्रबलं प्रतिरोधाय परचक्रस्य संप्रेषितमस्मत्-संनिधौ ?"– अपृच्छत्तीव्रस्वरा राजकन्या।

"नैकेनापि"– प्रतिजगाद धीसचिवः, परिहरन् व्यथितां दृष्टिं स्वामिनः।

"एवं सत्यप्याशास्ते भवान् यत्– अस्माकं साहाय्यार्थं ते बलं स्वं प्रेषयिष्यन्तीति ?"– अपृच्छत् सा।

अगदच्च सर्वान् निरुत्तरान् दृष्ट्वा– "अप्रियं खल्वेतत्। परंतु वास्तविकं पर्याकलनं वस्तुस्थितेः। ऋते काश्मीरनृपतेश्चंद्रापीडान्न कोऽपि भारतीयः राजा साहाय्यार्थं सेनाः स्वीयाः समर्पयिष्यति। एवं कृते ते खलु सहजवैरिणामन्येषां भारतीयानां नृपाणामाक्रमण-माकस्मिकं प्रतिरोद्धुमसमर्थमात्मानमुत्प्रेक्षन्ते। नोत्सहन्ते तु क्षीणदृष्टयः साक्षात्कर्तुं यत् पादाक्रांते तु समस्ते भारतवर्षे परकीयै-रेतैराक्रामकैः नावशिष्येरन् ते, नावशिष्येरन् च तेषां 'सहजा वैरिणः'।"

"अतोऽस्माभिः खपुष्पकल्पां साहाय्यसंपदमविगणयद्भिरेव प्रतीकारव्यूहो विरचनीयः। विरचनीयश्चातिशीघ्रमेव।"

"रिपुर्हि– अनभ्रवज्रपातनिभस्य सफलस्यैतस्य साहस-पूर्णस्याऽऽक्रमणस्याधिकतमं फलमुपबुभुक्षुः, प्राचीनतमस्य देवस्थानस्य तादृशेन विनिपातेनावसन्नगात्र्याः सैंधवप्रजाया विषण्णया मनो-

वस्थाया अधिकतममुपयोगं चिकीर्षुः, प्रतीकारक्षमाणि बलानि सीमाया उदीच्याया आनेतुं पर्याप्तं समयमस्मभ्यं दातुमनिच्छुश्च– यदहरेव बलानि स्वीयान्यभिक्रमक्षमाणि पर्यालोचयेत्– तदहरेव प्रतिष्ठेत नूनमुत्तराभिमुखः।"

"तत्– कस्मिन् खलु सामरिकदृष्ट्याऽस्मदुपयोगिनि स्थाने कृतोऽस्माकं सेनासंघातसेतुः रिपुसेनासागरमतिक्रम्य देवलसीमाः शीघ्रमेवोद्वेल्लन्तं द्वित्रान् मासान् प्रतिरोद्धुं समर्थः स्यात् ?– कथं नु मन्यते महाबलाधिकृतः ?"

"किमिति द्वित्रानेव मासान् ?"– समपृच्छद्वृद्धः सुमतिः।

"अतीतेषु हि तेषु– वर्षाकालिकप्रभंजनवातक्षोभिते सिंधुसागरे दुरुत्तार्येऽशांतपार्ष्णिः रिपुः समुद्वेल्लितसिंधुसरिज्जलप्रवाहाप्लाविते‌ऽस्मत्प्रदेशे बलानि स्वानि यथाभीष्टं व्यापारयितुमपारयन् नितांतमपरिचितेनाऽऽसारेण विचालितोऽस्माकं यथा जय्यः स्यान्न तथा एतेषु नैदाघेषु शारदेषु वा मासेषु।"

"समीचीनं भणति भर्तृदारिका"– जगाद वीरभद्रः।

"समयस्य महत्त्वमेतत् संयात्रानिपुणजातीयेनाऽपि रिपुणाऽनाकलितं स्यादिति तु मन्तुं नोत्सहते मम मानसम्"– अवोचत् राजकन्या। "मन्ये– उपसिंधुतीरं वेगेन प्रवहतां वर्षाप्राक्कालिकानां सागरिकवातानामधिकतममुपयोगं कर्तुं बद्धपरिकरेणैव तेन समयोऽयमाक्रमणाय वृणः स्यात्। एवं च सति– अर्थादापद्यते यत् स वर्षाकालिकानां संकटानामपि नितांतमभिज्ञः स्यात्– कृतनिश्चयश्चाऽऽक्रमितुं सिंधुदेशस्याधिकतमं भागं प्राक् वर्षारंभात्।"

"तत्– किं खलु मन्यते महाबलाधिकृतः स्थानं योग्यतमं शत्रोः प्रतीकाराय दीर्घकालिकाय ?"

"....सिंधुसरितः पश्चिमतीरान्नातिदूरवर्ती निरुद्धो दुर्गो-द्यद्वान्- स्थलदुर्गोऽपि पार्वतीयदुर्गवत् दुराक्रमणीयो- योग्यतमः प्रतिरोधाय प्रबलाय मम प्रतिभाति"- प्राह महाबलाधिकृतः।

"परंतु- स दुर्गः सद्य एव स्वामिना वशंवदीकृतानां नातिरज्ज्यच्चेतसां दाक्षिणात्यानां सैंधवानां प्रदेशे वर्तते। अतस्तत्र संपाद्य सेनासंघातमवरुद्ध्य सिंधुप्रवाहं नौकाबलेन, रिपुं प्रतिरोद्धुं प्रयतमानानामस्माकं कृते स्थानिकानां प्रजाजनानां साहाय्यं दुरापाद्यं स्यात्'- आक्षिपत् सांधिविग्रहिकः।

"एतस्मिंस्तु संकटे वयं रिपुणा सुपरीक्ष्य दौर्बल्यस्थानान्य-स्माकं समाक्रम्य च सहसा सिंधुसागरमार्गेणापरीक्षितपूर्वेण निरुत्तारं मज्जिता आदित एव।"

"तत्- अवधीयं तद्वैपरीत्यं स्थानिकमस्माभिः प्रतिरोधाय स्थानं सामरिकदृष्ट्याऽनुकूलतमं विनिश्चेयं राज्यस्य दक्षिणतम एव भागे" आह राजदारिका।

"मन्ये- निरुद्धे दुर्गे संहता प्रबलाऽस्माकं पदिकसेना सिंधु-सरित्प्रवाह एकत्रकृतया नौसेनया पाश्चात्ये मरुप्रायप्रदेशे कुशलया औष्ट्र्या सेनया रक्ष्यमाणपार्श्वद्वया- रिपुं प्रतिरोद्धुं समर्थाः स्यात्"- अवदत् धीसचिवः।

"एवमेतत्"- अन्वमोदत राजकन्या।

"अपि च- देवलनगरीं कूटयुद्धेन पुनरपि विजेतुमितो गताया अस्माकं सेनायाः प्रोत्साहनार्थं तया सह- तात!- भवता स्वीकृत्यास्मदनुरोधं संप्रेषितः कुमारः जयसिंहः- किशोरोऽपि युवेव सुष्ठु जानन् स्वकर्तव्यं- तस्मिन्नेव निरुद्धे दुर्गे आस्ते, परीक्षमाणः रिपुसेनाचेष्टितानि चारदृष्ट्या।"

"तं सिंहमिव निर्भीकं प्रियदर्शनं साक्षाद्युवराजं स्वमध्ये सागरदीपस्तंभमिवाविचलितं तिष्ठन्तमवलोक्य प्रतिरोधसंचालनाय विलीनमनोमालिन्याऽविलुप्तधैर्या तत्रत्या जनता बौद्धधर्मानुरक्ताऽपि परिकरं बध्नीयान्नूनं विजित्य पापान् हिंस्रान् यवनान् निक्षेप्तुं तान् बुभुक्षोः सिंधुसागरस्य विकरालासु उल्लोलकल्लोलदंष्ट्रासु- तत् तस्मिन्नेव प्रदेशेऽस्मा—।"

"अपि नाम···· जयो···· वालः···· अद्याप्यनुद्भिन्नश्मश्रुः···· उत्साहातिरेकेण प्रगल्भमानोऽपि अस्माभिरनुभवविदग्धैरनुमोदनीयः निक्षेप्तुमात्मानं प्राणसंकट एतादृशे ?"– आक्षिपत् सहसा राजा दहरः।

"अथ किं–" प्रत्यवदत् तद्दुहिता, क्षणमात्रं स्तब्धा। "मर्षयतु तात औद्धत्यं मम। परंतु-महती विपदेषा मां मुखरयति।– एतादृशेष्वेव प्राणसंकटेषु परीक्ष्यते सत्त्वं राजपदमलंकुर्वतामलंचिकीर्षूणां च। एतादृशेष्वेव प्राणसंकटेषु धैर्यमक्षुण्णं प्रदर्शयतः पुरुषोत्तमान् शिरसा वहति पांसुलपादा जनता। चरणेन च मृद्नाति-प्रहाय तद् क्वाऽपि विलिलीषमाणान् पुरुषपशून्" ।

"तत्-पर्याप्ताः सेनाः निरूद्धदुर्गप्रदेशे संघट्टयतु भवान् परिहरन् कालातिपातं-महाबलाधिकृत !"– सत्वरमाह धीसचिवः, परिहरन्निवाधिकतरं शब्दसंघर्षम्।

विज्ञायैव च तस्य संकेतं सा मंत्रिपरिषद् प्रणम्य स्वामिनं चिताम्लानं मंत्रणागृहान्निर्गता तत्क्षणमेव स्वे स्वे कार्ये व्यापारयामास सर्वाः शक्तीः कृतसंकल्पा प्रतिरोद्धुं मूर्तिभंजकम्लेच्छं सिंधुसागर-समीप एव। समाकृष्याऽऽयुधिकबलानि बहुसंख्यकान्युदीच्यायाः पाश्चात्यायाश्च सीमायाः, नियोजयितुं तानि निरूद्धदुर्गप्रदेश आरभत वाहिनीपतिः। नौसेनापतिः एकत्रकर्तुं नातिप्रबलं नाविकबल-मुपरोधाय सिंधुसरिन्मार्गस्य। सांधिविग्रहिकश्च पुनः प्रेषयितुं

दूतान् तासु तासु राजसभासु आवाहनसंदेशैः सह ।– न त्वलभत पर्याप्तं समयमत्यावश्यकं स्वस्वकार्यसिद्ध्यै ।

पंचभिरेवाहोभिः हि ते, सायं मंत्रणाकक्षे संमिल्य नृपसमक्षं स्वं स्वं कार्यभारमनुष्ठितं सविस्तरं निगदन्तः, जनकसंनिधौ समुपविष्टया देवलदेव्या सहाऽनुष्ठेयं कार्यजातं विमृशन्तः, देवलनगरादुत्तराशाभिमुखं चिचनिपोः शत्रोः प्रतिरोधोपायान् तांस्तान् आहोपुरुषिकया चर्चयन्तः, सहसालोकन्त सौविदल्लेन वृद्धेन ससंभ्रमन्तःप्रवेश्यमानं, सिंधुराजेन 'स्वामिभक्तोऽयम्'– इति विशिष्य निरूढप्रदेशीयेषु ग्रामेषु महता विश्वासेनाधिकृतं गोपवरेण्यमुग्रसेनमारक्तनयनं शुष्यन्मुखं दीर्घदीर्घं श्वसन्तं विदीर्णवस्त्रमपभ्रष्टोष्णीषम् ।

यावच्चानुमिन्वन्ति सहसा स्तब्धाः— 'नूनमनेनानिष्टसंदेशहारिणा भाव्यम्' इति तावत् स आत्मानमावेगेन महताऽक्षिपत् स्वामिनश्चरणयोः, व्यलपच्चास्फुटाक्षरं– "स्वामिन्, विनाशिता वयं राजद्रोहिभिः कापुरुषैः विनाशिताः ।"

धीसचिवेन च कथंचित् पर्यवस्थापितात्मना सविस्तरं कथयितुं कथनीयमाज्ञप्तश्चिराद्यु समारभत निवेदयितुं 'स्तंभितबाष्पवृत्तिना कंठेन ।'

"स्वामिन् ! यत्क्षणमेव दुर्वार्त्ता पापिनो देवलपत्तनाऽऽक्रमणस्य निरूढप्रदेशमुपागमत्– तत्क्षणमेव सा साधारणानां जनानां व्याप्तुं मस्तिष्कानि विचलयितुं मानसानि समुत्तेजयितुं च हृदयान्यारभत । स्वामिना सद्य एव बलाद्वशंवदीकृताः, स्वातंत्र्यस्य स्वस्य पूर्वकालिकस्य निःशब्दं स्मरन्तः, ते, वार्त्तां तां निशम्याऽऽदौ विस्मितास्तत उदासीना– अचिरादेवोपदिष्टा इव केनापि दुरात्मना– समुपक्रियमाणमिवाऽऽत्मानमेतया : विपदा समुत्प्रेक्षितुमारभन्त । निःशब्दा अपि मुखाकारानुमेयभावा औत्सुक्येन महता प्रतीक्षितुं च नवीनतमं घटनावृत्तान्तं देवलनगरात् । अप्रत्याश्च– प्राप्योदन्तं देवलदुर्गरक्षकाणां शौर्यस्याद्वितीयस्य न तथा जहृषुर्यथाऽऽकर्ण्य वृत्तान्तं

म्लेच्छानां देवलमंदिरध्वजस्तंभखंडनस्य। अधिगत्य समाचारं देवलवासिनां तस्य नैशस्य प्रत्याक्रमणस्य न तथाऽभिननंदुः साहसं स्वदेशबांधवानां यथा क्रौर्यमाक्रामकाणाम् आततायिनां विजित्य पुनरपि नगरीं तां भस्मसात्कुर्वताम्। आरभन्त च मूढाः सोत्साहं रहसि वर्णयितुं सातिशयोक्ति बलसंनाहं रिपोः।"

"आतुराः लब्धुं विलुप्तं स्वातंत्र्यं पुनरपि, तद्देशीया अदूरदृष्टयः स्थायुका गोपाः, राजविपदि संपदमात्मनः कल्पयन्तः, साधारणानां जनानामशांतामेतां मनःस्थितिं निभृतमुत्तेजयामासुः।"

"क्षुद्राश्च सामंताः परस्परं समित्य भाविकार्यपद्धतिं विचारयितुमुद्युक्ता बभूवुः।"

"न शेकुस्तु निरूढदुर्गे प्रकाशस्तंभस्येव विराजमानस्य सुदर्शनस्य प्रियवादिनः किशोरस्याप्यप्रत्याख्येयविशेषस्य युवराजस्य जयसिंहस्य प्रभावेण समाक्रांताः प्रकटं किंचिदप्यपकर्तुं स्वामिनः।"

"यदहरेव तु युवराजः, प्राप्यानुल्लंघनीयमादेशं स्वामिनः प्रजविद्रुताहूतं, पश्चिमसागरे निमज्जति भगवति सवितरि, कतिपयैरभिन्नहृदयैः समानवयोभिरङ्गरक्षकैः परिवृतः, पाषाणदुर्गात् तस्मात्, मंत्रयितुं भ्रात्रा वज्रबाहुना सह, शिबिरस्थानदुर्गं प्रातिष्ठत, विनयावनतेनापि विस्मयमूकेन दुर्गरक्षकबलेनाभिवंदितः, निरूढग्रामरथ्यायां च कृतसंमर्देन जनसामान्येन स्तब्धेन चकितचकितमवलोकितः— तदहरेव, ते, विधूय विवेकमवधीर्य स्वामिभयं तिरस्कृत्य राजप्रतिनिधिं प्रकटमेवोद्वेल्लयितुं स्वामिद्रोहभावनां जनसामान्यमनसि प्रारभन्त निर्भयाः।"

समाकर्ण्यैतत् सर्वथाऽनपेक्षितं वृत्तं चकिता राजदारिका, सहसाऽऽहृत्य दृष्टिं वातायनात् पुरुषप्रमाणाद्वहिर्दृश्ये निश्चले पारिभद्रशिखरे निगडितां, तां जनकस्य समीपोपविष्टस्य मुखे विलुलितधवलालके वलितभालप्रदेशे क्षणमेकं निबबन्ध।

अवलोक्य च तदधिकमेवार्थीकं विदितवेद्या, परस्परविमर्दि-भावनाऽऽलोडितमानसा निःशब्दा तामन्यस्मिन्नेव क्षणे ततो विनिवर्त्य,– द्रष्टुमसमर्थेव मंत्रिपरिषल्लोचनानि सेवावृत्तिमूकान्यप्युपहासमुखराणि,– निस्तेजस्कां भूमौ व्यापारयामास ।

"अलभन्त च साफल्यं कल्पनातीतं हतभागा" जगाद उग्रसेनोऽनभिज्ञ एव क्षणिकस्य तस्य दृष्टिक्षेपस्य ।

"आविर्भाविता इवे हि केनाऽपि दुरात्मनाऽलौकिकसामर्थ्य-भाजा प्रेतात्मना कुटिलमतिना···· द्वित्राः खलु श्रमणास्ताम्रवर्णाः पिंगलाक्षा महाप्रमाणा– अदृष्टपूर्वाः नूनं मया तस्मिन् प्रदेशे–अकस्मात्तस्मिन्नेवावसरे जनसामान्ये सुव्यक्तमुत्तेजिते विचरितुमारभन्त । प्राक्कथयितुं चावश्यंभाविनं विनिपातं स्वामिनो वंशस्य । समुपजातशंकेन मया प्रसह्य बंदीकृता अपि राजद्रोहापराधेन, सहसोद्वेल्लितस्य बौद्धप्रजाजनकोपसागरस्य भयेनाचिरादेव विमोचितास्ते– शतगुणितसाहसा– ज्वलन्नयनमवलोकयतामेवास्माकं राजपुरुषाणां– समुपाक्रमन्त घोषयितुमनेकाब्दशतदीर्घं पारदास्यं बौद्धधर्मात् परिभ्रष्टाया अस्या भूमेर्नियतिनिर्दिष्टमिति ।"

"विज्ञाय पराक्रमणवार्तामादौ समुदासीनास्ततः कौतूहलान्विताः, ततः प्रतिपक्षिप्रशंसापराः निरुद्धप्रदेशीया जनाः,–घोषणयाऽनयाऽपहृतविवेका इव,– प्राक्रमन्त विचारयितुं 'वेतसवृत्तिरेवावसरेऽस्मिन् श्रेयस्करी'– इति ।"

"तस्मिन्नेवावसरे प्रदेशे तस्मिन् सहसा प्रसरद्भिरज्ञेमोद्गमस्थानैः प्रकुपितपारसीकप्रतिशोधप्रचंडतां सातिशयोक्ति वर्णयद्भिर्देवलनगरनरमेधवृत्तांतैः लोमहर्षकैः परिलोपितधैर्यावशेषाश्च– ऐकमत्येनादृष्टपूर्वेण वव्रुः कापुरुषपथं, निश्चिक्युः प्रेषयितुं प्रतिनिधिमंडलं सेवायां देवलपत्तनादुत्तराशाभिमुखं प्रचिचलिषोरपारस्य यवनसेनासागरस्याधिपस्याभयदानयाचनाय, पातयामासुश्च कुलानि स्वानि रौरवे नरके तथाऽनुष्ठाय ।"

"जह्नुपुश्च शीघ्रमेवाधिगत्याभयदानवार्त्तां मुखारविंदेभ्यः पापेभ्यः प्रतिनिधीनामवलिह्य चरणरजांसि गोभक्षकाणामाततायिनां कृतकृत्यंमन्यानां, प्रदर्श्यैवालौकिकं शौर्यं प्रतिनिवृत्तानां, प्राप्येव चतुःसमुद्रवलयांकितपृथ्वीपतिपद संतुष्टानाम् ।"

"उत्तारिता इव भाग्येनानुकंपिनाऽतलात् संकटसागरात्, संस्थापिता इव नियत्या परमैश्वर्योच्चशिखरे चाऽऽरभन्त"" उन्मत्ता इवोच्चैर्विहसितु, प्रमत्ता इव रथ्यासु नर्तितु, समुद्भ्रांता इव परस्परमालिंगितुम् ।"

"परां कोटिमारुरोह तेपामधमानां विस्मयो विज्ञाय प्रतिनिधिव्रुवाणां मुखेभ्योऽपूर्वं शत्रुसेनासभारं संघट्टित सिंधु-मुख-प्रदेशे, कौतुकमधिगत्याद्वितीयं रणकौशलं, आश्चर्यं श्रुत्वा लोकविलक्षणं प्रभावशालित्वं, समादरश्चाऽऽकर्ण्याऽसामान्यं सौजन्यशालिनं व्यवहारं तस्याधिपस्य ।"

"प्रावर्तन्त चाहमहमिकया– केचिद्देवलपत्तनमार्गं मार्जयितुं,– केचिन्निरूढनगरीराजपथमलंकर्तुं तोरणैर्विचित्रैः– केचिद्राजपथोभयपार्श्ववर्तिगृहपंक्ती सुशोभयितुं वंदनमालाभिः शोभनाभिः,– केचित् स्वागतपद्यानि विरचयितुं,– केचित् जयघोषणा-वाक्यानि स्तुतिचटुलानि कल्पयितुं"", आतुराः"", कापुरुषाः"", स्वागतं कर्तुं गोभक्षकाणाम् ।"

"अशक्नुवंश्च तेषां क्षुद्रं वर्तनं द्रष्टुमधिकतरं"" अहं"" कतिपयैः स्वसमानवृत्तांतैः राजपुरुषैः सह ततः निरगच्छं विहाय निरूढदुर्गं एकं स्वामिभक्तं सेवकमविज्ञातप्रायं साक्षाद्द्रष्टुं घटनाक्रमं भाविनं, निःसृत्य च निभृतं तस्मात् स्थानात्–सत्येवावसरे– निवेदयितुं तं स्वामिचरणयोः ।"

उक्त्वा चेत्थं विरराम सः– संक्रमितक्रोधभर इव किंचित् प्रशांतः ।

न कोऽपि शशाक कतिपयपक्षमिकामपि युगदीर्घामिव भासमानां निःशब्दतां खेदजडां भङ्क्त्वा किमपि वक्तुं समयोचितम्।

अपारयन्निव सोढुमधिकतरं भारं तस्याः निरुच्छ्वासयन्त्या… अन्ते… जगाद स्वगतमिवास्फुटाक्षरं, परिहरन् दृष्टिं शून्यशून्यां राज्ञः, दुर्विज्ञेयभावां च भूतलनिगडितां राजदारिकायाः,– सांधिविग्रहिकः–

"लप्स्यन्ते मूढा अनुरूपं फलमदूरदर्शितायाः अचिरादेव…। अभयदानं गोभक्षकैः प्रदत्तं श्रद्दधते…। बहु मन्यन्ते च भाग्यानि स्वानि…। लप्स्यन्ते मूढाः पापाः फलमनुरूपम्।"

न तु कोऽपि दधर्ष तस्य मतमनुमोदितुम्।

तच्च कियद्दुराशामात्रानुप्राणितमासीत्तत्– अन्येद्युरेव– प्रकटीबभूव।

सिंधुराजवंशभाग्य इव सूर्येऽस्ताचलशिखरमुपगच्छति सति हि चिताम्लानमुखारविंदाया अपि, पितुर्दृष्टिमपराधभावजडां परिहरन्त्या अपि, भाविनं प्रतीकारव्यूहं महाबलाधिकृतेन सह चित्तेनैकाग्रेण विमृशन्त्याः राजदारिकायाः संलापमन्यमनस्कतया शृण्वतो, मंत्रणाकक्षे सद्य एव प्रज्वालितस्य सायंदीपस्य ज्योतिषि निवातस्थिरे निबद्धदृष्टेः सिंधुराजस्य सेवायामुपास्थाप्यत साधारण-वेषः पांसुलपादः सैंधवो वृद्धः कश्चित्– अश्रद्धानेन तत्कार्यगौरवं, संदिहानेन तत्सदाशयत्वं, प्रधानेन द्वारपालेन।

आज्ञापितश्च तं दृष्ट्वा चकितचकितेन सांधिविग्रहिकेण स्वकार्यनिवेदनाय, स्वात्मानं निरुद्धदुर्गात् सद्य आगतं स्पष्टं प्रकटयामास। निवेदयामास च स्खलदक्षरं– "स्वामिन्! अदृष्टपूर्वसदृशं कापट्यं शत्रोरदृष्टपूर्वसदृशम्! देवलपत्तनेऽनुष्ठितेन नरमेधेन भीषयित्वाऽस्मान् स अधुना स्नेहबलेन वशीकर्तुं प्रयतते। लभते च साफल्यम्।"

आदिष्टश्च घोसचिवेन सविस्तरं निवेदयितुं प्रोवाच—

"साक्षात्कर्तुं..... स्वामिचरणौ निरूढनगर्याः निभृतमपसृते गोपवरेण्य उग्रसेनेऽहं, क्षणमात्रमवस्थातुमनिच्छन्नपि तेषां पापानां निरूढवासिना मध्ये, कार्यगौरवाद्गोपित्वाऽऽत्मनो भावनाः, कृतकस्मितोज्ज्वलाननस्तदन्यतम इव, तैः सह सोत्साहं किमपि किमपि सलपन्, स्वैरमितस्ततो विचरन्, नातिचिरादेवाऽऽत्मानं, श्रुत्वा समाचारमागमनस्य विजेतुः नगरसीमासमीपे सोत्साहं तत्स्वागताय प्रचलितैः जयघोषमुखरैर्विविधमहार्होपायनसनाथहस्तैर्धर्म्मघोषवाचालमुखैः गंभीरमुखमुद्रैरपि परिलक्ष्यमाणांतरिकसमुल्लासभरैस्तैः श्रमणकैर्नीयमानैः पापैः सह नगरसीमामुपसर्पन्तमवालोकयम् ।"

"अपश्यं च नातिचिरादेव नगरीबहिर्वर्तिनि विशाले भूप्रदेशे दक्षिणदिग्गह्वरात् धूलिधूसरितात् सजवमवतरन्तं, पश्चिमांबुनिधावतले निमज्ज्य विलयमार्त्यंतिकं जिगमिषोरिव क्षीणप्रभस्य प्रभाकरस्य किरणैरालोकितमप्यसंख्यपारसीकखुरोद्धूतरजःरजसानुदुर्लक्ष्यविशेषं, दिगन्तत्रयस्पर्शिनं, विदारयन्तमिव नभस्तलं ह्रेषारवैः खुरनिनादैः करालकरवालखणत्कारैः, सांद्रं, प्रलयंकरघनाघनघनमंडलं विहाय विहायसं भूमौ समुपसर्पत् विडंबयन्तं, सेनासागरम् ।"

"दुष्प्रसहेन वेगेन प्रतिक्षणं समीपतरमागच्छन्तं तं वीक्ष्य विस्मिताः निरूढनगरीनिवासिनः सहसा निरुद्धगतयः निःशब्दाः, कतिपयान् क्षणान्, व्यात्तमुखा विस्फारिताक्षाः प्रस्फुटत्प्रस्वेदा मूर्तिवत् तस्थुः । विसस्मरुः जयघोषान् । प्रचेलुश्च स्वागतायाऽऽक्रामकाणां स्खलत्पदाः...., पुरतः सोत्साहं चलद्भिः दीप्तमुखमुद्रैरुद्वेल्लदुत्साहैस्तैः श्रमणकैः नुद्यमानाः ।"

"न त्वधिजग्मुस्तदवसरम् ।"

"प्रतिरुद्ध इव केनचिद्बलवता, हि, स अपारः सेनासागरोऽकस्मात्, पश्यतामेवास्माकं विस्मयमूढानां, विरराम समुपसर्पणात्, बभाज च निश्चलतामन्तःसंयमितप्रचंडशक्तिभंगुराम् ।"

"यंत्रचालित इव च- षण्णामश्वसादिनां वर्मितानामेकः समूहस्तस्मान्निश्चलात् सैन्यसागरात् पृथग्भूत्वाऽग्रे ससार। अवरुरोध च मध्येमार्गमेव स्वागताय प्रत्युद्गच्छतः निरूढनगरीनिवासिनः। कौतूहलवशात् समीपतरमुपसृतोऽहमश्रृणवं तन्नेतुरुग्रगंधस्याऽऽरक्तनयनस्य बर्बरस्यासंस्कृतां तीक्ष्णां संबोधनवाचम्। अन्वमिनवं तस्या अभिप्रायमननुकूलम्। अजानां तस्या अर्थं तैः श्रमणकैः (म्लेच्छ-भाषापंडितैः- अहो आश्चर्यम्) अनूदितायाः सैंधवभाषायाम्। अपश्यं च तस्याः प्रतिक्रियां कापुरुषाणां मम बांधवानां मुखचंद्रेषु।"

"विज्ञाय हि तस्य सादिनो मुखात्- 'यत् प्रतापी तेषां सेनानीरभयप्रतिश्रुतिं स्वां सर्वथा मानयन्नपि- नामृष्यत् संस्पर्श-लेशमपि मूर्तिपूजकानां पापानां, समाज्ञापयत्तानवरोद्धुमात्मनः परिजनांश्चाऽऽत्मनः स्वस्वगृहाणि प्राप्तप्रायायां निशायां, समादिशच्च त्वरितं समर्पणं निरूढदुर्गस्य तदधिकारिभ्यः'- सहसा निःश्रीकास्ते दधुरकालराहुग्रासश्रियम्।"

"न तु दधृषुः किंचिदपि प्रतिवक्तुम्।"

"भीता मूकाः कुंठितमानसा.... आज्ञा एव ताः.... क्रीतदासा इव स्वशिरसि चक्रुः।"

"स्खलत्पदं गृहाणि प्रतिनिवर्तमानानां, व्यावर्त्य मुखानि मुहुर्मुहुः दक्षिणक्षितिजं यावत् प्रसृतं, निरुद्धप्रसरं, विवत्सया स्कंधावारप्रकल्पनव्यग्रं, शनैः शनैः गगनतलान्निश्चंद्रात् प्रोषितनक्षत्रा-निःशब्दं वर्षताऽधंकारेणाऽऽपूर्यमाणं, प्रज्वालितालातसहस्रप्रकाशित-विस्तारं तं सैन्यसागरमवलोकयतामेवास्माकं- यवनानामाय-सतनुत्राऽऽवृतानां कौंतिकानां प्रजविघोटकाऽऽरूढानामेकं दलं सहसा निश्चक्राम कटकात् तस्मात्। आक्रमच्चापरिचितमपि मार्गं निरूढदुर्गगामिनं प्रभंजनवेगेन, व्यलीयत प्रतिक्षणं घनीभवति नैशेऽधकारे।"

"भस्मसात्कृत्वा सर्वामुत्साहसंपदं महाश्मशानादिव प्रतिनिवृत्ताः, लोकविलक्षणं यवनसेनापतिचरित्रमेवाविरतं चिंतयन्तः,– स्वामिना लत्ताप्रहारेण सत्कृता इव ग्रामसिंहाः,– स्वेषु स्वेषु स्खलितस्वागततोरणेषु प्रभ्रष्टपताकेषु निवासेषु विनष्टाः, नैशेऽधकारे तमपारं यवनसेनापारावारमेव प्रतिपलं स्मृतिचक्षुषा विनिद्रेणावलोकयन्तो, भाविस्वजीवनविषय एव दारुण संदिहानाः, निरुद्धनगरीनिवासिनस्तां क्षणदामन्तःप्रकुपितज्वालामुखिशिखरनिवासिन इव, प्रलयवातोद्वेल्लितपयोनिधिवेलानिवासिन इव, अधन्या, अक्षणदामेव, अतिवाहयामासुर्युगदीर्घाम् ।"

"न प्रापुश्च– अन्येद्युरपि,– विलीनेऽपि घने नैशेऽधकारे स्वपरिजनैः कात्पनिकैर्विभीषकैः संकटैः सह,– शमम् । नावापुः, समवलोक्याऽपि निभृतं हनुमन्मंदिरपरिसरैकदेशवर्तिनोऽश्रंकषशाखाविस्तरस्याश्वत्थस्य शिखरात् प्रसरद्दिनकरकरोद्भासितधूमलपटवाससहस्रं यवनपटकं सुदूरदक्षिणदिगन्तविश्रांतमात्ममात्रव्यापृतं, शमथम् । अपि तु– निरुद्धनिःश्वासा एव कंठगतप्राणा एवाऽऽरभन्त दिवसं तमतिवाहयितु– स्वस्वगृहनिलीनाः निष्क्रियाः संतप्यमानाः निदाघांतप्रचंडेन चंडकिरणेन.... प्रकुपितेनेव साक्षात्कृत्य तेषामार्यभ्रुवाणां तत् कापौरुषं चंडतरसंतापेन ।"

"यथा यथा वियन्मध्यमुपससार विवस्वान् विप्रकृतवानरविरूपस्तथा तथाऽवर्द्धत एव तेषां संतापः परां च कोटिमारुरोह प्रहरमात्रावशिष्टे तस्मिन्निरभ्रे दुर्दिने विज्ञाय विहारात् समापतितस्यैकस्य श्रमणस्य मुखाद्वार्त्ता यत्– तस्य धर्मबांधवा, आकर्ण्य वार्त्ता जलकष्टस्य भीषणस्य यवनस्कंधावारे समुद्भूतस्यानुकंपया महत्या गताः साक्षात्कर्तुं तदध्यक्षं विज्ञापयितुं च तमुपभोगार्थं जलस्य नगरीमध्यवर्तिन्येकमात्रे कूपेऽवशिष्टस्य ।"

"तत्क्षणं हि ते समुत्प्रेक्षांचक्रिरे यत्– त आक्रामका, मरुस्थलनिवासिनः, जीवनं जीवनादपि बहु मानयन्तः, प्रदेशेऽपरिचिते

तृष्णामरणविभीषिकया भीषिताः, निःसंशयमेव स्वीकरिष्यन्ति तमनुरोधम्। आक्रमिष्यन्ति तेषां नगरम्। अभिग्रहीष्यन्ति तेषामेकमात्रमुदपानम्। निरोत्स्यन्ति तान् तदुपयोगात्। उपायनीकरिष्यन्ति च तानवशान् शरीरशोषप्रज्वलद्गात्रान् समुच्छुष्कमुखान् कालाय व्यात्तविकरालमुखकंदराय।"

"प्रतिपालयामासुः नयनागतप्राणा यमदूतस्येव श्रमणप्रमुखस्य तस्य यवनस्कंधावारं गतस्य प्रत्यागमनम्। अनुममुः निशामुखे प्रत्यागतस्य तस्य बलांतां मुखमुद्रामवलोक्य विनाशकालं प्रत्यासन्नम्। न च विशश्वसुः स्वकर्णान् श्रुत्वा नगरचत्वरे तरुमूले विश्रांतस्य तस्य मुखारविंदात् तृपार्तसैनिकसहस्रक्लेशक्लिष्टोऽपि स यवनसेनापतिः निरुद्धनगरीवासिभ्यः प्रदत्तमभयवचनं- स्वान् प्राणान् पणीकृत्याऽपि बहु मानयितुंकृतनिश्चयः- न केवलं तस्यानुरोधं तिरश्चकार, अपि तु- उपरुरोध क्षुब्धतममपि सैनिकं स्वं नगरीगमनात्। आज्ञापयामास चासंख्यान् स्वयोद्धृन् प्रार्थयितुं जगन्नियन्तारं परमेश्वरं जलकष्टनिवारणाय।"

" 'यदा तु'- प्राह स श्रमणः सगद्गदं 'अस्तं गच्छति दिनकरेऽवलोक्येव तस्य परंतपस्य यवनसेनाध्यक्षस्य चित्तौदार्यं म्लानप्रभे, अहं, दिगन्तविस्तृते तस्मिन्न सुव्यवस्थिते स्कंधावारे पुरः पटगृहाणां बद्धपंक्तीन्, स्वं नेतारमनुसृत्य निःशस्त्रमपनीततनुत्रमनावृतमस्तकं याचकभावेन जानुभिः भूमौ सिकतिलायामनास्तृतायां तप्तायां नतान् जगत्पितरं प्रार्थयमानान् प्रसार्य हस्तान् करुणकरुणमुच्चैः स्वरं, समवालोकयं, तान् संख्यातीतान् यवनसैनिकान् तदा 'सत्यं ब्रवीमि- न प्राभवमहमात्मानमपि तथाकरणान्निवारयितुम्। चिरात् खलूपरतेषु प्रार्थनायास्तस्या अदृष्टपूर्वसदृश्यास्तेषु जित्वरेषु वीरेषु स्वस्वकार्येषु शांतेन चित्तेन प्रवृत्तेषु···· अहं- भुग्नः लघुताभारेण- ····निभृतं ततोऽपासरम्। अविदन्नेव च समतिक्रम्य घनांधकारं पन्थानं प्रत्यागच्छं विस्मयमूढः' ।"

"निरुद्धनगरीनिवासिनस्तु समाकर्ण्य तं वृत्तांतं सर्वथाऽनपेक्षितमादौ संशयालवः, शनैः शनैः समुपजातविश्वासा, आश्वस्ताः, प्रत्यागतप्राणमिवाऽऽत्मानं मन्यमानाः, स्वागताय प्रत्युद्गच्छतस्तान् तथा सेवकमुखेन व्यावर्तयतः यवनसेनापतेस्तादृशं महाशयत्वमनुभूय चकिता, 'अपि नाम सः सत्संकल्पोऽपि,– म्रियमाणेष्वसंख्येषु सैनिकेषु तुरगेषु च पारसीकेषु,– प्रदत्तस्याभयवचनस्य पालन एवमेव दृढः स्यादिति चिंतयाऽन्तर्दह्यमानाः, किंकर्तव्यविमूढाः, शनैः शनैः गृहाणि स्वानि प्रदीपशून्यानि निःशब्दानि, प्रेतात्मान इव स्थानानि पापानि, विविशुः।"

"उपविष्टाः निपतिताः शयिताश्च तत्कोणेषु– प्रारभन्तातिवाहयितुं तां निशां क्लांताः विनिद्राः।"

"न चालक्षयन् चिंताजडमानसाश्चिरं– प्रहरमात्रजीर्णायामेव तमस्विन्यां समुद्भूतं, शनैः शनैः प्रबलतरीभवन्तमचिरादेव प्रभंजनवेगेन वहन्तं, समीरणं, तत्साहचर्यमिव कर्तुं बद्धपरिकरं, विस्पष्टं श्रूयमाणं, गंभीरं जलदध्वनिं, तत्पथप्रदर्शनायेवासकृद्विलसन्तं तीव्रं पीतपीतं तडिन्प्रकाशं च।"

"सहसा प्रबोधिताश्च चितातंद्रायाः स्वप्नेऽप्यप्रत्याशितेन, मनोरथेष्वप्यनुत्प्रेक्षितेन, कल्पनाया अप्यविषयेण, गंधेन मृदः प्रथमवर्षाजलबिंदुपरिचुंबिताया उछ्वसितहृदयायाः, आकृष्टा इव केनाऽपि मेघस्तनितमिषेण प्रोच्चारितेन मंत्रेण, समाहूता इव केनापि शिशिरसमीरप्रापितेन मूकेनाऽऽमंत्रणेन, प्रेरिता इव केनापि विद्युत्प्रकाशपातितेन विलक्षणेन प्रभावेण, झटिति परित्यज्य शयनानि विहाय चाऽऽसनानि समुत्थिता, विद्युद्वेगेन गृहेभ्यः निर्गताः, रथ्यासु मार्गेषु चत्वरेषु मंदिरप्राङ्गणेषु तत्र तत्र कृतसंमर्दा, उन्नमय्य मुखानि हर्षोज्ज्वलानि प्रस्रवद्घर्मजलानि, प्रारभन्त निध्यातुं गगनवितानं विस्फारितया दृशा– बालास्तथा वृद्धाः, किशोरास्तथा प्रौढाः, सधनास्तथा निर्धनाः, पुरुषास्तथा महिलाः।"

"आरभन्त निर्घातमपरस्मिन्नेव क्षणे– निरुत्सयैव श्वस्तनस्य दिनकरकरप्रसरस्याऽऽरुह्य प्रजविनः पृषदश्वप्रवाहान् समनुसृत्य तडिद्दीपप्रकाश्यमानमध्वानं गगनरणाङ्गणे महताऽऽटोपेनाभियातो, घनधूलिघनधूसरछायान्, विविधाकारान्, कांश्चित् पुनरुद्भूतपतत्रान् यथेच्छं समुत्पततो महीधरान् विडंबयतः, कांश्चित् भूकंपनिपतितात्युन्नतहर्म्यवीथीरनुकुर्वतः, कांश्चित् भ्रमन्मत्तमहिषपंक्तिशोभामपहरतोऽनवलोक्य चिरसहयायिनीर्बलाकावलीरासमंतात् गंभीरस्तनितमिषेण ता असकृदाह्वयतः, जलदान् जलजडान् ।"

"अन्वभवन् तृष्णाविलगितौष्ठपुटाः– सतृष्णाश्चातका इव– कदुष्णान् धूलिकणवासितान् पृथुलान् वर्षोदविंदून् प्रोन्नमितान्याननानि सावेगं ताडयतः ।"

"नाजानन् हर्षातिरेकनिश्चला मीलितनयनास्तान्– शीघ्रमेव– विदार्यैव गगनवितानमनवरतं निपतन्तीनां, स्फोटयित्वेव जलदपटलोदरं मुसलधारं वर्षन्तीनां, विरहान्तसमुद्भूतेनाऽऽवेगेनेव ललाटे कपोले स्कंधे वक्षःस्थले सरभसं लगन्तीनां, हर्षेणेव महता निदाघतपनसंतापितां धरां कुल्यांगुलीभिर्भावावेशचंचलाभिरितस्ततः सर्वत्र स्पृशन्तीनां, समुत्साहेनेव महता धूलिधूसरितान् पादपान् प्रासादान् देवालयान् स्नपयन्तीनां, जलधाराणां 'ऐरावतशुंडादंडचंडानां' रूपे परिवर्तितान् ।"

"सत्यं ब्रवीमि, स्वामिन् ! तस्यां निशायां यमासारमयं भवच्चरणसेवकोऽन्वभवत्–स नूनं शब्दातीतः----स्वानुभवमात्रगम्यः ।"

"जलपूरितनयनमवलोकयतामेवास्माकं सर्वेषां– विद्युत्प्रदीपशिखोज्ज्वलिताभिरुदधाराभिः धारामयमिवान्तरिक्षं, क्रमशः पीनत्वमधिगच्छन्तीभिः कुल्याभिः जलमिव धरणीतलं चाजायत ।"

"संन्यस्य स्थलकालव्यक्तिविवेकं, विस्मृत्य कार्याकार्यविचारं, मूर्तिवन्निश्चलमवस्थाय जानुदघ्ने जले निदाघोत्तवर्षास्नानसुखं

मुद्रितलोचनमनुभवतां, शिशिरसमीरसंस्पर्शरोमांचितगात्राणां, गंभीरस्तनिततर्पितश्रोत्राणां, निरूढनगरीनिवासिनां निशा सा 'अविदितगतयामा एव' व्यरंसीत् ।"

"आविरासीच्च– अश्रुतपदक्षेपा सद्यःस्नातोज्ज्वलमेदिनी-मुखावलोकनेच्छातुरा हर्षोत्फुल्लखगगणकलरवाभिनंद्यमाना प्राच्यां निरभ्रायामिंद्रनीलनीलायां रम्या उषाऽऽरक्ताभा ।"

"अवलोक्य च तां– संज्ञामिव पुनरापन्नास्त– एकात्मान इव– युगपदेव निःशब्दं परस्परं पप्रच्छुः– 'अपि नाम···· सा···· असामयिकी वृष्टिः···· साऽनपेक्षिता वर्षा···· परमप्रतापिनो वचना-नुपालिनस्तस्य यवनसेनाध्यक्षस्य करुणकरुणायास्तस्याः सायं-प्रार्थनायाः फलं भवेत् ?"

"प्रत्युत्तरयितुमिव तेषां तां पृच्छां विधिना विचित्रविधिना संप्रेषितस्तेषां श्रमणानामन्यतमः स्मयमानो धम्मघोषमुखरस्त्वरित-गमन आजगाम तत्र कटकान् यवनानाम् । आह सकाकु– 'प्रत्यक्षीकृतं भवद्भिः संशयात्मभिर्याथार्थ्यमस्मत्कथनस्य ? अनुभूतं नियत्या अतर्क्यगत्या यवनपक्षपातित्वम् ? आक्रांते तेषां महासागरविशाले कटके जलदौर्भिक्ष्येणातितीव्रेण, समाहूतेव तेषां प्रार्थनयाऽकालवर्षेयं, तेषां जलकष्टं निवारयन्ती, दृढं व्यंजयति विधातुस्तदनुकूलत्वम् । ····स्थान एव च तत् । ····यदि हि विधाता परमप्रतापिनां, क्रुधि निर्दयसंहारकाणां, क्षांतौ परमदयालूनां, तिरस्कृत्य परिणामान् प्रदत्तं वचनं बहु मानयतां पारसीकानां पक्षपाती न स्यात्तर्हि किं परचक्रपीडितान् प्रजाजनान् नपुंसकवद्विहाय 'यः पलायते स जीवति'– नीतिमिमानुसरतां, शृगालचतुराणां, मनस्यन्यद्वचस्यन्यत् परिपालयतां नः चंद्रसूर्यवंशोद्भवानां राज्ञां पक्षपाती स्यात् ? ····तत् परित्यज्य मनस्यवशिष्टं संशयलेशं शिरसि कुरुत नियत्याः सर्वकल्याणकारिण्या आदेशम् । विश्वस्ता भवत यत्– यवनानामाधि-पत्यमस्या भूमेः कल्याणायैव भविष्यति– इति । परिकरं च बध्नीत

तेषां साहाय्यकरणार्थम्। स्वाभिमानिनस्ते- यदि भवतां घनिष्ठं संपर्कं न वांछन्ति तर्ह्यपि न काऽपि हानिः। परिपालयन्तोऽपि मर्यादाः स्वीया यूयं तेषां साहाय्यं कर्तुमर्हत। अनयैव रीत्या यूयं यावच्छक्यं, प्रत्युपकर्तुं तान् यवनान् जीवनप्रदान् प्रभविष्यथ— विशेषतस्तेषाम-ग्रण्यं.... निर्दोषं गंभीरस्वभावं वित्तरतम्!"

"निरुद्धनगरीनिवासिनस्त्वादित एव भीरुस्वभावास्तत्रापि समवलोक्य जित्वरं तं महान्तमदृष्टपूर्वसदृशं सेनासागरं भयाक्रांता-स्तत्रापि प्रत्यक्षीकृतेन तन्नायकस्य महाशयत्वेन प्रभावितास्तत्रापि— (निदाघातनितांतसंभाव्यामपि) तां घनां जलवृष्टिं मूढतयाऽऽक्रामक-जलकष्टनिवारणायैव नियत्या विशिष्य कारितां मन्यमानास्तद्-ज्ञापणमन्वमोदन्त विधूय सारासारविवेकम्।"

"आरभन्त चाऽहमहमिकयाऽदृष्टपूर्वया प्रस्तावयितुं विविधा योजना गोभक्षकेभ्यो देवीविग्रहभंजकेभ्यः पापेभ्यः परेभ्यः साहाय्यदानस्य।"

"अपारयंश्च तेषां तां कदाशयतामधिकतरं साक्षात्कर्तुमहं.... गगनमध्यमारोहति चंडकिरणे दिनकरे तत.... एकाकी.... मिषेण केनचिदपासरम्। अलक्षितश्च केनापि, शनैः शनैर्गृहीतोत्तरदिक्, प्रवसन् संतप्तः, स्वामिनः सेवायामुपातिष्ठम्।"

"श्रुत्वा देवः प्रमाणम्।"

एवं विनिवेद्य मौनमभजत स वृद्धः सैंधवः स्पशः। मौनं च निशादीपज्योतिः, मंत्रणाकक्षे निवाते निरुद्धश्वास इव स्थिरं ज्वलदशक्नुवदिवावलोकयितुं परिभवम्लानानि मुखानि श्रोतॄणां देवोपहतानाम्।

# पंचमः परिच्छेदः

"....परित्यज्याऽऽत्मविघातकमेतन्निष्क्रियत्वं यदि वयं निरोद्धुं यवनसेनासागरं विद्युत्प्रसरं शीघ्रमेव किंचिन्न कुर्याम तर्हि सः समुल्लंघ्य सर्वाः सीमाः निमज्ज्य सर्वाण्यपि रक्षास्थानकानि-पश्यतामेवास्माकं विस्मयविस्फारितलोचनानां निरुद्धश्वासानामवसन्नगात्राणां- राजधानीमेतां पक्षाभ्यन्तर एव निरोत्स्यति"- प्राह तीक्ष्णस्वरं सिंधुराजकन्या ज्वलन्नयनाऽपरेद्युः प्रातरेव विचार-विनिमयार्थं मंत्रणागृहे समुपस्थितान् मंत्रिणोऽधोमुखान् चिंताव्यग्रान्।

"आदौ तावद्- दक्षंमन्या अपि वयं यवनानां वास्तविकं कपटकुटिलमाक्रमणव्यूहं चारचक्षुभिः सर्वदर्शननिपुणैः प्राक्कलयितुं समर्था नाभवाम। तैः साभिप्रायं प्रसारितासु लोकवार्त्तासु निमील्य विवेकनेत्रे विश्वसन्तः, पारंपरीयेणोदीच्येनैव मार्गेण तेषामाक्रमणं परिकल्पयन्तो, मार्गान्तराणां विचारणे परीक्षणे तत्प्रतिरोधक्षमता-परिवर्द्धने चाऽऽत्मविघातकमौदासीन्यमेवाभजाम।"

"ततः समाक्रांते तैः सिंधुराज्ये सर्वथाऽनुत्प्रेक्षितेन सागर-मार्गेण वयं विस्मयमूढा बहुमूल्यान् क्षणान् निष्फले विचारविनिमयेऽक्षयाम। अपश्याम चाऽस्माकं प्राचीनतमं राजकुलदेवतातीर्थस्थानं देवलनगरं लुण्ठ्यमानं दह्यमानं च पापात्मभिराततायिभिः।"

"किं न प्रयतितमस्माभिः ....कूटयुद्धनिपुणाभिरस्माकं सेनाभिः ....गूढं प्रविश्य देवलनगर्यां भूमार्गैः ....सहसाऽऽक्रमितुं विनाशयितुं चाकुतोभयां रिपुसेनाम्"– अवदत् समुत्तेजित इव वाहिनीपतिः।

"प्रयतितम्! परंतु न संतुलितमतिमनागतविधात्रीमनुसृत्य" प्रत्युवाच राजदारिका। "यदि हि वयं लब्धेन तात्कालिकेन विजयेनाभ्रांताः रिपुसेनाया अधिकतरमंशं सागरमार्गेण मेघेऽन्धकारे सजवं विलीयमानं प्रत्याक्रमणतत्परं समुत्प्रेक्ष्य तत्प्रतीकाराय संनद्धा अभविष्याम– तर्हि न तादृशस्य नरमेधस्य पशवोऽभविष्याम।"

"अपि नाम मन्यते भर्तृदारिका– तथा दक्षा अपि वयं– तस्यां निशायां सागरेण गहनेनोपरुद्धपार्श्वयः, रिपुहस्ते निपातितेन देवलदुर्गेणावरुद्धनिर्गममार्गाः प्राच्याः प्रतीच्याश्च दिश आक्रामतः रिपुसेनासागरस्य दुष्प्रसहान् उल्लोलकल्लोलान् चिरं प्रतिरोद्धुं समर्था अभविष्याम इति?"– अपृच्छत् श्रांतस्वरो धीसचिवः।

"एतत्तु मन्येऽहं" प्रत्यवदत् सा दृढेन स्वरेण, "मत्– असमर्था अपि, शतशः खंडिता अपि निशितखड्गसहस्रैः, वयं, पृष्ठेषु भारतीयस्येतिहासस्य स्वर्णाक्षरैः संस्तुता एवाभविष्याम– इति।"

"देवलनगरस्य विजयेनास्मद्राजकुलदेव्या विग्रहस्य खंडनेन च यवनैः न केवलं पत्तनमधिगतमेकं निकटतमं तद्देशस्य कृते– सर्वविधसुविधोपपन्नं पत्तनम्– अपि तु प्रदत्तो मर्मघ्नः प्रहारः सार्वजनीने श्रद्धेयत्वेऽस्मद्राजकुलस्य।"

"श्रुता एवास्माभिश्चारश्रवैः जनसाधारणे निष्प्रतिरोधं भ्रमन्त्यो वार्त्ता अज्ञेयोद्गमस्थानाः प्राक्कथयन्त्यो विनिपातमस्माकं यवनानां चाऽऽधिपत्यमवश्यंभाविनं.... न केवलमस्माकं राज्ये.... अपि तु समस्ते भारते वर्षे। (सखेदम्) अस्माकं कुलदेवताया विग्रहस्य खंडनेन ता विश्वसनीयतामेव दुर्जयामधिजग्मुः।"

"अत एव– मया देवलनगरस्य पुनर्विजिगीषया कुलदेवतायाः पुनः प्रतितिष्ठापयिषया प्रस्तुतमासीत् प्रतिरोधनं म्लेच्छानां पत्तन-समीपतमवर्तिनः निरुद्धदुर्गस्य परिसरे, विनाशनं च तेषां समापतिते नातिदूरवर्तिनि वर्षाकाले विकटवर्षाविभ्रांतानाम् ।"

"परंतु– तदपि न वयं कार्यरूपेण परिणमयितुं शेकिम-यवनानां दूरदृष्टेर्वशात्- अस्माकं च·····"

उक्त्वा चेत्थं क्षणमात्रं व्यरमत् सा प्रयतमानेवाऽऽत्मानं संयन्तुम् ।

"किं नानुभवति भर्तृदारिका यत्–नियतिरप्यतर्क्यगतिरादित एव तावत् प्रतिकूलेवास्माकम् ?– सहसाऽऽह धीसचिवः, लब्ध्वेव चिराद्वांछितमवसरं प्रतिरोद्धुं वार्त्ताप्रवाहमधिक्षेपगर्तस्खलनाद्दुः-सहात् । "कथमिवान्यथा समुपपद्येत सा नितांतमनपेक्षिताऽसामयिकी घनवृष्टिः···· या खलु न केवलं यवनानां जलकष्टं भीषणतमं व्यलोपयत्, अपि तु प्रास्थापयत्तान् जनसामान्यदृष्टौ नियतिनिर्दिष्टान् दुर्विजेयान् विजेतृन् भारतवर्षस्य ?"

"काकतालीयन्यायेन घटितामपि घटनां भवत्सदृशा याथार्थ्यदर्शिनः नियतिप्रेरितां मन्यन्त– इत्यहो विस्मयः ।" प्रत्यवद-द्राजदारिका । "अथवा स्याद्नाम नियतिप्रेरिता एव । क इव विस्मयस्तत्र ? ····किं नाधीतमस्माभिरावाल्यात्– पुरुषानुगामिनी भाग्यलक्ष्मीरिति ?"

"स्वीकुर्महे– वयं निष्क्रिया अदक्षा बालिशा अलसाः– कादाचित्केन विजयेन धन्यंमन्या लघुवृत्तयः । स्वीकुर्महे– भाविन इतिहासकाराः, नितांतं समुपेक्ष्यास्माकं यत्नान् सैंधवराज्यस्यास्या-राजकताकर्दमेऽवसीदतः पुनरुत्थापनार्थं कृतान्, कज्जलाक्षरैरस्मान् अधिक्षेप्स्यन्ति । स्वीकुर्मह– एतावन्तो वयं कापुरुषा यत् प्राचीनाया वंशपरंपरया पूजिताया अस्मत्कुलदेवताया विग्रहस्य खंडनमप्यस्मान्

नाश्कत् समुद्वेजयितुम् । स्वीकुर्महे अस्मान् नियतिर्नैवानुग्रहीष्यति–पुरुषन्न् वा हि वयम्…। स्वीकुर्महे सर्वमपि…। आह्वयामहे च सर्वान् निरर्थकादस्मादात्मप्रतर्दनात् उपरमाय,"– सहसाऽऽह सिंधुराजः शुष्यत्स्वरः ।

"चिंतनाय च भाविनः प्रतीकारव्यूहस्य । यथाऽऽह वत्सा–सुविचार्य ऋतुवृत्तिमनुसरन् स्वाक्रमणयोजनां विनिश्चितपूर्वा, स यवनसेनानीः, प्रागेव वर्षारंभात् यावच्छक्यां सिंधुभूमिं विजेतुं कृतनिश्चयः, निरुद्धप्रदेशात् शीघ्रमेव– सिंधुसरिद्रक्षितदक्षिणपार्श्वः–प्रचलेदुत्तरस्यां दिशि– इत्यत्र न संदेहः । एवं प्रचलितः सः शिविवृक्ष-संकुले शिविस्थानकाननेऽनेकयोजनविस्तृतेऽतिगहनेऽस्माभिः सुप्रतिरोधः । अश्वारोहाश्च तत्सैनिका, उदीच्यायाः पाश्चात्यायाश्च सीमायाः सद्य एव प्रत्यानीतैः कूटयुद्धनिपुणैरसंख्येषु शिविवृक्षेषु दिगन्तप्रसृतशाखावितानेष्वावित एव सुगोपितैरस्माकं सैनिकैस्तम-स्विन्यां सूचिभेद्यतमस्विन्यामवरुह्य निःशब्दं वृक्षेभ्यः सहसा समाक्रांता भयविमूढा लीलयैव विनाश्याः ।"

"कथं मन्यतेऽस्माकं धीसचिवः ?" क्षणमेकं विरम्यापृच्छत् सिंधुराजः, निक्षिप्य जिज्ञासामुखरां दृष्टिं स्वदुहितुर्नत आनने, समवलोक्य च तामंगुल्या महार्हे स्वासनप्रच्छदे किमपि लिखन्तीं… मूकाम् ।

"शृण्वतु महाराजः" प्रत्यवदत् विनीतस्वरं ब्रह्मदत्तः । "परंतु– यदि नाम स यवनसेनानीः शृगालचतुरः कल्पनानिपुणां स्वां सहजबुद्धिं राष्ट्रद्रोहिणो वा कस्यचिद्भारतीयस्योपदेशमनुवर्तमान-स्तर्कयित्वा संभाव्यं कूटमाक्रमणं तत्परिजिहीर्षया तं संनिकृष्टमपि साबाधं मार्गं वर्जयेत् समुपगच्छेच्च शिबिदुर्गं विप्रकृष्टेनापि निराबाधेन मरुस्थलमार्गेण… तर्हि… अस्माकं सिंधुमान् रिपुसेनया इत्थं पार्ष्णिगृहीतः– प्रहरमात्रेणैव पराजितः स्यात् । सर्वतः निरुद्ध-प्रसराश्चास्माकं शिविकानने निलीनाः कूटयुद्धनिपुणाः सैनिकाः

कालभक्ष्याः— प्रज्ज्वलद्दावाग्निकुंडलिते कांतारेऽवरुद्धा मृगा इव भयविस्फारितेक्षणाः।"

"यदि नाम वयं– दुरुत्प्रेक्ष्यं स्वामिन आक्रमणव्यूहमनुसरन्तः– शिबिकांतारेऽस्माकं पदातिं गूहयेम कर्तितुं रिपुकांतारं रात्रौ विश्रब्धं विश्रांतं, कुर्याम च सिंधुमन्तं दुर्गं बलवद्धानुष्कपृतनापरिरक्षितम्"– आह सोत्साहं वाहिनीपतिः, "तर्हि संभाव्यामसंभाव्यां वा यां कामप्याक्रमणविधां शत्रोः विफलीकर्तुं समर्था भवेम।"

"बाढम्! बाढम्!"– प्रत्यवदत् सिंधुराजः, समुत्तारित इव महतः संकटात्, विस्फारितवक्षःकपाटः। "तन्निश्चितोऽयं प्रतीकारव्यूहः। कार्यरूपेण च परिणमनीयो वज्रसमबाहुना वज्रबाहुनैव। शिबिदेशाधिकृतः स हि व्यूहमिमं यावता कौशलयेनानुतिष्ठेन्न तच्छतांशेनापि कोऽप्यन्यः। तन्निवेदयतु भवान्, सुमते, स्वयं गत्वा सिंधुमन्तं दुर्गं, इमं व्यूहं रहसि वज्रबाहवे। प्रेषयतु च भवान्, वीरभद्र, अतीत एवाहनि प्रत्यागतान् पदातीन् शिबिप्रदेशमविलंबमेव।"

"दृढं खलु विश्वसिमो वज्रबाहुरस्माकं लब्ध्वा चिरप्रतीक्षितमवसरमेतं तुल्यबलस्यामित्रस्य मानमर्दनाय नितांतं प्रहृष्टस्तथा विक्रांतमाचरेत् यथा तस्य नाम भारतीयस्येतिहासस्य पृष्ठेषु स्वर्णाक्षरैः संस्तुतं भवेत्।"

वदंश्चैवं स्वासनादुदतिष्ठत् पूर्वाह्णिकानुष्ठानाय परिहरन् दृष्टिं कौतुकोत्फुल्लां दुहितुः। निरगच्छच्च मंत्रणाकक्षात् प्रत्यागतयौवन इव वृद्धो वनराजो दर्पोद्धतः।

परंतु– चिरात् खलु प्रबुद्धमेतत्तस्य तेजः नृपोचितं तस्मिन्नेव दिनेऽस्तं गते तदपकर्षं द्रष्टुमनिच्छुक इव भगवति सवितरि, सहसा मांद्यमभजत्, समवलोक्य स्वपुरत आनीतं प्रधानदौवारिकेण संदेशवाहकं सिंधुमद्दुर्गाधिपेन संप्रेषितम्।

"अपि कुशलं तव स्वामिनः ?–" संयम्य कथमपि स्वस्वरमपृच्छत् तं सिंधुराजः, संविद्य वातायनसमीप उपविष्टाया दुहितुश्चितोद्भवमाकस्मिकम् ।

"कुशलं शरीरेण–" प्रत्यवदत् स दूतः ।

समादिष्टश्च महाराजेन सविस्तरं निवेदयितुमुवाच–

"राजधान्या अपरेद्युरेव प्रत्यागतं, धूलिधूसरितमपि, पूर्ववदेव सहजप्रसन्नमुखमुद्रं, पूर्ववदेव धीरगंभीरया गत्या दुर्गमार्गमाक्रामन्तं निगूह्य मनोभावं पूर्ववदेवांगीकुर्वाणं सस्मितमभिवादनानि सर्वेषां, सिंधुमद्दुर्गपतिमवलोक्य, दुर्गमार्गे कृतसंमर्दानां, सावेशं मिथः किमपि किमपि चर्चतां, साटोपमसिधेनुकाः स्वा असकृत् स्पृशतां समुद्धतानां ग्रामप्रमुखाणां भूतपूर्वाणां सामंतानां तदनुयायिनां च स आवेशः, स आटोपः, स दर्पः, काऽपि व्यलीयत– भुजंगानामिव प्राणहरो गर्वः दृष्ट्वा भुजंगभुजम् ।"

"शिबिग्रामचत्वरे ग्रामचैत्यस्य समीपे स्वैरमिव निरुध्य स्वमश्वं पूर्ववदेव सहजयाऽऽत्मीयतयाऽऽपृच्छ्यमानं कुशलं पांसुलपादानामपि सैंधवानां, निर्भीकं स्मितवादिनं च तं दृष्ट्वा ते, दिनकरं दृष्ट्वा उलूका इव, विलुप्तधैर्याः लोपमात्यंतिकं जग्मुः ।"

"अपारयन्तश्च स्वयं तं साक्षात्कर्तुं सविनयं सदर्पं वा, प्रेषयामासुः निशि तस्यामेव तत्सेवायां लब्धप्रतिष्ठान्, सज्जनानपि कातरस्वभावान्, निष्कलंक – चरितानपि परप्रत्ययनेयबुद्धीन्, धनदारादिकमेवाऽऽत्मसंमानादधिकतरं मानयतः, निशम्यासकृद्देवलपत्तनवाहवृत्तांतान् अतिशयोक्तिपूर्णान् भयाक्रांतान्, राष्ट्राभिमानिनः परंतपस्य सिंधुमद्दुर्गाधिपस्य सेवायां कापुरुषोचितं निवेदनं कर्तुमनुत्सुकानपि साशंकानपि विश्वस्य तस्योदारहृदयतायां तादृक् कुचेष्टितं कर्तुमुद्यतान्, कतिपयान् ग्रामप्रमुखान् ।"

"इत्थं समुपदिश्याऽपि नागरिकान् कर्तव्यविषये समाश्वासं लेशतोऽपि क्षणमात्रमप्यननुभवतः, सुविचार्याऽऽत्मनैव स्पशान् प्रत्ययार्हान् शिबिरप्रदेशे सर्वत्र जनसामान्यमनोभावजिज्ञासया व्यापारयतः, प्रतिप्रहरं तैरानीयमानान् वृत्तांतान् शृण्वतोऽनुपलभ्य सुविज्ञातान् राजद्रोहिणस्तेषां चिरपरिचितेषु निलयेषु सचितं तान् सर्वत्र गवेषयतः, नातिदूराया दाक्षिणात्यसीमाया असकृत् समापतद्भ्यो वार्ताहरेभ्योऽधिगत्य यवनसेनासागरप्रसरवार्तामधिकाधिकं समुद्विजमानस्य, पाश्चात्यसीमायां प्रतिदिनं घनतरीभवंत्याः शत्रुसेनायाश्चेष्टितानि सूक्ष्मेक्षिकयाऽवलोकयतः प्रतिपक्षप्रतिरोध-प्रभविष्णु सामर्थ्यं दुर्गस्य प्रतिपलं प्रवर्द्धयतोऽपि कृतकृत्यतां लेशतोऽप्यननुभवतोऽशांतस्वांतस्य मम स्वामिनो द्वित्रा दिवसा युगा इव दीर्घदीर्घा व्यतीयुः।"

"इयं तस्याशांतिः, भर्त !, परां कोटिमभ्यगच्छत् चतुर्थेऽह्नि, यदा खलु सः सायंसमये प्राकारशिखरवर्तिनं निरीक्षणस्तंभमारूढः, समुत्पतसायंसमीरलहरीविलुलितचिकुरः, निःशब्दः, एककः, कदाचिदधः प्रसृतं निर्जीवमिव नीरसं निर्जनमिव स्तब्धं शिबिरग्रामं पश्यन्, कदाचित् पश्चिमांबुनिधौ निमज्ज्य परलोकं यातं दिनकरमनुगतायाः दिनश्रियश्चितादीप्तिमिव सर्वतः प्रसृतामारक्तां सायंप्रभामवलोकयन्, कदाचिद्दिदृक्षयेव म्लेच्छसेनासागरस्य दुष्प्रसहप्रसरस्याऽऽकुंचित आरक्ते नयने दाक्षिणात्ये क्षितिजे तिमिरमलिने निखनन्-अपश्यदेकमश्वसादिनं धूलिधूसरितांगं, प्रपलायमानमिव कस्मादपि प्राणसंकटात् पापाद्दक्षिणाशानिलीनात्, समारुह्य जवनं फेनिलमुखं घोटकमतिवेगेन समुपसर्पन्तं सिन्धुमद्दुर्गम्।"

"प्रत्यभ्यजानात् सूक्ष्मेक्षिकया निरीक्ष्य परमविश्वासार्हाणां स्वदूतानामन्यतमम्। आदिशन् स्वपरिचारकं तं दुर्गाभ्यंतरं प्रवेशयितुं समुपस्थापयितुं च समक्षं तत्क्षणमेव। अशृणोच्च तस्माद्दीर्घदीर्घं श्वसतो वज्रपातसंनिभं समाचारं निरुद्धवासिनां कापुरुषोचितस्य व्यवहारस्य, वृत्तांतं च तस्या असामयिक्या घनवृष्ट्याः।"

"अधोवदनाः स्खलद्गतयो मुकुलितहस्तास्ते यदा मम स्वामिनः, रात्रि-भोजनानन्तरं शयनकक्ष आसंद्यां विश्राम्यत, आत्मनैव सह किमपि किमपि चिंतयतो, म्लानमुखमुद्रस्य सेवायामुपतस्थुः दौवारिकमनुसरन्तरस्तदा-महाराज !- क्षुद्रोऽयं सेवकस्तत्रैवासीत् साक्षात्कर्तुं संसारनाटकस्याविचाररमणीयस्य रोमांचकरं दृश्यमेकम्, अनुभवितुं च जीवितस्यास्य सौवर्णं क्षणमेकम् ।"

"कथं खलु ते क्षुद्राः मैघवा वारंवारं नुद्यमाना अपि मम स्वामिना- अवलोक्य तान् सहसा निगूहिताऽऽकारेण पूर्ववदेव स्मितवादिना,- निवेदनाय स्वमनोगतस्य नाशकन् समुच्चारयितुं शब्दमपि कदर्थनायाः, कथं खलु ते महता प्रयासेन प्रस्फुटितवाचः, क्षितितलनिखातनयना अंते प्रकटीचक्रुः स्वामाशंकां सर्व-व्यापिनो विनाशस्य प्राप्तायां परचक्रापदि, कथं खलु ते व्यानञ्जुः कातरस्वरा इच्छां शिविस्थानवासिनामात्मसमर्पणस्याऽऽततायिनां दुष्प्रसह्वेगानां पुरस्तात्, कथं खलु मम स्वामी, कक्षैकदेशप्रज्वलद्रत्नप्रदीपो-द्भासितमुखारविंदः, श्रुत्वा तां कापुरुषोचितामभ्यर्थनां सहसा क्रुद्धः, प्रस्फुरन्नाडीकलंकितभालपट्टः, क्षणमेकं मूर्तिवदवस्थितः, प्रयत्नेन महता नियम्याऽऽत्मानं, स्नेहार्द्रेणाऽपि सुलक्ष्यदार्ढ्येन मंद्रेणाऽपि गंभीरेण तान्-पितेव पुत्रान् कर्तव्यपथाद्विचलतः- प्राबोधयत्, कथं खलु ते, समनुभूयाऽऽत्मन इच्छायाः क्षुद्रतामादित एव व्रीडिताः, साक्षात्कृत्य तस्य क्षणिकमप्यविस्मरणीयं कोपप्रकाशं भयाक्रांता, विज्ञाय यावनस्य संकटस्य वास्तविकं कारणं, निशम्य तस्य यथार्थं स्वरूपं, समवगम्य तस्याप्रत्याख्यातस्य दुरुदर्कं भारतमातुः प्राणघातकं तस्मान् भावोद्रेकवशादुत्थायाऽऽसंद्याः कक्षाभ्यंतर एव सावेगानि पदानि क्षिपतःलज्जाभारभुग्नाः, भूम्या निगीर्णमेव वात्यया समुद्धूतमेव दिवा विलोपितमेवाऽऽत्मनं कामयमानाः, कष्टेन महता समुच्चार्यानुतापाक्षराणि कानिचिदस्फुटास्फुटानि- ततोऽपसृता, दुर्गान्निःसृताः,- नैशेऽधतमसे दिवाभीता इवालीयन्त-, तन्नूनं चतुर्वदनेनापि चतुरवदनेन यथार्थतो वर्णयितुमशक्यम् ।"

"इत्थं समुपदिश्याऽपि नागरिकान् कर्तव्यविषये समाश्वासं लेशतोऽपि क्षणमात्रमप्यननुभवतः, सुविचार्याऽऽत्मनैव स्पशान् प्रत्ययार्हान् शिबिरप्रदेशे सर्वत्र जनसामान्यमनोभावजिज्ञासया व्यापारयतः, प्रतिप्रहरं तैरानीयमानान् वृत्तांतान् शृण्वतोऽनुपलभ्य सुविज्ञातान् राजद्रोहिणस्तेषां चिरपरिचितेषु निलयेषु सचितं तान् सर्वत्र गवेषयतः, नातिदूराया दाक्षिणात्यसीमाया असकृत् समापतद्भ्यो वार्ताहरेभ्योऽधिगत्य यवनसेनासागरप्रसरवार्तामधिकाधिकं समुद्विज-मानस्य, पाश्चात्त्यसीमायां प्रतिदिनं घनतरीभवंत्याः शत्रुसेनायाश्चेष्टितानि सूक्ष्मेक्षिकयाऽवलोकयतः प्रतिपक्षप्रतिरोध-प्रभविष्णु सामर्थ्यं दुर्गस्य प्रतिपलं प्रवर्द्धयतोऽपि कृतकृत्यतां लेशतोऽप्यननुभवतोऽशांतस्वांतस्य मम स्वामिनो द्वित्रा दिवसा युगा इव दीर्घदीर्घा व्यतीयुः।"

"इयं तस्याशांतिः, भर्त!, परां कोटिमभ्यगच्छत् चतुर्थेऽहनि, यदा खलु सः सायंसमये प्राकारशिखरवर्तिनं निरीक्षणस्तंभमारूढः, समुत्तप्तसायंसमीरलहरीविलुलितचिकुरः, निःशब्दः, एककः, कदाचिदधः प्रसृतं निर्जीवमिव नीरसं निर्जनमिव स्तब्धं शिबिरग्रामं पश्यन्, कदाचित् पश्चिमांबुनिधौ निमज्ज्य परलोकं यातं दिनकरमनुगताया दिनश्रियश्चितादीप्तिमिव सर्वतः प्रसृतामारक्तां सायंप्रभामवलोकयन्, कदाचिद्दिदृक्षयेव म्लेच्छसेनासागरस्य दुष्प्रसहप्रसरस्याऽऽकुंचित आरक्ते नयने दाक्षिणात्ये क्षितिजे तिमिरमलिने निखनन्-अपश्यदेकमश्वसादिनं धूलिधूसरितांगं, प्रपलायमानमिव कस्मादपि प्राणसंकटात् पापाद्दक्षिणाशानिलीनात्, समारुह्य जवनं फेनिलमुखं घोटकमतिवेगेन समुपसर्पन्तं सिन्धुमद्दुर्गम्।"

"प्रत्यभ्यजानात् सूक्ष्मेक्षिकया निरीक्ष्य परमविश्वासार्हाणां स्वदूतानामन्यतमम्। आदिशत् स्वपरिचारकं तं दुर्गाभ्यंतरं प्रवेशयितुं समुपस्थापयितुं च समक्षं तत्क्षणमेव। अशृणोच्च तस्माद्दीर्घदीर्घं श्वसतो वज्रपातसंनिभं समाचारं निरूढवासिनां कापुरुषोचितस्य व्यवहारस्य, वृत्तांतं च तस्या असामयिकया घनवृष्ट्याः।"

"दूरदर्शी हि मम स्वामी, भर्तः !, निशम्य तां वार्त्तां तत्क्षणमेव समुत्प्रैक्षत यन्न केवलं विप्लावितदेवलपत्तनः सिंधुसरित्प्रतीपप्रवाहः स यवनसेनासागर, एवं निमज्ज्य निरुद्धं दुर्गमग्रे सरन्, नातिचिरादेव तस्य दुर्गं सामरिकदृष्ट्याऽतिमहत्वपूर्णमुपरोत्स्यति.... अपि तु देवलदेवीविग्रहखडनेन विशीर्णान्यगणितानि सैंधवमनांसि तस्या अकल्पिताया वृष्टयाः प्रभावेण तथा दुर्बलानि भविष्यन्ति यथा तानि यवनप्रतिरोधकल्पनामपि वोढु समर्थानि न भविष्यन्ति ।"

"विसृज्य तं विश्रामार्थं, चिरं विचारमग्नः, निश्चित्याऽऽत्मनैव 'तातचरणाः संकटवेलायामस्यां स्वयं साक्षात्करणीया' इति, निशीथे घनतिमिरे कतिपयैरंगरक्षकैः सह दुर्गान्निःसर्तुं प्रवृत्त एवाकस्माद्‌विदांचकार पाश्चात्त्यायाः सीमायाः सत्वरमागतं, तद्दर्शनातुरमेकं सैनिकं वार्त्ताहरं । समादिदेश च तं सेवायां समुपस्थापयितुम् ।"

"प्रदातु गः, भर्तः ! ,तस्मादारक्तनयनात् प्रस्वेदक्लिन्नवेपात् श्मश्रुलमुखात् शुश्राव चिरं प्रतीक्षितां दुर्वार्त्तां यत्– 'यवनानां मरुस्थलरणनिपुणाऽगणिता औष्ट्री सेना, पाश्चात्त्यसीमाप्रदेशे तत्कालपर्यन्तं निश्चलमवस्थिता, व्यतीत एव सायंकाले, लब्ध्वैव चिरप्रतीक्षितं कंचित् संकेतं, सहसा विभज्याऽऽत्मानं द्वयोर्दलयोः, उत्तरस्यां चाऽऽशायां प्रस्थिता, सद्यं विलीयमाना प्रतिक्षणं घनीभवति तिमिरे व्यलोकि दूरेक्षिकया गतागतानि समवलोकयद्भिः रिपुसेनायाः सैंधवैः सेनाप्रहरिभिरिति–', तदैव विलीनविकल्पः परित्यज्य भर्तृचरणदर्शनाभिलाषमतितीव्रं, भर्त्रा प्रदत्तस्य पाश्चात्त्यसीमारक्षणकर्तव्यस्यैकमात्रस्य पालनार्थं बद्धपरिकरो, 'दक्षिणस्याः सीमायाः प्रतिपलं समुपसर्पतो यावनस्य बलस्य प्रतिरोधार्थमुपायान् समीचीनान् प्रयोक्ष्यत्येव तात' इति समाश्वास्याऽऽत्मनं, स, विन्यस्य दुर्गरक्षणभारमुपदुर्गपाले दुर्गात् किंचिदपावृतमहाद्वारान्निःसृतः, व्यूढकंकटैः कौंतिकैरश्वारोहिभिः

सैनिकैरनुगम्यमानः, समाक्रम्योत्तराभिमुखं शिविरग्राममध्ययायिनमपि जनशून्यं पिहितकपाटगृहपंक्तिनिबद्धोभयपार्श्वं नीरवमर्धमृतमिव भासमानं मंदप्रकाशं पंथानं, प्रविवेश स्तब्धमपि प्रस्फुरद्‌रणोत्साहं स्वकटकम् ।"

"दक्षैः सेनाधिकारिभिः स्वकर्तव्यपालनतत्परैः सह संमंत्र्य च, स्वां बलिष्ठां सेनां गृहीत्वा, कटकपरिरक्षणभारं विन्यस्य कतिपयेषु गुल्मेषु, प्रहरमात्रावशिष्टायां तस्यां तमस्विन्यां पश्चिमायां दिशि प्राचलत् ।"

"अहं त्वधन्यः स्वामिना – न जाने किमिति विचार्य – तत्रैव दुर्गे तत्प्रत्यागमनं प्रतिपालयितुमाज्ञप्तस्तमनुसर्तुं न प्राभवम् ।"

"परंतु– तेन सह भ्रमित्वा योजनशतप्रसृतेषु, दिवा समुत्तप्तेषु, रात्रौ हिमशीतलेषु, कदाचित् संततोद्‌भवद्‌वात्याचक्रोद्‌धूतसिकतांधकारितेषु, अन्यदा प्रखरदिनकरदुर्दर्शेषु, निर्जलेषु, मरुमयप्रदेशेष्वनवरतमाहृतीकृत्यासंख्यान् उष्ट्रान् तदारूढांश्च कौंतिकान् धानुष्कान् आसिकान् विकरालकालमुखकंदरायां, सप्ताहानन्तरं प्रत्यागतानां श्रांतानां हताशानां तदंगरक्षकाणामन्यतमान्मयाऽज्ञायि यत्-सः,कटकात् प्रस्थितः,– अनवरतं प्रवसन्,– तर्कयित्वा संभाव्यमुत्तरतो दक्षिणतो वा रिपुसेनाऽऽक्रमणं, प्रातरेव, दलमेकं स्वसेनाया उत्तरां दिशं प्राहिणोत् । अन्यच्च स्वयं गृहीत्वा दक्षिणां प्रातिष्ठत । प्रतिकूलत्वात्तु भागधेयस्य नैकदाप्यलभतावसरं पर्याप्तं रिपुसेनया सह योद्धुम् । सा हि, शृगालसैनेव नितांतधूर्ता, सर्वतः प्रसृतायाः स्वख्यातेः सर्वथा विपरीतं वर्तमाना, सैंधवी सेना तदा तदा प्रजहार, निशीथे वा ब्राह्मे वा मुहूर्ते, विलोपितदिङ्‌मंडलं परिभ्रमति वात्याचक्रे वा प्रखरतापं तपति वा तपने दुःसहे, यदा यदा सा, निष्फलानुसारखेदक्लांता हताशा श्रांता, विश्रमितुं किल प्रावर्तत ।"

"आदित एव मरुयुद्धे नात्यभ्यस्तायास्तत्रापीदृशेनाननुभूतपूर्वसदृशेन प्रच्छन्नेनाऽऽक्रमणेनाविच्छिन्नेन त्रस्ताया अस्माकं

प्रदातुं प्राभवताम्। किंचिच्छुष्कोऽपि किंचिद्घर्घरोऽपि पूर्ववदेव मेघस्तनितगंभीरश्च स्वरः।

"मूर्तिमान् आर्यप्रताप इवावमानितः, अन्तर्गूढया वैरप्रतिनिर्यियातयिषयोदग्रः, स्वामी मम, प्रविश्य सिंधुमद्दुर्गं, तद्दुःखेन दुःखितमिव निश्चेष्टं, विश्रामकक्षं स्वं न्यवर्तत।"

"सुचिरं विचार्य च किमपि स्वात्मनैव, मामाहूय रहसि यावत् संदेष्टुं किंचिदारभते निर्विवेदयिषयेव महाराजचरणकमलयोस्तावदशृणोत् अतिजवेन दुर्गं समापततां कतिपयानां तुरंगमाणां खुरध्वनिं, तमनु च महाद्वारं मुष्टिभिः प्रताडयतां केषांचित् सैंधवानां तारस्वरमाह्वानशब्दम्। विरम्य च संदेशकथनात् सहसा समादिशत् मामुद्घाट्योपद्वारं दुर्गाभ्यन्तरं प्रवेशयितुमुपस्थापयितुं च तत्समक्षं तान्।"

"प्रत्यभिज्ञाय च क्षणमात्रानन्तरं पुरत आनीतान् समुच्छ्वसद्वक्षःकपाटान् प्रवहद्घर्मजलार्द्रमुखानावेगप्रकंपमानगात्रान् तान् नातिदूरेऽवस्थिताच्छिबिकाननसीमावर्तिनः निरीक्षणस्तंभात् ममापतितान् स्वसैनिकान् निःशब्दमुखरया दृशैव विहाय कर्तव्यस्थलं तथाऽऽगमनस्य प्रयोजनमपृच्छत्।"

"अत्याहितं, स्वामिन्! ---- अत्याहितम्- अवोचत् सहसा तेषां नायकोऽस्फुटाक्षरम्।"

"आदिष्टश्च मम स्वामिना स्थिरया दृष्ट्या सविस्तरनिवेदनार्थं प्राह 'भर्तः! आरुह्य यथाऽऽदेशं निरीक्षणस्तंभं सावधानया दृष्ट्या चतुर्दिशं निपुणं ध्यायद्भिरस्माभिः सद्य एव खलु दृष्टा दाक्षिणात्यात् क्षितिजात् सजवं समुपसर्पन्ती यवनसेना। आदौ तावद्वयं तां क्षितिजे तस्मिन् घनीभूतामंधकाररेखामेवाचितयाम, ततः सुदूरप्रसृतां सिकतिलां वात्यां, ततश्चासामयिकीं घनघनपंक्तिम्। सुनिपुणमवलोकयन्तस्तु क्षणमात्रानन्तरमेव तां याथार्थ्येनाऽऽकलयितुं

सेनाया, भर्तः, यावन्त उष्ट्रा औष्ट्रिकाश्च सैनिकाः पिपासया दिग्भ्रांत्या च कदर्थिताः कालवश्यतां ययुः न खलु तावन्तः रिपुसेनया वीरोचितं युद्ध्यमानाः। यवनसेनाया अपि हानिः नूनं बभूव। परन्तु– न तावती यावती अस्मत्सेनायाः। सा प्रत्युत– आजन्मनः क्षुत्पिपासादिमरु-दुःखसहनक्षमा, मरुयुद्धे परमकुशला, सुविचिंतितं युद्धकल्पमनुवर्तमाना, मूल्यमत्यल्पं प्रदाय साफल्यं कल्पनातीतमध्यगच्छत् स्वकार्यस्य संसिद्धौ"।

"एकस्मिन्नेव हि सप्ताहे सिंधुमद्दुर्गंकटकप्रस्थितस्य प्रबलस्य सैंधवबलस्य, तस्मिन् मरुयुद्धविडम्बनाकर्दमे निमग्नस्य, यवनसैनिकशृगालैरहोरात्रं लुच्यमानस्य, सामर्थ्यं, आशायामुत्तरस्यां सवेगं प्रसरतो म्लेच्छसेनासागरस्य प्रतिरोधक्षमं– पश्यत एव मम स्वामिनः– क्षयमात्यंतिकमयात्।"

"अयाच्चादर्शनमात्यंतिकं सा यवनसेना···· कृतकरया।"

"धन्वनि समुत्तप्ते गलितामिव, दुरालोके नैदाघे विहायसि समुत्पतितामिव, परिस्पंदति मरीचिकाजले निमग्नामिव, तां रिपुसेनामदर्शनमात्यंतिकं गतां विभाव्य क्षणमात्रं विस्मितो मम स्वामी, क्षणेऽन्यस्मिन्नेव क्षीणक्षीणां स्वां पृतनामवलोक्य साक्षाच्चकार रिपोर्वास्तविकं संकल्पं, विवेद तं सफलमनोरथं, समनुवभूवाऽऽत्मानं पराजितं, प्रत्यावर्तयामास च बलं– बलावशेषं वा– सैंधवं सिंधुमद्दुर्गमुद्दिश्य····निर्विण्णः।"

"यदा खलु मम स्वामी, परिहरन्निव सामान्यजनदर्शनं, निशामुखे तस्मिन् तमोबहुले निरुद्धनिःश्वास इव निर्वर्ते, सिंधुमद्दुर्गं प्रत्यावर्तत तदा– सत्यं ब्रवीमि भर्तः– अहं तं प्रत्यभिज्ञातुमपि न प्राभवम्। सिकतिलरुक्षकेशे मलिनभालपट्टे प्रवृद्धश्मश्रुणि समुत्तप्तलोहताम्रे शुष्कदशनच्छदे मुखे यथापूर्वं– अधिकतरमेव वा– प्रदीप्यमाने पिंगलतारके लोचने एवाऽऽरक्ते तस्य वास्तविकं परिचयं

प्रदातुं प्राभवताम्। किंचिच्छुष्कोऽपि किंचिद्घर्घरोऽपि पूर्ववदेव मेघस्तनितगंभीरश्च स्वरः।

"मूर्तिमान् आर्यप्रताप इवावमानितः, अन्तर्गूढया वैरप्रतिनिर्यियातयिषयोदग्रः, स्वामी मम, प्रविश्य सिंधुमद्दुर्गं, तद्दुःखेन दुःखितमिव निश्चेष्टं, विश्रामकक्षं स्वं न्यवर्तत।"

"सुचिरं विचार्य च किमपि स्वात्मनैव, मामाहूय रहसि यावत् संदेष्टुं किंचिदारभते निविवेदयिषयेव महाराजचरणकमलयोस्तावदश्रृणोत् अतिजवेन दुर्गं समापततां कतिपयानां तुरंगमाणां खुरध्वनिं, तमनु च महाद्वारं मुष्टिभिः प्रताडयता केषांचित् सैंधवानां तारस्वरमाह्वानशब्दम्। विरम्य च संदेशकथनात् सहसा समादिशत् मेमुद्घाट्योपद्वारं दुर्गाभ्यन्तरं प्रवेशयितुमुपस्थापयितुं च तत्समक्षं नान्।"

"प्रत्यभिज्ञाय च क्षणमात्रानन्तरं पुरत आनीतान् समुच्छ्वसद्वक्षःकपाटान् प्रवहद्घर्मजलार्द्रमुखानावेगप्रकंपमानगात्रान् तान् नातिदूरेऽवस्थिताच्छिविकाननसीमावर्तिनः निरीक्षणस्तंभात् समापतितान् स्वसैनिकान् निःशब्दमुखरया दृशैव विहाय कर्तव्यस्थलं तथाऽऽगमनस्य प्रयोजनमपृच्छत्।"

"अत्याहितं, स्वामिन्! .... अत्याहितम्— अवोचत् सहसा तेषां नायकोऽस्फुटाक्षरम्।"

"आदिष्टश्च मम स्वामिना स्थिरया दृष्ट्या सविस्तरनिवेदनार्थं प्राह 'भर्तः! आरुह्य यथाऽऽदेशं निरीक्षणस्तंभं सावधानया दृष्ट्या चतुर्दिशं निपुणं ध्यायद्भिरस्माभिः सद्य एव खलु दृष्टा दाक्षिणात्यात् क्षितिजात् सजवं समुपसर्पन्ती यवनसेना। आदौ तावद्वयं तां क्षितिजे तस्मिन् घनीभूतामंधकाररेखामेवाचिंतयाम, ततः सुदूरप्रसृतां सिकतिलां वात्यां, ततश्चासामयिकीं घनघनपंक्तिम्। सुनिपुणमवलोकयन्तस्तु क्षणमात्रानन्तरमेव तां याथार्थ्येनाऽऽकलयितुं

प्राभवाम। अथान्या दिशो गह्वरादजस्रधारं समापतन्तीं, स्थूलतां प्रतिक्षणं वर्द्धमानामधिगच्छन्तीं सांद्रां तां म्लेच्छसेनामवलोक्य विस्मिता वयं क्षणमात्रं किंकर्तव्यविमूढा एवातिष्ठाम। संप्राप्तायाश्च विपदो यथार्थं स्वरूपं स्वामिचरणयोः स्वयं निवेदनीयमिति विनिश्चित्य, निरीक्षण–स्तंभभारं गुल्मे विन्यस्य, त्वरया महत्याऽत्र....' आगताः आगताः – सहसा समुदभवत् तुमुलः कोलाहलः प्राकार-शिखरवर्तिनां, निर्निमेषमवाचीनं दिगन्तमवलोकयतां, दुर्गरक्षकाणां मुखात् निमज्जयन् तस्य निवेदनम्।"

"समाकर्ण्य त मम स्वामी, भर्तः!, वनराज इव समुत्तेजितः, सहसा निर्गत्य विश्रामकक्षात्, तीव्रयाऽपि धीरया गत्या समाक्रम्य प्रांगणं सैनिकबहुल समारुह्य च निरीक्षणस्तंभं चिक्षेप दृष्टिं तीव्रां रक्षकेण केनचिदावेगचंचलयांऽगुल्या विनिर्दिश्यमानेऽवाचीने क्षितिजे।"

"तमनु च – अहम्।"

"आदौ तावत् – अहं – भर्तः – शपे मम जीवितेन, किंचिदपि द्रष्टुं न प्राभवम्। दिगंतव्यापिनि वियच्चुंबिनि पाताल-स्पर्शिनि निस्तरंगे सांद्रेऽधकारसागरे निमग्नमिव मुद्रितलोचनमिव विलीननयनज्योतिषमिवाऽऽत्मानमकल्पयम्। क्षणमात्रानंतरं तु – स्वामिनोऽनुसरन् दृष्टिपथं दक्षिणे क्षितिजे निखनन् स्वदृष्टिमवालोक – यमन्वभवं वा सांद्रतरमंघतमसपिंडं वेगेन महताऽऽविर्भवन्तं, जवेन कल्पनातीतेन सर्वतः प्रसरन्तं, रयेण तीव्रेणाधःप्रसृतामदृश्यविशेषां भयेन दुःसहेनाऽऽवृत्याऽऽत्मानं कज्जलकृष्णेन विपिनवस्त्रेण निश्चेष्टं भूमौ निपतितामिव भूमिं च्छादयन्तम्। अवलोकयत एव मम व्यात्तमुखं – स पिंडः समीपतरं समीपतमं समुपससार। सहसा दक्षिणीकृत्य च निःस्तब्धं सिंधुमद्दुर्गं तद्वामपरिसरवर्तिनं च निश्चेष्टं भयाद्विगतसंज्ञमिव शिविग्रामं यंत्रचालित इव क्षितिजमुदीच्यं यावत् प्रससार।"

"अजानां च तं 'यवनसेनासागर' इति क्षणमात्रानन्तरं सर्वतः प्रसरता तीव्रेण प्रस्वेदगंधेन, सुस्पष्टं श्रूयमाणेनासंख्यखुरनिनादेन, कदाचित्केन च तारतरेणाविस्पष्टेन यावनेनाऽऽज्ञाशब्देनासंकृते-नोत्तारितो विकल्पपंकात्।"

"दुराशाकदर्थ्यमानहृदयश्च – ज्ञातुं तस्येयत्तां–चतुर्दिशं नयने विस्फारिते व्यापारयन् सिंधुमद्दुर्गं दिगन्तप्रसृतेनानंतेन तेन सेनासिंधुनाऽवरुद्धमेव साक्षादकरवम्।"

"प्राणावरोधनमेतद्दुरुच्छेद्यमिति साक्षात्कृत्य च गलित-धैर्यविशेषः, शुष्यन्मुखो, याचमान इव मार्गनिर्देशं, भिक्षमाण इव धैर्यसंपदं, मूकयाऽपि प्रार्थनामुखरया दृष्ट्या करुणया स्वामिनो मुखमवालोकयम्।"

"अपश्यं च तस्मिन्.....लोकविलक्षणं कंचिद्भावोद्रेकम्।"

"तिमिरवशान्नातिविस्पष्टमपि तारकिते गगने विस्पष्टाकारं, नैशमंदसमीरपरिचुंब्यमानचिकुरं, निर्निमेषया दृष्ट्या तोलयदिव रिपुसेनासामर्थ्यं, किंचिद्विगलितोष्ठपुटं, हसदिव समाधानेनाधिगत्य तत् स्वसामर्थ्यतुल्यं, तत् मुखं अहं..... भर्तः..... जन्मनि जन्मान्तरे वा न विस्मरिष्यामि।"

"अनुभूयेव मम क्षुद्रस्य निःशब्दां प्रार्थनां स व्यावर्त्य तत् किंचित् क्षणमेकं मां निदध्यौ निःशब्दयाऽपि भावमुखरया प्रसन्नोद्दामया दृष्ट्या। संक्रमयन्निवाऽऽत्मनरुद्वेल्लद्धैर्यमल्पप्राणे मयि, स्मयमानो, मां स्कंधेऽवनमिते पस्पर्श क्षणमात्रम्। समादिश्य च सैनिकप्रहरिणः सावधानतया निरीक्षितुं रिपुबलस्य चेष्टितानि क्षुद्रतमान्यपि, मंत्रणाकक्षं न्यवर्तत सेनाधिकारिभिः सह विचार-विनिमयार्थम्।"

"आस्त च चिरं तत्र नानाविधानवरोधप्रतिरोधोपायान् तैः स्राकं पर्यालोचयन् । कांस्तावदुपायान् ते निश्चिक्युस्तदहं ज्ञातुं न प्राभवम् । अवालोकयंस्तु चिरादेकं सद्यः प्रबोधितं सावधानं संदेशवाहनप्रशिक्षितं नीलवर्णं पारावतं समुत्पात्यमानं मंत्रणाकक्ष-वातायनात्, प्रस्थितं च सजवमुदीच्यां दिशि निःशब्दं, निगीर्यमाणं च सर्वतः प्रसृतेनास्माकं दुर्भाग्येनेव मलीमसेन नैशेन ध्वांतेन ।"

—"न कोऽपि पारावतः संदेशवाहकः संप्राप्त इह" – प्राह सुमतिः ।

"नूनमवरोधकैः शरेण विद्धः जीवितस्यान्तं संप्राप्तो भवेत्" उवाच धीसचिवः ।

"अहितश्च – पठित्वा तत्पक्षतिनिगूढं संदेशं – परिचितो दुर्गान्तर्वर्तिनां दयनीययाऽवस्थया" – मंदं मंदं जगाद सिंधुनरेशः ।

—"स तु पाश्चात्यसीमावर्तिन्या औप्ट्र्याः सेनायाः प्रमुखेन ततः प्रागेव तद्विषये संसूचित आसीत्"– शुष्कस्वरमवदत् राजदारिका ।

"अनंतयुगदीर्घदीर्घा सा निशा शनैः शनैः परिणति-मधिगन्तुमारभत । अस्माकं च सर्वेषामेव दुर्गसैनिकानामवधानं– खेदाद्वा नैराश्याद्वा वैपरीत्याद्वा भागधेयस्य – शैथिल्यम् । यदि हि दिगंतप्रसृतं कज्जलाभं – जलमिव कस्यचिदमंगलस्य सागरस्य– म्लेच्छानां बलं, परित्यज्य निश्चेष्टतां भ्रांतिजनिकां, समाक्रमितुं सिंधुमद्दुर्गं स्तोकमप्यारप्स्यत तर्हि स्खलनमेतादृशमस्माकं कदापि नाघटिष्यत । परंतु – शत्रोः निश्चेष्टताऽस्मासु निश्चेष्टतामजनयत् । सा जडताम् । सा च तंद्राम् ।"

"सा चाभज्यत सहसा तमःपटले सूचिभेद्ये सहसा समुद्गतेन कर्कशेन भयचीत्कारेणान्यतमस्य दुर्गरक्षकाणाम् ।"

"अस्मद्भ्रांतिश्च दर्शनेनासंख्यानां कृष्णकवचाऽऽवृतकायानां खड्गपाणीनां यवनसैनिकानां, प्राकारान्तर्वतिनः जीर्णवेश्मनः कस्यचिदुद्भ्रांतयाऽज्ञातकुलनामधेयया सद्य एव मृतया कयाचिज्जरत्योषितपूर्वस्य विनष्टकपाटाद्द्वारादनवरतं वहिर्निर्गच्छतां, दुर्गाभ्यन्तरे सर्वतः प्रसरताम् ।"

"तत्क्षण एव हि वयं विविदिम-सा खलु निश्चेष्टता रिपोः रणचातुरी एवाऽऽसीत् । प्रवञ्च्यास्मान् तेन खल्वेताहशो दुर्गान्तर्यामी भूमार्गोऽनुसृत आसीत्, यद्विषये वृद्धतमोऽपि दुर्गरक्षक आस्माकीनः लेशमात्रमपि नाजानात् ।···· कथं नु सः समवेत् – एतत्तु न कोऽपि तर्कयितुं प्राभवत् ।"

शून्यशून्यया दृष्ट्या महार्हाऽऽस्तरणकल्पनां ध्यायन्ती राजदारिका तस्य निवेदनमेकाग्रेण मनसा शृण्वत्यपि मूकेव तस्थौ ।

"न चालभतावसरम्"–उवाच स दूतः । "यावद्धि वयं सर्वे दुर्गरक्षकाः, सहसा एवं प्रबोधिताः, कथमपि पर्यवस्थाप्याऽऽत्मानं, शस्त्राणि स्वानि ग्रहीतुमुपक्रमं कुर्महे – तावत्ते यवनसैनिका, विचलिता इव गुल्मस्फोटेनासामयिकेन, त्यक्त्वा निःशब्दप्रसरणयोजनामुत्क्षिप्तकरवालाः '····अल्लाहो अकबर····अल्लाहो अकबर' इति रणगर्जनां कुर्वाणाः, विद्युद्वेगेनास्मान् आचक्रमिरे····अंधकारपुंजा इव महसा सम्रियाः ।"

"अहं तु-मतेः-ततः प्रवृत्ते तुमुले युद्ध-आततायिनां पापस्पर्शान्मातृभूमिं मोचयितुं यथाशक्ति प्रयतमानोऽपि, आदित एव नातिसमाश्वस्तो दुर्गसामर्थ्यविषये, यस्मिन्नेव क्षणे हतभागिनी विजयलक्ष्मी दुर्दान्तैः रिपुसैनिकैरपह्रियमाणामिव समकल्पयं···· तस्मिन्नेव क्षणे ततः पलायियिषयेवापासरं, निभृतं प्रविश्य च मंत्रणाकक्षं, स्वामिनं युद्धसंचालनव्यापृतं स्तोकमप्यनुत्तेजितं दुर्गात्तस्मात् तत्क्षण एव भूमार्गेणान्यतमेन निर्गन्तुं व्यज्ञापयम् ।"

"प्रतिक्षणं निकटतरं सर्पति संग्रामकोलाहले, दर्पोद्धतेन सिंहनादेन करुणेन क्रंदनेन घोरेण विस्फारेण चोपबृंहिते, स तावदादौ ममानुरोधवच एव नाश्रृणोत्। दृष्टिं निक्षिप्यान्यमनस्का मद्दिशि पूर्ववदेव संचालने युद्धस्य व्यापृतोऽभवत्।"

"यदा त्वहं ममानुरोधं त्वरातीव्रेण स्वरेण पुनरुदचारयं तदा स, अविश्वसन्निव, क्षणमेकं मां तीव्रया दृष्ट्याऽवालोकयत्। विलोपितसंदेहश्च क्षणमात्रानन्तरं मम दृष्ट्या भावकरुणया-अवाक्-क्रोधताम्रः-ज्वलत्कनीनिकयैवाऽऽरक्तारक्तया दृशा दहन्निव-मां चिरमिव निदध्यौ। अपेक्षितोद्गमामपि अनपेक्षितावेगां तां तस्य प्रतिक्रियां साक्षात्कृत्य विगलित इव विचूर्णित इव विदग्ध इव विच्छिन्न इव विच्छर्दित इव-सत्यं ब्रवीमि भर्तः-संकल्पो मम साफल्यं स्तोकमपि नालप्स्यत यदि नाम तत्र तावत्या कालकलया आगताः, अहमिव पराजयं निश्चितप्रायं मन्वाना, अहमिव स्वामिनः कल्याणमाशंसमाना, अहमिव तं ततः निर्गमयितुमातुराः, परंतु मत्तुल्यं साहसं कर्तुमपारयन्तः, सेनाप्रमुखाः, समुपलभ्य तमप्रत्याशितमवसरं सहसा वज्रदृढमेकमत्यमापन्ना, एकेन स्वरेण न तमन्वमोदिष्यन्त, न च तस्य संभाव्यान् शुभान् परिणामान् सावेगमसूचयिष्यन्त।"

"इत्थं सर्वैरस्माभिः सादरं सानुनयं सावेशं सत्वरं सशपथं प्रार्थ्यमानोऽपि स्वामी चिरात् खल्वभ्यर्थनां ममाऽन्वमोदत। असहमानस्तु कल्पनामपि ततः निर्गमनस्यैकलस्य समपसरणं भूमिमार्गेण सर्वैः सैंधवैः दुर्गरक्षकैः सहितस्यैवाऽऽत्मनः स्वीचकार।"

"प्रत्यागतप्राणा इव सर्वे वयं, सहर्षं तस्याऽऽग्रहमंगीकृत्य, समाहृत्य यावच्छक्यं दुर्गसैनिकान् शरीरेणाक्षतान् निकटस्थितान् कतिपयेष्वेव निमिषेषु, समाश्वास्य तं एतावन्त एव योद्धारोऽवशिष्टा वैरप्रतिनिर्यातनार्थमिति, विहाय रिपुसैनिकान् विनाऽऽयासमिव लब्धेन विजयेन प्रहृष्टान् दुर्गे तत्र तत्र सोन्मादं भ्रमितुं, स्वामिना सह, भूमार्गेणान्यतमेनातिगूढेन ततः निरगच्छाम। अतिक्रम्य च तं

योजनद्वयमात्रदीर्घमपि तमोबहुलतया विषमतया दुर्गमतया निरुच्छ्वासतयाऽनंतमिव भासमानं, चिरात् खलु, औत्तरस्यैकस्य भग्नप्रायस्य देवतायतनस्य भांडारगृह उदगच्छाम।"

"निर्गताश्च शून्यशून्याद्देवतायतनाद्विभीताधिष्ठितात् यावत् सर्वतो दृष्टिं शंकातुरां व्यापारयन्तोऽनवलोक्य किंचिदपि चिन्हं दक्षिणे क्षितिजे यवनसेनायाः निर्भयं श्वसन्तोऽवलोक्य गगनमध्यात् परिभ्रष्टं, भाग्यमिवाभिशप्तस्य कस्यचिदधीश्वरस्य, पश्चिमांबुनिधौ निपतन्तं भास्करबिंबं विस्मयमनुभवन्तः, निरीक्षमाण्योन्यमाश्यानलोहितधारालिप्तसर्वांगं प्रवृद्धश्मश्रुजालाऽऽवृतमुखमारक्तनयनमपरिचितमिव भासमानं चकितचकिताः, स्वामिने किंचिन्निवेदयामः— तावदशृण्म तस्यास्मन्मध्यवर्तिनोऽपि विदूरस्थस्येव भासमानस्य, निर्निमेषया दृष्ट्या दक्षिणं क्षितिजमेव ध्यायतः, लोकान्तरादिवाऽऽगच्छन्तीं दुर्विज्ञेयभावामानुपूर्वीमिव भासमानां वाणीं नातिस्फुटां— 'अयं वज्रबाहुस्तातपादानां पुरतो धावित्वा एवाऽऽत्मन इमं कलंकमुपस्थास्यति,.... नान्यथा,.... तद्ये खलु समर्थकल्पा.... अनुगच्छन्तु ते माम्,.... ये च न.... ते....' ।"

"अपश्यं च तं, कलंकाक्षराणि तान्यनुच्चार्य, विचारशून्यं मुखं व्यावर्त्य, मां संबोधयन्तं— 'स्वमितो गत्वा.... प्रणामं ममापश्चिमं तातपादेभ्यः.... निवेदय,.... अनामयं च भिषग्वर्येभ्य—' इति, पराङ्मुखीभूय च सहसाऽऽशायामुत्तरस्यां प्रस्थितं, क्षणमात्रानन्तरं चानुगम्यमानं सर्वैरपि वीरैः क्रमशो विलीयमानं प्रतिक्षणं घनीभवति निशाभुगध्वांते ।"

"प्रस्थितश्च ततः कथमप्यहमधन्यो, द्विचारकं प्रवंचकेन हतदैवेन प्रतिबंधितः स्वामिनोऽनुगमनाद्भर्तुश्चरणकमलयोर्दर्शनाया-नुष्ठानाय च स्वामिनः नियोगस्य,— एकलः,— बलवत्तया भागधेयस्य गापत्स्यमधाध्यगच्छम् ।"

"न खलु लभते मम मानसं शांति क्षणिकामपि विरहितस्य स्वामिना।"

"तदनुजानातु मां भर्ता कृतकार्यमनुष्ठितनियोगं प्रतिनिर्वाततुमितः, मृगयितुं स्वामिनं, समनुसतुं च तमापातादस्य शरीरहतकस्य।"

व्रुवंश्चेत्थं, प्रणम्य सिंधुराज शिरसाऽवनितल-चुंविना, सहसा ततः निर्जगाम।

प्रससार च तस्मिन् कक्षे पाषाणजडा निःस्तब्धता।

"कुत्र नु खलु गतो भवेद्राजकुमारः···· स्वाभिमानधनः" स्वगतमिवाऽऽहास्फुटाक्षरं सांधिविग्रहिकः, कथमपि भंजयन् ताम्।

"वुधिलप्रदेशम्···· इति तर्कये"– प्रत्युवाचाधोदृष्टिः धीसचिवः।

न तु शुश्राव लेशमात्रमपि तयोः संभाषणस्य देवलदेवी···· पुनः पुनरवलोकयन्ती भ्रातरं वज्रबाहुं, शिविदुर्गाय एकलमेव प्रस्थितं, सस्मितमपि चिताम्लानलोचनं, सपरिहासमापृच्छमानमपि तदनुज्ञां लोचनाभ्यां संगृह्णन्तमिव तस्या मूर्तिमपुनर्दर्शनाशंकया···· स्मृतिचक्षुपा···· ।

····"किमिति वज्रः नियत्या यत्किंचित्कारिण्या प्रवंचितः नात्रैवाऽऽगतः? ····अत्र हि सः सैंधवस्य निखिलस्य राज्यस्य समग्रेण वलेन तदाज्ञानुवर्तिना संग्रामे निर्णायके प्रयुक्तेन यथा स्वपराजयनिर्यातने साफल्यमलप्स्यत, न तथाऽन्यत्र क्वाऽपि।"

····'नूनमभिमानधनो, मरुयुद्धेऽमित्रेण शृगालचतुरेण तथा विप्रलब्धः, सिंधुमद्दुर्गसदृशस्य च सामरिकदृष्ट्याऽतिमहत्त्वशालिनः

स्थानस्य परिरक्षणे तथा विफलीभूतोऽस्मत्सांमुख्यं तावत् परिहरति यावज्जित्वा रिपुं यशोराशिमात्मनः सुधाफेनधवलं पुनर्न कुरुते ।"

—"आ बाल्यादेव स तादृशः । (सविषण्णस्मितं) पुरा खलु, सर्वैरप्यस्माभिः सह मृगयार्थमितः प्रस्थितः, शिविवनप्रदेशे 'वन्यप्राणिभयंकरे' दिवाऽपि घनांधकारे प्रविष्टेष्वस्मासु, कैशोर्य-सुलभचांचल्यवशात् काननपदपथान्नातिविप्रकृष्टे तरुगुल्मके कस्मिंश्चित् समुपसर्पितुरग एकलस्तन्निलीनेन हिंस्रेण खंडितनिद्रेण क्रुद्धेन श्वापदेन केनचित् सहसा समाक्रांतः, क्षणमात्रं विमूढोऽपि क्षणेऽन्यस्मिन्नेव प्रकृतिमापन्नः, सिंहशावक इव प्रत्याक्रमणोद्यतः, प्रक्षिप्तभल्लोऽपराद्धप्रहारः, निमेषमात्रे दैववशात्तत्राऽऽगतेन केनाऽपि सैनिकेन कृतपुंखेन विद्धात्तस्मात् श्वापदाद्रक्षितो, व्रीडाऽऽरक्तमुख-कमलः, प्रस्फुरदधरोष्ठः, साश्रुनयनेंदीवरः, सर्वेषामेवास्माकं राजधानीं प्रत्यागतानां दर्शनं सप्ताहपर्यन्तं तथा परिजहार मात्रा वारंवारं सस्नेहं संबोधितस्तातेन कृतकरोषेण 'किमिति, रे त्वयाऽस्माकं राजकुमारस्य लक्ष्येऽनाहूतेन धृष्टेन वाणो व्यापारित' इति निर्भर्त्स्यं तं सैनिकं साहाय्यकारिणं, 'एते सेवका उत्साहातिरेकवशात् कदाचि-देवमेव मर्यादाः स्वा अतिचरन्ते, तत् स्वामिना विशालहृदयेन क्षंतव्या एत' इति सगांभीर्यमिव प्रबोधितः, मया च ज्ञातसर्ववृत्तांतयाऽपि नितांतमनभिज्ञमिवाऽऽत्मानं प्रदर्शयन्त्या, तद्वैमनस्यवशादाहत-मिवाऽऽत्मानं प्रकटयन्त्या, सप्रणिपातमसकृत् सख्यार्थमनुरुद्धस्तथा प्रकृतिं स्वां प्रसन्नां समपद्यत – यथा स्मृतिपथं समायातं तत् सर्वमपि विस्माययत्यधुनाऽपि चेतः ।"

—"*कुत्र नु खलु गतो भवेत् सः ?*" – *बलादाकृष्य चेतः* बाल्यकालिकीनां घटनानां स्मृतिपथेषु रमणीयेषु चापल्येन प्रधावत्, चिंतयामास राजदारिकाऽन्येद्युः, – एकला, समुपविष्टा लतामंडपेऽन्तः-पुरारामेऽवलोकमाना विमनस्कतयाऽन्तःपुरारामपुष्पवाटिकासु विकसितान् पश्चिमाचलचुंबिसहस्रकरकरसंस्पृश्यमानान् पुष्पगुच्छान् मंदसमीरतरंगान्दोलितान् ।

"नूनं बुधिलप्रदेशम् । सिंधुमद्दुर्गादपसृतस्य क्षीणसाहाय्य-संपद आगमनमत्र साग्रहं परिहरतस्तस्य तत्र गमनमेव समुपपद्यते । गत्वा तत्र, संबोध्य बुधिलान्, जागरयित्वा तान् स्वकर्तव्यविषये, स नूनं निरुरुत्सत आक्रामकान् तेषां साहाय्येन । स्वभावत एव स्वामिभक्ता बुधिलाः निशम्य तस्योद्बोधनं साक्षात्कृत्य स्वकर्तव्यं संकटेऽस्मिन् तस्याऽऽह्वानमेकमत्येन स्वीकुर्युः, प्राणांश्च समराग्नौ जुहुयुरित्यत्र न संशयः ।"

"स तु तेषामग्रणीः काकः काकबुद्धिः सहकार्यं तत्र कियत् कुर्यादित्यत्र । अतिचपलमतिः, 'नूनमयमविश्वसनीय' इति तातेन पदादेकदा दूरीकृतोऽपि चरणनिपतितो दयार्द्रहृदयेन पुनः पदे स्वीये संस्थापितः सः संकटेऽस्मिन् संस्मरन् तातस्योपकारान् प्रत्युपकुर्यादथवा प्रत्यपकुर्यात् पादस्पृष्ट इव नागः प्राप्यावसरं वैरनिर्यातनातुर इत्यत्र । स्वार्थसाधनमात्रदक्षाऽतिचतुरा तस्य काणस्य सा दृष्टि-रविश्वासभावनामेव नूनं जनयति, समुत्पादयति च धारणां हृदि यत् सः समुपस्थितेऽवसरे पितरावपि स्वौ साधनाय स्वार्थस्य बलीकर्तुं न विमृशेत् । ···सा तस्य वामनाऽपि चपला मूर्तिः, स स्त्रैण इव कोमलोऽपि जुगुप्सकः स्वरः, तत् कृत्रिमं स्मितपूर्वभाषित्वं —सर्वमेव तस्य – दुःशंकां स्फारयति नितांतमपरिचितस्याप्यन्यस्य हृदि । ···अतएव सः – न जाने कदा-'काक' इत्यन्वर्थकां संज्ञां केनापि लंभितः न पारयते तामुज्झितुमद्यापि । बुधिलसदृशाः सज्जनाः सैंधवास्तत्सदृशं नरशृगालमग्रणीत्वेन कथं सहन्त – इत्येव नामाऽऽश्चर्यास्पदम् । अथवा–वंशपरंपरागत–इत्येव मनसि कुर्वाणा भ्रातृघातिनमपि क्षुद्रातिशायिनमपि तं पदात् तस्य भ्रंशयितुं नोत्सहन्ते ।"

"अपि नाम वच्रो वज्रसंकल्पः कर्तव्यबोधेन स्वेन साधीयसा तं संकटसमयेऽस्मिन् कर्तव्यकरणाय प्रेरयितुं समर्थो भवेत् ? ···अपि नाम··· "

"जयतु ···· जयतु भर्तृदारिका" सहसा कर्णपथमापतितेनाऽऽदरमंद्रेण संबोधनवचसाऽकस्मात् अत्रुट्यत तस्याश्चिताभरजडा विचारशृङ्खला । अपश्यत् सा स्वपुरतो विनयावनतं प्रधानं प्रतीहारम् । अन्वजानाच्च तं स्वनियोगस्यानुष्ठानात् भृकुटिभंगेनानतिस्पष्टेनऽन्यमनस्कैव ।

"जयतु जयतु भर्तृदारिका" – समुपजाताऽऽश्वास इव पुनरवदत् स राजपुरुषः । "महाराजाधिराजो मंत्रणागृहे विराजमानो बुधिलप्रदेशात् समुपस्थितं वार्त्तायनं कंचिद्दर्शनप्रदानेन बहु मानयन् संदेशगौरववशाद्भर्तृदारिकाया अपि समुपस्थितिं तत्राविलंबमेव कांक्षति ।"

राजकन्या तु समाकर्ण्य बुधिलप्रदेशनामोल्लेखमात्रं सहसा सावधाना जिज्ञासातुरा झटिति समुत्थिता, निशामुखतिमिरान्नंतेनापि परिचयात् सुपरिलक्ष्येण मार्गेणातिक्रम्य निद्राभरालसपुष्पलोचनमारामं प्राविशन्मंत्रणागृहं पुरःसमुपसर्पता प्रतीहारेण समुपदिश्यमानमार्गा, अपश्यच्चयथापूर्वमासंधामुपविष्टमपि यथापूर्वं प्रज्वलद्दीपज्योतिःप्रकाश्यमानमपि यथापूर्वं विनयावनतया मंत्रिपरिषदा परिवेष्टितमप्यलक्षितपूर्वेण केनचिदुत्साहातिशयेनान्यमिव भासमानं, विधूतवार्द्धकभारमिव प्रोन्नततरमिव बलवत्तरमिव प्रज्वलितप्रतापपावकमिव भासमानं स्वजनकम् । अशृणोच्च कृतप्रवेशेव महतोत्साहेन तामेव संबोधयन्तीं हर्षकातरां तस्य वाणीम् ।

"एहि ! एहि ! शृणु स्वभ्रातुः कुशलवृत्तम् । ····यथाऽस्माभिरप्रेक्षितमासीत् तथैव सर्वं परिणतम् । अभिमानधनः, पराजयकलंकमपरामृष्यास्मान् द्रष्टुमनिच्छन्, वत्सः बुधिलप्रदेशमेव गतः । ····अथवा – शृणु सर्वं वृत्तान्तमस्य भद्रमुखस्य यशपालस्य वार्त्ताहरस्य मुखादेव ।"

"यथा विनिवेदितं स्वामिचरणयोः संक्षेपेण", – समाकर्णयत् सा नातिदूर एवोचितस्थलोपविष्टस्य बद्धांजलिपुटस्य तस्य दूतस्य

विनयमंद्रां वाणी पितुः समीपे समुपविष्टा सावधाना, "संदिश्य तथाऽऽज्ञायामुत्तरस्यां धीरगंभीरया गत्या प्रस्थितं राजकुमारं-स्फुलिंगाः पावकमिव, प्रतिशब्दाः शब्दमिव, संमुग्धा संमोहकमिव-निरपवादं निर्विवादं निःसंदेहमनुसरन्तो वयं सर्वे, समुपजातदयेन दैवेन समयात् पूर्वमिव प्रसारितेन ध्वांतवस्त्रेणाऽलक्ष्यप्रायविशेषाः, परिहरन्तः क्षुद्रानपि जानपदान् मार्गान्, समतिक्रामन्तः शून्यशून्यानि निदाघचंड-चंडकिरणोत्तापितानि क्षेत्राणि, अध्यवसायिनः संकल्पेनेवाविचलेन ध्रुवनक्षत्रेणेव तेन समुपदिश्यमानमार्गा, अनवरतं प्रवसन्तः, रथचक्रनेमिक्रमेणोदयाचलं ततो वियन्मध्यमन्ते च पश्चिमाचलशिखरे निपतन्तं सहस्रकिरण यवनविजयसंतापसंतप्तमिव दुःसहमगणयन्तो, विचारमग्नाः, क्षुत्पिपासादिदेहदुःखमवधीरयन्त, अन्ते, बुधिलप्रदेशं प्राविशाम।"

"अस्ति नून स्निग्धानां जनानामिव प्रदेशानामपि कश्चिद्-विशेषः। यतो हि कृतप्रवेशा एव तस्मिन् वयमन्वभवाम शैथिल्यं शरीरस्य विषण्णत्वं मानसस्य कुंठितत्वमात्मनः स्वयमेव लुम्वत्, स्फूर्तिमत्वं सोत्साहत्वं निष्प्रतिरोधशक्तिमत्वं च तत्स्थाने प्रादुर्भवत्। विधूय पराजयग्लानिमन्तःकरणमस्माकं विनष्टलब्धसामर्थ्यमिवाऽऽरभत चिंतयितुं तांस्तान् वैरनिर्यातनोपायान्। प्राक्रमत परित्यज्य पृथ्वीतलमस्माकं दृष्टिर्दृष्टीः स्नेहिजनानां गवेषयितुम्। अनुकूलत्वाच्च नियतेरविन्दत सांत्वनामचिरादेव परित्यज्य विषयान्तराण्यस्मास्वेव कौतूहलात् केंद्रितासु, क्षणमात्रं प्रत्यभिज्ञातुमसमर्थास्विव निर्निमेषासु, प्रत्यभिज्ञायाऽऽश्चर्यातिरेकविस्फारितासु, विलोक्यास्माकं दयनीयां दशां सानुकंपासु, संख्यातीतासु दृष्टिषु प्रदेशसीमावर्तिन्येव ग्राम एकस्मिन् समवेतानां समुपस्थितायां परचक्रापदि कर्तव्याकर्तव्ये विमृशतां प्रमुखानां बुधिलानाम्।"

"आश्यानलोहितधारालोहितसर्वांगान्, प्रवृद्धश्मश्रुजालाऽऽवृतक्षामवदनान्, पांसुलवेषानारक्तलोचनानुच्छुष्कौष्ठपुटान्, समनुभूय तीव्रा वेदनाः लोकान्तरादिव प्रत्यागतान्नः व्यावृत्तमुखमवलोकयत्स्वेव

सर्वेषु श्रोतृषु, तेषामग्रणीः, काकः, सभामंचात् प्रोन्नतात् दृष्ट्वाऽस्मान् क्षणमात्रं विस्मितः, क्षणमात्रं स्तब्धः, झटिति पर्यवस्थाप्येवाऽऽत्मानं, महता संरंभेणाग्रे समुपासरत्। प्रणम्य सविनयमस्मत्स्वामिनं, नं, विनयनम्रः, सभामंचमनयत्। समुपावेशयत् साग्रहम्। सत्कृत्य च तमतिथिसत्कारेण (–समुपावेशितेषु यथायोग्यं सर्वेष्वस्मासु व्यपनीतश्रमेषु–) पृच्छामुखरदृष्टये तस्मै ससंकोचमिव मंद्रेण स्वरेण सभाप्रयोजनं न्यवेदयत्।"

"श्रुत्वैव तस्य तन्निवेदनं, मुखमस्मत्स्वामिनस्त्यक्त्वा स्वजनसमागमसौख्यछटामचिरोदितां, सहसा क्रोधताम्रमभवत्। चक्षुश्च हित्वा क्षणिकं प्रसादं कलुषम्। शपे महाराजाधिराजस्य चरणकमलाभ्यां – साक्षात्कृतो मयाऽसकृत् स्वामिनः क्रोधोद्रेक एभिर्वर्षैः। आशुशुक्षणिरिव स्वभावेनैव दुष्प्रधर्ष्यो हि सः। परंतु – तस्मिन् सायंकाले तस्मिन् सभामंचे समुपविष्टस्य, समादरेणेवाऽऽवृत्य मुखबिलं संकोचेनेव विनियुज्य दृष्टिं स्वामन्यत्र मंद्रेण स्वरेण किंचिन्निवेदयतः काकस्य नैकट्यात् सहसा सतिरस्कारमपसृतोत्तमांगस्य, तस्य यादृशः कोपोद्भवो मया – निर्निमिषलोचनं तमेव ध्यायता – समवलोकितः न तादृशः कदापि ततः पूर्वम्।"

"अनुभूयेव तं काकचतुरः काकोऽपि, सहसा विरतवचनः, परिजिहीर्षुरिव तस्य चपेटां, झटिति ततोऽपससार। संस्मृत्येव च सहसा कार्यान्तरमत्यावश्यकं सभामंचात् ससंभ्रममवतरितुं प्राक्रमत। साफल्यं तु नालभत – बद्ध इव समुद्भिद्येव धरातलमुद्गच्छता, विदीर्येव गगनवितानं प्रवर्धता, दिङ्मंडलादिव निरुच्छ्वासं समापतता, प्रलयघनघटास्तनितगभीरेण, मानसानीव श्रोतृणां प्रज्वलयता स्वामिनो वचसा। मंत्रबद्ध भुजंग इव कुंठितगतिः, किंकर्तव्यविमूढः, समुच्छुष्कमुख, आवृत्य कुंठामाहार्येण स्मितेन कथमपि, व्यावृत्य पदान्यस्थिराणि, स्वामिनोऽभिमुखो यदा तु परिलक्षयांचकार तं सभां संबोधयन्तं तदा पुनरुपजाताऽऽश्वास इव प्रत्यागतप्राण इव तत्रैव

समुपविष्ट आरभत सादरमिव मनोयोगपूर्वकमिव श्रोतुं स्वामिनो मम संबोधनवचः ।"

"क्षणमात्रानन्तरमेवावधानं मम प्रसह्येव समाकृष्यत स्वामिनः स्वरेणाश्रुतपूर्वसदृशेन । मनांसि सर्वेषां जयता भावबलेन, हृदयानि सभासदां समुन्नयता विलक्षणप्रभावेण, बुद्धीर्बुधिलानां स्ववशीकुर्वता तर्कसामर्थ्येन, क्षण एकस्मिन् आवाहनस्वरितेनापरस्मिन् अनुनयमंद्रेण, क्षण एकस्मिन् यवनधिक्कारकर्कशेनापरस्मिन् स्वजनदौर्जन्यकातरेण, क्षण एकस्मिन् समुत्तुंगशिखरनिपतज्जाह्नवीप्रवाहजवनेनापरस्मिन् वेतस्वद्वाहिवाहिनीमंदेन तस्य तेन भाषणेन न केवलोऽहमेव, अपि तु सर्वे तत्रत्या बुधिला मोहिता इव तस्य संबोधनं श्रोतुमारभन्त ।"

"परित्यक्तविषयांतराणि तमेवैकलं, तस्मिन् सभामंचे समुपविष्टं, समुत्तप्तकांचनभासुरमुखप्रभमावेगातिशयप्रज्वलन्नेत्रमावेशातिरेकसमुच्छ्वसद्वक्ष:कपाटं ध्यातुं च लोचनान्यस्माकम् ।"

"यथा यथा च सः, प्रदर्श्य यवनानां तानि तानि दुश्चेष्टितानि भारतभूमौ वाणिज्यार्थं प्रवसतां, प्रकटीकृत्य वास्तविकं रूपमद्यतनस्य यावनस्यारयाचारस्य, स्पष्टीकृत्याऽऽक्रामकाणां प्रच्छन्नं मनोरथं, विविच्य कारणपरंपरां तेषां साफल्यस्याद्यावधिपर्यंतस्य,— सैंधवानां, अथवा भारतीयानां सर्वेषां, कर्तव्यं प्राप्तायां विषमपरिस्थितौ व्याख्यातुं, कर्तव्यपालनाद्विचलितेषु तेष्ववश्यंभाविनीः श्वस्तनाः प्राणांतकारिणीः विपदः प्राक्कथयितुं, समुद्बोधयितुं च स्वबांधवान् स्वकर्तव्यकरणाय प्रावर्तत, तथा तथाऽनिर्वर्णनीयः कोऽपि भावातिशयः संसदं तामावेष्टुमिव समुत्तेजयितुमिव समुत्तंभयितुमिव निरुच्छ्वासयितुमिव प्राक्रमत ।"

"तदभिभूता च सा नाजानात् संबोधनविरतमपि तस्य ।"

"क्षणमात्रं व्यराजत तस्यां – स्पृश्येवाऽऽस्वाद्येव श्राव्येव सांद्रा शांतिः ।"

"व्यलीयत चापरस्मिन्नेव क्षणऽकस्माद्दुद्भवता, कौतूहलादिव गगनांगणे प्रविशन्तं नक्षत्रगणं परिस्पृशता, यवनाभिबुभूषयेव चतुर्दिक् प्रसरता, तुमुलेन जयजयकारेण बुधिलानाम् । उन्नमय्य दक्षिणभुजान् जयमुद्घोषयन्तस्तु ते यदा समवलोकयन् स्वं प्रमुखं काकं सहसा समुत्तिष्ठन्तं, गत्याऽधीरया राजकुमारमुपसर्पन्तं निःसंकोचं च तत्पादयोः प्रणिपतन्तं तदा तेषां स जयघोषो विदारयितुमिव गगनवितानं कंपयितुमिव भूमंडलं खंडयितुमिव दिक्चक्रवालं प्रायतत ।"

"यदा तु संनियम्य महता प्रयासेन स्वजनानामुत्साहातिशयमतिक्रम्य सर्वां मर्यादां उत्प्लवन्तं, स काकः, परिमृज्य नयनाश्रूणि, भावकातरेण स्वरेण प्रतिज्ञातुमामरणं यवनप्रतिरोधमुपाक्रमत तदाऽवततार तस्यां निशामुखतिमिरदुर्लक्ष्यविशेषायां जनसभायां प्रस्फुरदुत्साहमराऽपि विपद्बोधगंभीरा निःशब्दाऽपि मुखराऽन्यविधैव शांतिः ।"

"प्रबलं खलु बलं सत्संकल्पस्य ।"

"शृण्वतामेव ह्यस्माकं सर्वेषां सामान्यजनानां, बुधिलप्रमुखाः सर्वे ऐकमत्येन राजकुमारमेव यवनप्रतिरोधयोजनायाः परिकल्पनेऽधिचक्रुः ।.... जग्मुश्च स्वं स्वं ग्रामं प्रोद्बोधयितुं स्वान् बांधवान् महरमात्रक्षीणायां तस्यां तमस्विन्याम् ।"

"सभामंचादवतीर्य, सादरं पुरः सरता काकेनोपदिश्यमानं प्रज्वलद्दीपदंडप्रकाश्यमानं मार्गमनुसृत्य नातिदूरवर्तिनं स्थलदुर्गनिभं निलयं कंचित् समुद्दिश्य विशिश्रमिषया पदानि नातिधीराणि क्षिपन्तं श्रांतं क्लांतं राजकुमारमवलोक्यान्यान्यैः सेवकैः सह तमनुगन्तुं प्रवृत्तः

सिंधुमत उपदुर्गपालो मां रहसि मंद्रस्वरमवोचत् – 'भद्रमुख ! एवं स्वामिना समुद्बोधिताः स्वभावत एव राजभक्ता एते बुधिला आ मरणं यवनसेनासागरं प्रतिरोत्स्यन्तीत्यत्र न संशयः। काकोऽपि तान् न ततो व्यपवर्तयितुं प्रभविष्यति । स्वभावभीरोस्तस्य न तावत् सामर्थ्यम्। तत्त्वं गृहीत्वा कंचित् प्रभंजनरयं हयमितः सद्य एव प्रतिष्ठस्व। गत्वा च राजधानीं राजाधिराजाय कुशलं स्वामिनः निवेदय। पुत्रादपि प्रियतरस्य तस्य, तथा संदिश्य सिंधुदुर्गादपसृतस्य, समाचारं कमप्यलब्ध्वा नूनं स अतीव चिंतितः स्यात् । लब्ध्वाऽत्रत्यमुदन्तं भर्ता यदुचितं तत् करिष्यत्येव। तत् प्रतिष्ठस्वस्मिन्नेव क्षण' – इति।"

"स्वामिसांनिध्यात् क्षणमात्रमपि दूरीभवितुमनुत्सुकोऽप्यहं, समनुभूय कार्यगौरवं, नियोगं तमवधीरयितुमसमर्थः, निपीय क्षणमात्रमनिमेषाभ्यां लोचनाभ्यां मूर्तिं स्वामिनः पराङ्-मुखीं निलये तस्मिन् महाद्वारेणापावृतेन प्रविशन्तीं दीपप्रभोद्भासितप्रोन्नतचिकुरिलमस्तकां, गृहीत्वाऽश्वशालायास्तत्रस्यायास्तुरंगममेकं ततः प्राचलम्। अतिक्रम्य च दीर्घमपि तामिस्रदुर्लक्ष्यविशेषमपि नितांतमपरिचितमपि मार्गं – महाराजाधिराजस्य सेवायामुपस्थितोऽस्मि।"

"समुपस्थितश्चिरप्रतीक्षितोऽवसरः पापानां पराजयस्य", – सोत्साहमवदत् सिंधुराजः। "राजभक्तानां वीराणां बुधिलानां साहाय्येनाऽऽयुष्मता प्रतिरुद्धा, युद्धे च व्यापारितास्ते गोभक्षकास्तरणीभिरसंख्याभिः सिंधोः पाश्चात्यं तीरं प्रापितयाऽस्मत्सेनयाऽऽक्रांतपार्ष्णयः, समरमुखयोर्युगपत् तृणपीडं योद्धुमपारयन्तः, कतिपयेष्वेव प्रहरेषु, विकरालकालदंष्ट्राचर्वणीयतां नूनमासादयेयुः।"

"अप्रयुक्तपूर्वा खल्वियं प्रत्याक्रमणयोजना। निश्चितसाफल्या च। तन्महाबलाधिकृत ! प्रतिष्ठतां भवान् श्व एव ब्राह्मे मुहूर्ते इतो गृहीत्वा पृतनाः कावचिकानां शाक्तीकानां नैस्त्रिंशिकानां

कृतहस्तानां च धानुष्काणाम् । उपसर्पतु भवान् – अनवरतमाक्रम्य पंथानं सिंधोः पौरस्त्यं तीरम् । गूढं यापयित्वा च दिनावशेषं तत्रत्ये विपिने निबिडे समवतीर्णे मूर्तिमति दौर्भाग्य इव म्लेच्छानामाततायिनां नैशेऽधकारे, नौसेनाध्यक्षेणास्माकं निःशब्दमुपस्थापिताभिरसंख्याभिः नौकाभिस्तीर्त्वा नदीप्रवाहं, मातृहृदयमिवाऽऽशंकितं निःस्पंदं, पुरःसृत्योदीच्येन गहनवृक्षराजिसमाच्छन्नेनोपतीरेण पथा, यवनान्, अदत्त्वैव तेभ्यः क्षणिकमपि पूर्वाभासं, पार्ष्णौ विद्युद्वेगेनाभ्यासादयतु । दृष्ट्वाऽऽकस्मिकं संद्रावं यवनसैनिकेष्वनुमाय भवदभ्यवस्कंदनं चतुरो वज्रबाहुः शतगुणित-वेगमाक्रामेत् यवनान्, निरपवादमुज्जासनं च लंभयेदित्यत्र न संदेहलवः । वयमपि, श्व एव, प्रहरमात्रशेषेऽहनि, मांगलिके मुहूर्ते, कृतप्रस्थाना इतः, भवतां साहाय्यार्थं तत्रोपस्थास्याम एवापरेद्युः ।"

"यदि नाम, भर्ता, भद्रमुखस्यैवास्य माध्यमेन व्यूहमस्माकं प्रत्याक्रमणप्रवृत्ताय राजकुमाराय निवेदयेत्तर्हि – किं तस्योत्साहः सहस्रगुणितः न स्यात् ?" — मंद्रस्वरमपृच्छन्महाबलाधिकृतः ।

"यदि नाम भवान् एवं मन्यते ···· तर्हि ···· " प्रारभत सिंधुराजः ।

"अनापृच्छ्य तं····एवं····तातसेवायामुपदुर्गपालेन . प्रेषितं वार्ताहरं विज्ञाय····सः संक्रुध्येन्नूनम्–" आक्षिपत्तद्दुहिता, विजानती भ्रातुरात्मनोऽभिमानधनं स्वभावम् ।

"तर्हि···स उपदुर्गपाल एव संसूचनीयोऽस्मद्व्यूहविषये । आदित एव संसूचितः राजकुमारस्तस्य सुहृद्वा यथाऽऽक्रमणस्य – समुपस्थिते योग्ये क्षणे – शातने समर्थः स्यान्न तथा नितांतमनभिज्ञः" – प्राह धीसचिवः ।

"बाढम् ! ····तर्हि वयं सिंधुमद्दुर्गस्योपपालमेव सूचयिष्यामः भद्रमुख ! त्वं····कुत्र न खलु गतः सः ?" – अनुपलभ्य मंत्रणाकक्षे तं संदेशहरं विस्मितोऽपृच्छद्राजा दाहरः ।

"नूनं विनिवेद्य संदेशं कृतकृत्यमात्मानं विभावयन् विश्रामार्थमितो गतो भवेत्"—अतर्कयत् सांधिविग्रहिकः।

"विनैवानुज्ञामस्माकम् ?" – अगदत् सक्रोधं सिंधुनरेशः।

यदा तु सः, निक्षिप्याऽऽरक्तां दृष्टिं मूकेष्वधोमुखेषु मंत्रिषु, समाहूय तारस्वरेण प्रधानं दौवारिकं, तमुद्धतं वार्त्ताहरं तस्मिन्नेव क्षणे तत्समक्षमुपस्थापयितुमादिशत्, व्यजानाच्च तस्मात् यत् सः''''विनिवेद्य संदेशं, समवलोक्य भर्तारं सैनिकमंत्रणाव्यापृतं, कक्षान्निर्गतं, आरुह्याऽऽत्मनोऽश्वं प्रस्वेदक्लिन्नांगं फेनिलमुखं विस्फारिताक्षं – अकृतविश्राम एव – उपोषित एव – प्रासादान्निर्गतः, पौरस्त्यनगरद्वारयायिना राजमार्गेण प्रस्थितस्तेनावलोकित इति, – तदा विस्मितः क्षणमात्रं मौनमभजत।

"नूनमनुष्ठाय नियोगं''''लघूभूतभारः''''स्वामिनो वियोगमधिकतरं सोढुमसमर्थो वुधिलप्रदेशाय प्रस्थितः" – तर्कयामास धीसचिवः।

"यदि समाज्ञापयति भर्ता''''अहं''''संप्रेष्य प्रभंजनवेगानश्वसादिनः''''तं''''" आरभत महाबलाधिकृतः।

"गच्छतु स्वामिसमीपं"—सहसाऽगदद्राजदारिका। "भावाकुलितस्वांतः''''अतिक्रांतसमुदाचारोऽपि''''क्षन्तव्यस्तातेन।"

"भवतु नाम।''''तन्महाबलाधिकृत ! भवान् श्वो, ब्राह्म एव मुहूर्ते, प्रतिष्ठतामितः। अमात्यवरेण्य ! भवानपि श्वस्त्यस्यास्माकमभिनिर्याणस्य संनाहं कुरुताम्।"

वदंश्चैवमुदतिष्ठद्राजा, स्मारितः सहसा समयातीतस्य सायंसंध्यावंदनस्य निःस्वनेन तीक्ष्णमधुरेण नैशप्रथमप्रहरावसानसंसूचकेन तूर्याणां श्रुतिपथमुपगतेन।

तमनु सर्वेऽमात्याः आपृच्छ्य च तं स्वस्वकर्तव्यकरणाय ततोऽपासरन् व्यग्रचित्ताः ।

राजदारिका तु – विश्रामकक्षं स्वं प्रतिनिवृत्ता – अनादृत्य रात्रिभोजननिमंत्रणं पुरुषप्रमाणेऽपावृतकपाटे वातायने समुपविष्टा, विमनस्कया दृष्ट्या बहिर्लोकमाना, समाकर्ण्याऽपि भद्रमुखात् भद्रं तं समाचारमनाश्वस्तचित्ता, विश्वसत्यपि तस्य प्रामाणिकत्वे तस्य शुभे परिणामे संदिहाना, सुपरिचिताऽपि भ्रातुः निरपवादया लोकप्रियतया काकस्य काकचतुरस्य साहाय्यविषये साशंका, प्रयत्याऽपि साफल्यं नाप समाधातुं चेतः चिरा संकल्पितस्य प्रत्याक्रमणव्यूहस्य विचारणे ।

अवशेव च वारं वारमैच्छत् भ्रातरं – अगत्वा वुचिलप्रदेशं राजधानीमेव शिबिदुर्गात् प्रत्यागतम् ।

शनैः शनैः, सहाऽमया जरितुमारभत तस्या धृतिः, सहांधता-मिश्रेण चराचरव्यापिना वर्द्धितुं तस्या वैक्लव्यं, सह नैशदीपप्रभया मांद्यं भोक्तुं तस्या जिगीषा च ।

सहसा च साऽविन्दताऽऽत्मानम् .... अमात्वाऽन्तःकरण उद्वेलेन घनेन नैराश्येनेव प्रगाढेनांधकारेणाऽऽवृतम् ।

'कथं नाम सत्यपि पर्याप्ते स्नेहे सहसा निर्वाणं प्राप्तोऽयं नैशदीप ?' इति विस्मयमाना सविषादं यावदवतीर्य वातायनासनात् पदान्यस्थिराणि क्षिपति विस्फारितलोचना कक्षद्वारं पिहितकपाटं समुद्दिश्य, तावदनपेक्षितं शुश्राव मंद्रमपि सर्वतः प्रसृतायां शांत्यां तारमिव भासमानं कपाटोद्घाटनध्वनिम् । ददर्श समुद्घाटिताद्-द्वाराद्बहिरेव देहल्यां मूर्तिवदवस्थितं पार्श्ववर्तिनैशदीपप्रभोद्भासित-चिकुरकलापं व्याकुलया दृष्ट्याऽनिमिषया कक्षान्तस्तामेव गवेषमाणं, सुदर्शनं, भ्रातुर्वज्रबाहोरात्मजं पंचवर्षीयम् । उपससार सहसा तं प्रनष्टोपलब्धावष्टंभेव समुच्छ्वसितहृदया । धृत्वा च तं स्कंधे .... प्रतिनिवृत्ता कक्षे दीपं नैशं पुनः प्रज्वालयामास ।

शनैः शनैः प्रसरन्त्यां निश्चेतनायामिव निष्प्रभायां दीपप्रभायां निर्ध्याय वदनं बालकस्येपद्वलितभालप्रदेशमुच्छ्वसन्नासापुटं निर्निमेषाभ्यामारक्ताभ्यां लोचनाभ्यां तामेव ध्यायत् विदितवेद्या, वक्षसि धृत्वा पर्यंकमनयत्, शाययित्वा च तं कमलदलकोमलेऽङ्के चतुर्थीचंद्रकलानिभमुत्तप्त तस्य ललाटं मंदं मंदं परामृशन्ती नवकिसलयमृदुलेन करतलेन····तं स्वापयितुमचेष्टत ।

शनैः शनैः कुमारः, मातुरंकादपि सविशेषे पितृस्वसुरुत्संगेऽभयमिव लंभितः नियत्या दयार्द्रहृदयया सर्वेभ्यः संकटेभ्यो, मुद्रितक्लांतनयनः, निद्राया अधीनो बभूव । प्राप च त्राणं प्राणानिवोपमर्दयन्त्याः, हृदयमिव निष्पीडयन्त्या, अनामिकायाः दुश्चितायाः ।

न तु तस्य पितृस्वसा ।

प्रत्युत – यथा यथा सा मंददीपप्रभालोकितमंकविश्रब्धं मीलितनयनं– दलनिलीनमधुपद्वयमिव कमलं–वदनं तस्य कुमारस्याऽऽरभत ध्यातुं श्रांताभ्यामपि विनिद्राभ्यामीपज्ज्वलद्भ्यां नेत्राभ्यां··· तथा तथाऽवर्द्धत एव तस्या अवसादः ।

स्मारिता चाधिकतरमेव भ्रातुर्वज्रबाहोः, एकाकिन एव प्राणपणेन प्रयतमानस्य परचक्रसंकटं निवारयितुं, निमीलितश्रांतनयनेंदीवरा, सहसा ददर्श इव – तं प्रज्वलदलातज्योतिरुद्भास्यमानं, प्रवहद्रुधिरक्लिन्नमलिनपरिधानं, कृत्तदक्षिणभुजं, वामेन भुजेनैव पंचपैर्यवनसैनिकैः सह युध्यमानमेकलं, सहसा पृष्ठत उपसृतेन कालकुटिलेन श्मश्रुलमुखेन म्लेच्छेन केनचिन्मस्तके विलुलितशिरोरुहे खड्गेन कृतांतहसितभीषणेन प्रहण्यमानं, कृत्तमस्तकं, क्षणमेकं दोलायमानं, निश्चेतनं चाऽन्ते भूमौ निपतन्तम् ।

विद्युत्स्पृष्टा इव च तत्क्षणं प्रबुद्धा, निःस्पंदहृदयाऽशृणोत् तत्क्षणमेव सहसोदितं, विदीर्य, तमःपटलं सांद्रं सर्वतःप्रसृतं, करुणभीषणं, शून्याः कस्याश्चित् अन्तःपुरारामे प्रविष्टायाः रोदनध्वनिम् ।

विदन्तर्विहसितविरावमिव च पैशाचिकं कस्याश्चिज्जरत्या दुष्टायाः।

मूर्च्छिता च तत्क्षणं, अक्षमा दीर्घतरं वोढुं भारं दुःखस्य, नावेत् – युगकल्पायास्तस्याः कालरात्रेरवसानं, ब्राह्मे मुहूर्ते बुधिल-प्रदेशं समुद्दिश्य कटकात् प्रचलितायाः सेनायाः नेतृत्वं कुर्वाणस्य महाबलाधिकृतस्य लब्ध्वा भर्तुरनुज्ञां राजप्रासादान्निर्गमनं, लंभयितुमिव तां संज्ञां मंदं मंदं वहतः नातिशीतलस्य शुद्धान्तक्रीडासरोज-सरोजसंसर्गसुरभितस्य समीरणस्य संसर्गं, दशां सूर्यकुमार्या द्रष्टुमनिच्छुकस्यापि नियतिनिर्दिष्टं कर्तव्यमवहेलयितुमपारयत इव भगवतः सूर्यस्य पूर्वाचलाधिरोहणं, सांत्वयितुमिव तां राजगृहदेव-तायतनात् शनैः शनैः समुपसर्पतः जगदीशमाहात्म्यस्तवनस्य मंद्रमधुरं ध्वनिं, सहसा प्रबुद्धस्यावलोक्य तां मुद्रितनयनां तन्निद्राभंग-परिजिहीर्षया निःशब्दं तदंकात् समुत्थितस्य कुमारस्य कक्षान्निर्गमनं, सुखशयनपृच्छार्थमागताया अवलोक्य तामनुत्थितां किंचिद्विस्मिताया अपि तद्विश्रांतिसुखं भंक्तुमपारयन्त्याः प्रियसख्याः कक्षद्वारादेवाप-सर्पणं, दुःखभारजडस्येव विषमाश्वस्य, चिरात् गगनमध्य आरोहणं, अनवेक्ष्य यथाभ्यासं प्रातःपूजाकाले प्रियां दुहितरं दुर्मनायमानस्य, समधिगत्य नितांतमनपेक्षितां दुर्वार्त्तां महाबलाधिकृतसंप्रेषितदूतमुखात् चिताग्रस्तस्य महाराजस्य च तद्विश्रामकक्ष आगमनम्।

लंभिता च संज्ञां धर्मबिंदुसंश्लिष्टविलुलितालके प्रोन्मृष्ट-कुंकुमतिलकारवते विरलाभ्ररेखांकितस्य सांध्यरागरंजितस्य शशांकखंडस्य शोभाया अपहारके ललाटे सस्नेहं परिस्पृशता, चैतन्यमिव स्वं संक्रमयता करतलेन स्नेहमृदुलेनाऽपि खड्गमुष्टि-व्रणखरेण पितुः, समुन्मीलितनयनेंदीवरा, क्षणमात्रं निर्द्धारयितुं स्थलकालव्यवहितविशेषमक्षमा, समवलोक्य जनकस्यातिपरिचित-मप्यन्यदिव भासमानं, वलितं, चिताम्लानं, क्लांतलोचनं, निःश्रीक-माननं धवलतरशिरोरुहं सहसा मोहसागरादुन्मग्ना, हठात् समुत्थिता

शयनात्, तत्क्षणमेव कृतनिश्चयाऽपह्नोतुं रात्रिवृत्तांतमाहार्यस्मित-मधुरवदनकमलाऽऽत्मानं प्रमादादतिनिद्रितं प्रकटयामास ।

पप्रच्छ च महाबलाधिकृतस्याऽभिप्रयाणस्य विषये समुत्सुकेव प्रश्नम् ।

"तद्विषय एव, वत्से !, त्वया सह मंत्रयितुमागतोऽस्मि"– प्रत्युवाच तत्पिता श्रांतेन स्वरेण ।

"सद्य एवेहाऽऽगतात् तस्य दूतात् ज्ञातं मया यद्यथाऽऽदेशमद्य प्रातः सोत्साहमितः प्रस्थितस्य यथासमयं सिंधुतीरं प्राप्तस्य वीरभद्रस्य प्रगतिः स्वप्नेऽप्यकल्पितेन प्रत्यवायेनैकेनावरुद्धेति ।"

"कीदृशेन नाम ?" अपृच्छत् तद्दुहिता ।

"संकल्पितमासीदतीत एवाहनि यदस्माकं पृतना, समुपसृत्य सिंधोः पौरस्त्यं तीरं, यापयित्वा दिनावशेषं तत्रत्ये निबिडे विपिने, तीर्त्वा सरित्पात्रमवतीर्णे प्रगाढेऽधकारेऽस्माकं नौसेनाध्यक्षेण मूकेन गूढं समुपस्थापिताभिरसंख्याभिः नौकाभिः, पुरःसृत्योदीच्येनोपतीरेण पथा, रिपुबलं सहसा पार्ष्णौ अभ्यासादयिष्यति – इति ।"

"यथासंकल्पमस्माकं सेना पौरस्त्यं तीरं सिंधोः यदा प्राप तदा गूढं स्थापयित्वा तामुपकूलेऽरण्ये वीरभद्रः प्रेषयामास गूढान् पुरुषान् बोधयितुं नौसेनाध्यक्षमपेक्षितस्य साहाय्यस्य विषये । विस्मितश्च विज्ञाय तेभ्यः प्रत्यागतेभ्यः नद्यास्तीरवर्तिनं नौसेनाकटकं शून्यशून्यं, स्वयं जगाम तदध्यक्षस्य निवासं तं साक्षात्कर्तुम् । समुपलभ्य तमपि निर्मनुष्यं चकितचकितः परीक्षयामास नदीपात्रमनेकयोजनपर्यन्तं गगनचुंबीनि शिखराणि महावृक्षाणामारूढैस्तीक्ष्णदृग्भिः स्वैः सैनिकैः । विज्ञाय च तेभ्यस्तन्मृतमिव निःस्तब्धं, शप्तमिव निरुद्धं, सविषमिव निर्जीवं नानाविधदुःशंकाकुलः, किंकर्तव्यविमूढः, प्रार्थयितुं निर्देशं दूतं तमिह प्राहिणोत् ।"

"तत् – किमिव कर्तुमुचितं स्यात्···· समुपस्थितेऽस्मिन् प्रत्यवाये ?···· विना नौसाहाय्येन दुस्तरा सा तटिनी। ····विना चास्मत्सेनासाहाय्येन दुर्जेया वत्सस्य कृते सा रिपुवाहिनी।···· अपि च – कुत्र नु गता भवेदस्माकं नौसेना···· प्रदेशेषूपतीरेषु दावानलमिव वेगेन प्रसरच्छत्रुबलं समुपेक्ष्य ?···· कथं नु मन्यते वत्सा ?"

"मन्ये – सिंधुसागरादन्तः प्रवेष्टुं समीहमानाया यवन-नौसेनायाः प्रतिरोधायास्माकं नौसेनाध्यक्षेण स्वं बलं सिंधुसरिन्मुख-मुद्दिश्य संप्रेषितं भवेत्"– प्रत्यवदत् राजदारिका, दुराशंकाकुलाऽपि श्रुत्वा पितुर्वृत्तांतं, समयह्नुवाना स्वां प्रतिक्रियाम्।

"मूकसदृशश्चतुरः सेनानीः समग्रमेव बलमेकस्मिन्नेव कर्मणि व्यापारयेत्– इत्येतत् ममासंभवमिव प्रतिभाति"– प्रत्यवदन्नरेशः।

"अनुपलभ्येऽप्युत्तारसाधने महाबलाधिकृतः नैस्त्रिंशिकान् प्रासिकान् वाऽस्मत्सैनिकान् निबिडस्य ध्वांतस्याऽऽवरणे सिंधुप्रवाहं तरितुं किमिति नाऽऽदिदेश····? तावांस्तु प्रत्युत्पन्नमतिः सः····" अपृच्छत् राजकन्या।

"अहो! विस्मृतं मया"– सहसाऽगदद्राजा। "अतीते सायंकालेऽनुपलभ्योत्तारसाधनं चिताग्रस्ते वीरभद्रे स्वात्मनैव किंचिद्-विचारयति सति केचन कौंतिका अस्माकं, युद्धोत्साहातिशयवशाद-नपेक्ष्यैव तस्यानुज्ञां, तरितुं नाम सरितं स्वात्मनैव तज्जलप्रवाहेऽवातरन्। तस्मिन्नेव क्षणे केचन निशिताः शराः, कृतांतकटाक्षा इव, परतीरप्रदेशान्निक्षिप्ताः, तानभितोऽवर्षन्। न्यवर्तयंश्च तान् दैवस्यानुकूल्यात् अक्षतान् तत्क्षणमेव सावधानान्।"

"अहो! अत्याहितम्! ····एतत्तु स्पष्टमेव ध्वनति यत् समग्रमेव परतीरं सिंधोः न केवलं रिपुणा पादाक्रांतमपि त्वस्मदा-क्रमणप्रतिरोधाय सज्जितमपि– इति"– प्रतिपादयत्कर्तृदेवपदवी।

"जयतु, जयतु देवः ! ····देव ! महाबलाधिकृतेन संप्रेषितोऽश्वारोह एकः, केनचित् पुरुषेण सह महाद्वारे समुपस्थितो, भवद्दर्शनं कांक्षते"– सहसा प्रविश्याऽऽह दौवारिकः ।

सिंधुराजस्तु– समधिगत्येमां वार्त्तामीषद्विस्मितः, किंचिद्विचार्याऽऽत्मनैव, समादिशत्तं तत्क्षणमेव समुपस्थापयितुम् । अपश्यदेकं परिश्रांतं क्षामवदनं क्लिन्नशुष्कपरिधानमकालवृद्धं सैनिकं कक्षान्तःप्रवेश्यमानम् । प्रवृत्त एव चादेष्टुं तं संदेशकथनाय– अद्राक्षीत्तं निःसारमिव निःसहायमिव निश्चेतनमिव भूमौ निपतन्तम् । अश्रृणोच्च पुरः सत्वरं प्रधावितेन दौवारिकेण जलसिंचनादिना पुनर्लभितं संज्ञां, प्रयत्नेन च महता समुपवेशितमाबद्धकंपमानांजलिपुटमारक्तारक्तया विभ्रांतयेवोद्भ्रान्ततारकया दृशा एकदा तमन्यदा राजदारिकां पश्यन्तं, मंद्रघर्घरं चैवं वदन्तं....

"दष्टः कालसर्पेण···· मम स्वामी····! भर्तः····! दष्टः" इति ।

श्रुत्वैव तां वार्त्तामशनिपातनिभां चित्तं नराधिपस्य, आदित एव चिंताभ्रमलिनं, कालुष्यमात्यंतिकमध्यगच्छत् ।

निक्षिप्य क्षणमेकं दृष्टिं स्वदुहितरि, समवलोक्य च तामपेक्षितदुर्वार्त्तामिवाचकितां, शून्यशून्यया दृष्ट्या भूमौ अवलोकमानां, सहसाऽसाहाय्यमिवाऽऽत्मानमनुभवन्, शुष्केण स्वरेण तं सर्वं स्ववृत्तांतं सविस्तरं निवेदयितुमादिदेश ।

"सभास्थलात् परावृत्तो मम स्वामी, प्रविश्य तस्य पापस्य काकस्य निलयं स्थलदुर्गसंनिभमनभिज्ञस्तस्य दुर्जनस्योभयलोकविरुद्धस्य संकल्पस्य, श्रद्धान-स्तस्य वचने, समपनेतुमध्वपरिश्रमं यदा तत्प्रदर्शिते विश्रामकक्षे सर्वविधसुखसुविधोपपन्ने पदं न्यधात् तदा न केनाऽप्युत्प्रेक्षितमासीद्यत् स कक्षात्तस्मान्न पुनर्निर्गमिष्यतीति ।···· परंतु– यत्किंचित्कारिणी नूनं नियतिः । यतो हि– कमलदलकोमले विविधसुमनोवासिते

सुधाधवलप्रच्छादने तत्रत्ये पर्यंके यथैव सः स्वांगानि वेदनया विशीर्यमाणानीव भज्यमानानीव गल्यमानानीवाक्षिपत्, नयने च स्वे समुत्तप्ते श्रांत आरक्ते न्यमीलयत्– तथैव– न जाने कियतः कालात् प्रभृति तस्य वपुषि कृतनिभृतनिवासो–दृढबद्धमूलः प्रत्यहमधिकाधिकं प्रवर्द्धमानः ज्वरः सहसा प्रकोपमात्यंतिकमलभत । उन्मत्तमिव मानसं तस्य भ्रमितुमारभत । वाक् चासंबद्धं प्रलपितुं"– प्रारभत सः दूतः ।

"दुर्गपतिस्तु काको यदा वार्तामिमां स्वसेवकमुखारविंदाद-लभत तदा व्यग्र इव परित्यज्य कार्यान्तराणि, सह शिविदुर्गस्योप-दुर्गपालेन, ससंभ्रमं स्वामिनो मम पर्यंकमुपासरद् । अवलोक्य तस्य, जलनिष्कासितस्य मीनस्येव, तापातिशयवशात् शयनेऽतिवल्गतोऽवस्थां व्याकुल इव तत्क्षणं वैद्यं स्वविश्वासास्पदमाह्वयत । आदिदेश च तं रुग्णं प्रकृतिं स्वामतिशीघ्रमापादयितुम् ।"

"प्रहरमात्रानंतरमेव स्वामिनः स संतापः न्यूनतामभजत । तमनु च स भ्रमः, सः प्रलापः । ओषधिप्रभावेणेव स वश्यतामति-प्रगाढायाः निद्राया अगच्छत् ।"

"नावेच्च – चक्रनेमिक्रमेण क्षयमुपयान्तीं तां रजनीं, समवतीर्णां वर्द्धमानामुषःप्रभां, पूर्वाचलं ततश्च गगनमध्यमारोहन्तं दिनमणिं, तज्जीवितावसानदिदृक्षया तीव्रया सत्वरमुपसर्पन्तीमिव तमीं, कृतांतदूतमिवाकस्मादुपस्थितं मंत्रणाकक्षे गूढचरमेकं, तत्र ससंभ्रममेकत्रभूतेभ्यो बुधिलप्रमुखेभ्योऽवलोक्य स्वामिनं पूर्ववदेव निर्घोषं सचितेभ्यो यवनसेनाऽऽगमनवार्तां निवेदयन्तं त्वरातुरेण स्वरेण, निरीक्ष्य सर्वान् समुपस्थितान् विस्मयमूढान् मूकान् सहसा पुरःसृत्य यवनसेनाप्रतिरोधनेतृत्वसंकल्पं दृढस्वरेणोद्घोषयन्तं काकं, साशंकमप्युपायान्तराभावात् समाश्रित्य मौनं संकल्पं तदीयमनुमोदमानं स्वं परमविश्वासार्हं सुहृदं शिविदुर्गोपपालम्, उत्साहेनादृष्टपूर्वेणाभि-प्रयाणसंनाहे प्रवृत्तं विविधाश्वासनमुखरमतिप्रगल्भायमानं बुधिल-प्रमुखप्रमुखं, मूर्तं सिंधुराज्यदुर्भाग्यमिव दिवोऽवतरद् अविच्छिन्नधारं

पर्यन्तमिव सिंधुराज्यभाग्यश्रियः शोकाश्रुप्रवाहं सर्वतः प्रसरत् कज्जलाभं नैशं ध्वांतं, समनुपलभ्य राजपुत्रमग्रेसरं मंदीभूतोत्साहं नीरवं प्रस्थितं बुधिलसैन्यम् ।"

"मां च, सिंधुमत उपदुर्गपालेन स्वयं रहसि समादिष्टं ततः प्रयाणात् प्राक्, समुपेक्ष्य काकस्याऽऽज्ञां केनचिन्निमित्तेन तस्मिन्नेव कक्षे मंदतरदीपप्रकाशिताभ्यंतरे निवाते तत्पर्यंकसमीपेऽवस्थाय तज्जागरणं प्रतीक्षमाणं, कथमपि कालमतिवाहयन्तम् ।"

"यथा तथा – भर्तः । — जरितुमारभत सा तमी तथा तथाऽधिकतर एव मंदोऽभवत् कक्षदीपप्रकाशः····अधिकतर एव निर्वातः····उष्णश्च स कक्षः ।"

"आकस्मिकेनानिर्वर्णनीयेनानामकेन भयेन दुष्प्रसहेण समाक्रांतो, विलुप्तविवेको, – मृष्यतु भर्ता, – परित्यज्य स्वामिनं शनैः शनैः जाग्रतं, समुपेक्ष्य मां समीपतरवर्तिनं किंचिदुन्मीलितया विस्मयजडयाऽऽरक्तया मंत्रमोहितयेव दृशा कक्षकोणेऽवशमिव कमप्यवलोकमानं तथैवैकाकिनं, बहिर्निरगच्छम् – अन्वेष्टुं कंचित् सहचरम् ।"

"विस्मितश्चानुपलभ्य एकमपि सैनिकं परिचारकं वा विशालेषु मंदप्रकाशेषु समपेक्षमाणेष्विव कांचिद्दुष्टां घटनां निःस्तब्धेषु कक्षांतरेषु, बहिर्निर्गत्य, समारुह्याट्टालकं, यावन्नाति-दूरावस्थितायाः अंधकाराऽऽच्छन्नायाः निर्जीवाया इव ग्रामटिकाया दिशि दृष्टिं विस्फारितां भयातुरां क्षिपामि – तावदश्रृणवं निभृतमुपसर्प्तुं प्रयतमानानामपि स्थाने एकस्मिननपेक्षिते सहसा प्रस्खलितानां केषांचिदुपानद्ध्वनिं प्रासादाभ्यन्तर एव ।"

"यावच्च तान् पादचारिणो दुर्गसेवकान् मत्वा समाश्वस्त-स्तद्दिशि पदान्यातुराणि क्षिपामि, तावत् तदन्यतमस्य – शिरसि

केनचित् प्रलंबेन दीपभांडेन ज्योतिर्विहीनेन तमोनिगीर्णतया दुर्लक्ष्येणाऽऽहतस्य – पीडाविह्वलमपशब्दम् ।"

"श्रुत्वैव तं, सहसा, जडतामभजत मम शरीरं, निःस्पंदतां मम हृदयं, निर्निमेषतां च दृक् ।"

"स हि केनचिद्यवनेन प्रोच्चारित आसीत् ।"

"श्रुत्वैव तं, – भीषणतां संकटस्य क्षणार्द्धं ममाधन्यस्य मंदा मतिः समूलग्राहं जग्राह । नुनोद च मां धावितुं निःशब्दं स्वामिनः शय्याकक्षं समुद्दिश्य ।"

"वैपरीत्याद्वा दैवस्य, तिमिराच्छन्नत्वाद्वा परिसरस्य, नवीनत्वाद्वा स्थानस्य, व्याकुलितत्वाद्वा चित्तस्य – न जाने कस्मात् कारणात् – कक्षनिवर्तनमार्गमेव व्यस्मरम् । अविंदं च कक्षमभीप्टं – युगानीव व्यतीत्य कष्टमयानीतस्ततोऽन्ध इव मोहित इव उन्मत्त इवान्वेषणे मार्गस्य ।"

"प्रविविक्षुरेवान्तः सहसाऽपश्यं पुरः कक्षे स्वामिनं – पर्यंकादुत्थितं प्रज्वलदलातज्योतिरुद्भास्यमानं-प्रवहद्रुधिरक्लिन्नमलि-नपरिधानं-(सावेगं) कृत्तदक्षिणभुजं वामेनैव भुजेन पंचपैर्यवनसैनिकैः सह युद्ध्यमानं – एकाकिनं – (सक्रोधं) सहसा पृष्ठत उपसृतेन कालकुटिलेन श्मश्रुलमुखेन म्लेच्छेन केनचिन्मस्तके विलुलितशिरोरुहे खड्गेन कृतांतहसितभीषणेन प्रहण्यमानं – (सविषादं) कृत्तमस्तकं – क्षणमेकं दोलायमानं – निश्चेतनं च – अन्ते भूमौ निपतन्तम् ।"

"भीषणेन तेन दृश्येन क्षणमात्रमवसन्नगात्रः, किंकर्तव्यविमूढः, कृत्यमेतद्बुधिलप्रमुखाय कथमपि निवेदनीयमेव ।.... स खलु....स खलु किमपि प्रतिविधास्यतीति दुराशया कदर्थ्यमानोऽपगतेषु बुधिल-सैन्येषु निशीथिन्यां तस्यां स्थलदुर्गे तस्मिन् निष्प्रतिरोधः प्रवेशो

यवनसैनिकानां यत् खलु व्यानक् तत् स्वतःस्पष्टमपि सत्यमाकलयितु-मसमर्थस्ततः निभृतमपसृतः, निबिडत्वाद्वा तमस, आकुलाकुलत्वाद्वा दुर्गान्तःपरिसरस्य संततमन्तःप्रविशद्भिरसंख्येयैर्यवनसैनिकैर्विजयो-न्मादद्ुःसहैः, अवशिष्टत्वाद्वा जीवनहतकस्यास्य, कथमपि तस्माद्दुर्गा-न्निष्क्रांतः, सूचिभेद्ये तस्मिन् तमसि गृहीत्वा बुधिलसेनाभिनिर्याणदिशां – अभिनिविष्टस्तयैव दुराशयाऽधावम् ।"

"व्यरमं च सहसा – समतिक्रम्य न जाने कियन्तमध्वानं – दृष्ट्वा पुरतः नातिविस्तीर्णे प्रस्फुटत्प्राभातिकप्रभाप्रोद्भासितविशेषे समभूमिके निर्वृक्षे प्रदेशे कस्मिंश्चित् एकत्रभूतं, भूमावनतमुखमु-पविष्टं, महान्तमपि निःशब्दं, संन्यस्तशस्त्रं, सैनिकानां संदोहम् ।"

"गुल्मान्तर्हितश्च यावदवलोकयामि कौतूहलविस्फारित-लोचनस्तावदपश्यं प्रातःसमीरप्रोद्धूयमानहरितपताकाया अधः संदोहाभिमुखं निःशब्दं, लोहमूर्तिवदविचलं तिष्ठन्तं, महाप्रमाणं, बलशालिनं, मूर्तिमन्तमिव पराक्रमं, कंचिद्यवनयोद्धारम् ।"

"अपश्यं चालयित्वेव लांगूलं तं प्रसादयितुं पुरः समुपसर्पन्तं, विनयावनतपूर्वकायं, मंद्रस्वरं किमपि तं विज्ञापयन्तं, लब्ध्वा तस्य निःशब्दामनुज्ञां सहसा हर्षोत्फुल्लं, संमुखीभूय सैनिकसंदोहस्य सावेगं किमपि वदन्तं, बुधिलप्रमुखं काकम् ।"

"अपश्यं च, मतः ।....एकं बुधिलग्रामण्यं शनैः शनैरुत्तिष्ठन्तं, निष्प्राणमिव तं यवनयोद्धारमुपसर्पन्तं, निश्चेतनमिव तच्चरणयोः स्वां खड्गलतां संन्यस्यन्तम् ।"

"अनेन काकेन पापेन, साक्षान्मातृभूमेर्विपदं स्वसंपदीकर्तुं बद्धपरिकरेण, यवनसाहाय्यार्थं कृतनिश्चयेन, सिंधुराजपददुराशाकदर्थ्यमानहृदयेनाकस्मादुपस्थितं मम स्वामिनं साक्षात्कृत्य भीतभीतेनापि समवलोक्य तस्य रुग्णामवस्थां प्रवृद्धोत्साहेन, उभयलोकविरुद्धमाचरितुं कृतसंकल्पेन, व्यतीते निशामुखे, नूनं व्यपसारितं सर्वं बुधिलबलमाक्रमणमिषेण तस्मात् स्थलदुर्गात्, घातितो मम स्वामी ज्वरतंद्रितः निभृतं प्रवेशितैर्यवनसैनिकैः, उपायनीकृतश्च दुष्प्रधर्ष्योऽयमनभिज्ञो वस्तुस्थितेः प्रवंचितो बुधिलसैन्यसंदोहः कथमपि रिपोः'–इति विचारयन्, 'कुत्र खलु स्वामिनः प्राणप्रियास्ते सहयोद्धारः, ये तं शिविदुर्गात् किरणाः सहस्रकिरणमिवेहान्वगच्छन्' इति जिज्ञासातुरां दृष्टिमितस्ततो व्यापारयन्, अनवलोक्य तान् नरश्रेष्ठान् तासु मृण्मयमानवपंक्तिषु 'नूनं तेऽपि विनाशिता अनेन नृशंसेन' इत्यात्मनैव संप्रधारयन्, साक्षात्कृत्य विकरालतां संकटस्य सहसा स्थैर्यं चित्तस्याऽऽपन्नः 'दुर्वार्तेयं भर्त्रे निवेदनीयैव पणीकृत्यापि स्वप्राणान्' इति विनिश्चित्य, ततो निभृतमपसृत्य, गुल्मान्तर्हित एव मार्जार इव समुद्दिश्य सिंधुतीरं प्राच्यभिमुखमनवरतमधावम् । अनुकूलत्वाच्च दैवहतकस्यालक्षित एव केनाप्यवाप्नवं भयाक्रांतमिव जडं निष्चेतनमिव निस्तरंगं सिंधुसरित्प्रवाहम् ।"

"उत्तितीर्षुश्च तं तत्क्षण एव यावच्छ्रांते नयने व्यापारयामीतस्ततोऽस्मन्नाविकदिदृक्षया तावदवालोकयं जलप्रवाहमध्यगतं निःशब्दं सजवं दक्षिणतः समुपसर्पन्तं विषकीटविसरमिव भीषणदर्शनमगणितानां कोलानां समुदायम् । अपारयंश्च तं याथार्थ्येन परिज्ञातुं यावज्जिज्ञासातुरे लोचने तत्र बध्नामि परिचायकलिप्सया तावदद्राक्षमथाव्येणानुल्लंघनीयेन मंत्रेणेव केनचिद्गूढेन संचाल्यमानं तं सहसा वामतो वलन्तं, वलित्वा पाश्चात्यतीरमुपसर्पन्तं, उपसृत्य च सहसा उद्वमन्तमसंख्यान् धानुष्कान् यवनान् ।"

"दृष्ट्वैव च – 'पापैराश्रामकैर्विजित्य सिंधुभूमेः पाश्चात्यमर्दमकृतार्थमात्मानं मन्यमानैरघुना सैंधवप्रत्याक्रमणप्रतिरुरुत्सया,

सरित्तीरमेतदुपरुध्यत'– इति परिकलय्य समुत्तेजितो, 'भर्ता कथमपि सूचनीय एव' इति कृतनिश्चयः, 'कुत्र नु गतं सैंधवं नाविकं बलमिति विस्मयमानमानसः, सहसा ततोऽपसृतः, निबिडगुल्मान्तर्हिततया दुर्लक्ष्यव्यक्तिः, समतिक्रम्यातिजवेन योजनदीर्घमध्वानमुदीचीनं, समवलोक्य नदीकूलं निर्जनं, प्रविश्य जलप्रवाहमतिनिभृतं, जलान्तर्मग्न एवात्यतरं स्रोतः स्रोतस्विन्याः।"

"प्राप्य च पौरस्त्यं कूलं, विलग्नवेप एव, धावन् कुपथेन केनचित् प्राग्यायिना राजधानी समुद्दिश्य, मार्गेऽरण्यरक्षकस्य कस्यचिद्दृष्टिपथे काकतालीयं पतितः, तेन सत्वरं भर्तुः महाबलाधि-कृतस्य कटकं नातिदूरावस्थितं नीतः, तेन च निशम्य सर्वं वृत्तांतं समुद्विग्नेन सहानेनाश्वारोहेण तत्क्षणमेवेह प्रेषितः···· भर्तुश्चरणयोः सर्वमुदन्तं निवेदयितुं प्राभवम्।···· अनुष्ठातुं च स्वं कर्तव्यम्।"

"परंतु – अंशत एव। पापस्य तस्य काकस्य हि प्राणान् यावन्न हरिष्यामि तावदननुष्ठितकर्तव्यमेवाऽऽत्मानं गणयिष्यामि।···· कालसर्पेण दष्टस्य, प्रवहद्रुधिरविलग्नमलिनपरिधानस्य, कृत्तदक्षिण-भुजस्य, वामेनैव भुजेन पंचषैराततायिभिः सह युध्यमानस्य, निःशब्दं पृष्ठत उपसृतेन श्मश्रुलमुखेन म्लेच्छेन केनचिन्मस्तके विलुलित-शिरोरुहे खड्गेन हतस्य, कृत्तमस्तकस्य, क्षणमेकं दोलायमानस्य, निश्चेतनं चाऽस्ते भूमौ निपतितः, स्वामिनस्तद्दृश्यं, दहन्ममान्त-र्मर्माणि, नुदति मां – शोभनमशोभनं वा मार्गमनुसृत्य – योग्यमयोग्यं वोपायमवलंब्य – विहितमविहितं वा साधनमुररीकृत्य – हन्तुं तं नराधमं····पापाधमं····मातृभूमिकलंकम्।"

"अभिदधत एवेत्थं तस्य कर्कशस्वरस्य सैनिकस्य जज्वलतुः सहसाऽक्षिणी प्रतिहिंसाभाविनी। न तु शेकतुर्विलोपयितुमंशतोऽपि नैराश्यतिमिरं····निरुच्छ्वासं निरुंधत् निःस्तब्धं दहरं राज्ञो दहरस्य तद्दुहितुर्वा।

# षष्ठः परिच्छेदः

"मां बालिशमेव मन्यमानस्तातः न मम वचसि मनः कुरुते ।···· त्वं तु न" प्राह राजकुमारः जयसिंहः, समुपविष्टश्चंदनपर्यंके सुधाधवलप्रच्छदे भगिन्याः, क्लांत्वाऽर्द्धमुद्रितलोचनं शयितायाः, धरमाणश्च तस्या उत्तप्तमारक्तं कमलदलकोमलं करं करेण ।

"मन्ये – रणनीतिनैपुण्यं प्रतिपक्षिणः अस्माभिरेकदापि न सम्यक् परिकलितम् । यथापूर्वं स्थलमार्गेणैवाऽऽक्रमणं तस्य समुत्प्रेक्षमाणैः, सप्रयोजनं तेन संचारितेषु साधारणजनप्रवादेषु चारचक्षूंषि निमील्य विश्वसद्भिः, समुपेक्षितः सिंधुसागरः ।"

"समाक्रांतायां तेन सिंधुभूमौ तन्मार्गेण तत्तुल्यवेगं प्रत्याक्रमणं कर्तुमपारयद्भिर्व्यादाय मुखबिलं प्रत्यक्षीकृतस्तस्य दुष्प्रसह उदीचीनः प्रसरः ।"

"नैतावदेव । अपि तु – कापुरुषवत् चेष्टमानैरुपायनीकृतस्तस्मै निरूढो दुर्गः ।

"तत्पुरुषकारमुग्धयेव भाग्यश्रियाऽऽयोजितया तयाऽसामयिकवर्षया सुदूरं प्रसारितं स्वं प्रभावं सम्यक् परिलक्षयताऽपि

तस्मिन्नेवैकस्मिन् नातिविश्वसता, भ्रातुर्मे वज्रबाहोर्वज्रपराक्रमं पृच्छ् जानता, तेन, तत्सामर्थ्यचिक्षिणिषया यद्रणनीतिकौशलं प्रदर्शितं तन्नूनं कौतुकास्पदम् ।···· स्वयं मम भ्राता, रणनीतिचतुरोऽपि, नावेत् तस्य मनोगतम्, विप्रलब्धस्तस्य मरुसीमाया अतिक्रमणेन कृतकेन, समुपेक्ष्य दाक्षिणात्यां, तस्या एव रक्षणे स्वं बलं प्रायुनक् क्षीणे च तस्मिन् – साक्षादकरोत् स्वां त्रुटिम् ।"

"एतत्तु पर्याकलयितुमद्यावधि नाशकं यत् कथं खलु रिपुः, परिवेष्ट्य सिंधुमद्दुर्गं तस्यां कालरात्रौ हिंस्रश्वापदिवाऽऽचिक्रसुः निश्चलमवस्थितः, सहसा दुर्गान्तर्यायिनं नष्टप्रायं गुप्तं तं मार्गमध्यगच्छत् ।"

"आर्यो वा तत्प्रतिरोधाक्षमस्ततो गूढं निःसृतो जानन्नपि विश्वासानर्हं चरित्रं काकस्याप्रबुद्ध इव तस्य प्रदेशमध्यगच्छत् ।"

"गतो वा तस्यैव प्रासादे यवनाक्रमणवेलायामेव तीव्रेण ज्वरेणाक्रांतोऽभवत् ।"

"नूनं (सविषण्णस्मितं) प्रतिपक्षिणः रणनीतिनैपुण्यमिवास्मद्भागधेयस्य कपटनैपुण्यमपि प्रशंसनीयमेव ।"

"अस्मद्देशबांधवानां कार्पण्यमपि ।"

"देवलनगरदाहदग्धमनोबलैः निरूढप्रदेशोयैर्जनैः, रिपुबलमवनमितमस्तकं बहु मानयद्भिः, कपटहतं स्वं राजपुत्रमधिगम्याऽप्यनुत्तेजितैः, परिगलितोत्साहैर्यवनपारदास्यं नियतिलिखितमनुल्लंघनीयमिति निरपवादं स्वीकुर्वाणैर्वृघिलैः, काकचतुरस्य काकस्य प्रलोभनेन प्रतारितैः, परित्यज्य सपदि वंशपरंपरागतां सिंधुराज्यसेवां निमेषमात्र एव गोभक्षकाणामाधिपत्यमुररीकुर्वद्भिः, सिंधुमातरं निरुच्छ्वासां कुर्वद्भिरस्माकं नौसैनिकैः न मनसि कृता क्षणमात्रमप्यैहलौकिकी दुष्कीर्तिः पारलौकिकी वा दुर्गतिः ।"

"यदि हि नाम···· एकमपि काकं···· मूकं वा यवनपक्षे वयमवेत्स्याम, तर्हि वशीकृत्य तं राज्यप्रलोभनेन समस्तमेव यावनं बलं पश्यतामेव सर्वेषामदूरदर्शिनां भारतीयनृपाणां नाशयितुमशक्ष्याम ।"

"किं गतानुशोचनेन ?···· अशक्याऽऽशंसनेन वा ?"– अस्फुटमवदद्राजदारिकाऽवलोकमानाऽर्द्धोन्मीलिताभ्यां संतप्ताभ्यामारक्ताभ्यां लोचनाभ्यां भ्रातुः रत्नदीपज्योतिर्निगडितपक्ष्मलनयनं विलुलितकुटिलकुंतलसंस्पृष्टभालप्रदेशमुच्छ्वसितनासापुटमुद्गच्छच्छ्मश्रुमनोहरं निमीलितोष्ठपल्लवमारक्तगौरं वदनकमलम् ।

"न किमपि" – प्रत्याह तद्भ्राता । "न किमपि – यदि नाम वयं नाशयित्वाऽप्यर्द्धं स्वराज्यस्य····मार····मारयित्वाऽपि प्राणाधिकं भ्रातरं नावभोत्स्यामहे स्वाः त्रुटीः ।"

"न भवेन्नाम यवनपक्षे – कश्चित् काको मूको वा । धर्मप्रसाराभिनिविष्टे तस्मिन्न तत्संभवोऽसंभाव्य एव । अस्मत्पक्ष्याणां काकानां मूकानां वा परिशोधनं तु संभाव्यमेव ।"

"संभाव्यं तु तत्तुल्यरणनीतिनैपुण्यप्रकाशनम् ।"

"अपि नाम – त्वया काचित् परिकल्पिताऽभिनवा रणनीतिः" – विस्मृत्य शिरोरुजमपृच्छत् सकौतूहलमिव तद्भगिनिका ।

"आम् !" प्रत्यवदद्राजकुमारः ।

"यदि नाम – वयं····" सः प्रारभत ।

"····चिरं जीवतु युवराजः" – सहसा प्रविश्य वेत्रधारिण्युवाच । –"युवराज ! महाराज्ञी समाज्ञापयति यद्वत्सः सुदर्शनः – अनभ्रवज्रपातानभिज्ञोऽपि – सर्वव्यापिना शोकेन घनेन विचलितस्वांतो विमनायते । तत्वत्त्वेन स विनोदयितव्य इति ।"

"यथाऽऽज्ञापयति नाम अंबा" – प्रत्युवाच राजकुमारः।

आह च स्वभगिनीं – "पर्यवस्थाप्य सुदर्शनमहमनुपदमेव प्रत्यागतस्तुभ्यं मत्परिकल्पितां रणनीतिं सविस्तरं व्याख्यास्यामि। विचारयिष्यामि च त्वया सह तद्गुणदोषान्।"

उक्त्वेत्थं प्रस्थितं, धीरगंभीरैश्चरणक्षेपैर्नमयन्निव धरित्रीं शयनकक्षान्निर्गच्छन्तं, वयःसंघो वर्तमानमपि सुपरिलक्ष्य-प्रभावातिशयं, यौवनानारूढमपि व्यक्तप्रतापविशेषं, अनतिक्रांत-कैशोर्यमप्यारक्तनयनं, कृशमध्यमाजानुभुजं भ्रातरं स्वं कनिष्ठं निर्निमेषमवलोकयन्त्याः शयिताया एव समुदभून्मनसि राजदारिकायाः-

"अहो प्रभावो दुर्दैवप्रहारस्य! अद्यावधि कैशोर्योचितं स्वछंदं व्यवहरन्····अयं जयो····वज्रपातक्षणादेव पूर्णविकसितयौवन इव प्रत्यनीकप्रतीकारप्रभविष्णुरिवाऽऽचरति।"

"तातश्च – वार्द्धकातिभारसमाक्रांत इव, दुर्वहकर्तव्य-भारभुग्न इव, परिलुप्तप्रतिचिकीर्ष इव।"

"किं बहुना? अहमपि – न जाने केन – आदित एव बोधितकल्पाऽपि निशम्य मे भ्रातुः घातवार्तां पर्यवस्थापयितुमात्मानं न प्रभवामि। अतीतमेव निष्क्रियं निरन्तरं स्मराम्यवशेव। भूतमेव त्रुटिपूर्णमविच्छिन्नमनुशोचाम्यसहायेव।"

"विना तेन बाल्यमित्रेण सुखदुःखसहभुजाऽऽत्मानमेकाकिन-मिवानुभवामि। विरहितं तेन वज्रपराक्रमेणासमर्थमिवास्य यवन-संकटस्य प्रतीकारे राज्यमेतदाकलयामि।"

"वृद्धः – निर्वापितो दहन इव – स्मृतिमात्रशेषप्रतापोऽ-यमेकलस्तातः, किशोरोऽपरिपक्वप्रेक्षोऽयं जयः, अतिवयसोऽभिनव-विधमाक्रमणं यवनस्य याथार्थ्येन परिप्रेक्षितुमसमर्था गतानुगतिका

एते मंत्रिणः – कथमिवैतेऽम्यमित्रीयं जैत्रं, प्रलयवातमिव दुष्प्रसहवेगं, प्रतिक्षणोपचीयमानप्रभावं, यं कमप्युपायमवलंब्य राहुमिव चंद्रबिंबं – राज्यमेतत् प्रतिकलं ग्रसमानं, यवनयुवानं प्रतिरोद्धुं मध्येसमुद्रं च निक्षेप्तुं समर्था भवेयुः ?"

"यदि नाम वज्रः कालेनाकालिकेन नाग्रसिष्यत तर्हि सः परचक्रमेतत् प्रत्यावर्तयितुमक्षमिष्यत। कथं खलु सः काकस्य काकस्वभावं सम्यग्जानन्नप्यजानन्निव तस्यैव प्रदेशं साहाय्याभिलाषयाऽगच्छत् ? कथं वा⋯सदैव नीरुजः निलयं तस्य प्राप्त एव ज्वरोन्मादेन दुःसहेन समाक्रांतोऽभवत् ?"

"अपि नाम – एतत् तस्याः⋯तस्याः⋯जरत्या⋯अस्मद्वंशोन्मूलनकृतप्रतिज्ञाया मारणक्रियाविजृंभितम् ?⋯अथवा – यथाऽऽह जयः – भागधेयस्यास्माकं कपटकुटिलं विलसितम् ?⋯ आहोस्विद्द्वयमपि ?"

"द्वयमपि।"

"यदि नाम – द्वयमपि तर्हि क इव राजवंशमेतं रक्षितुं सक्षमो भवेत् ? को वाऽस्माकं सैंधवानां ललाटे लिखितं पारदास्यं प्रतिरोद्धुम् ?"

"न कोऽपि। न कोऽपि।"

विचिंतयन्ती चैवं विकलस्वांता तंद्रिता क्रमशः निद्रांकेऽलीयत। न त्वलभत मुक्तिमात्यंतिकीं तर्कवितर्कोऽऽवर्तात्। अर्धनिद्रिता यथापूर्वमन्वभवदेव खेदम्।

आरभत च शनैः शनैरात्मानमनुभवितुं – प्रोन्नतसिंधुतटप्ररूढस्याप्रकंपशाखाशिखरस्य भूतलचुंबिजटाजूटस्य 'निष्कूजस्तिमितस्य' निष्कंपदलस्य समाधिलीनस्येव औदुंबरस्य महावृक्षस्य मूले

समुपविष्टस्य तपःकृशकायस्यातिवृद्धस्य महर्षेश्चिदानंदस्य चरणयोर्नतं, शृण्वन्तं तस्य मंद्रां धीरां गिरं – 'सिंधुकन्ये ! अस्या अपि घोरतरा विपदभिभविष्यति त्वाम्····असहायतरमात्मानमनुभविष्यसि ····दीनतरां दशां प्राप्स्यसि नातिचिरादेव। मा, अंब !, विचल क्षणमेकमपि स्वकर्तव्यपथात्। मा जहिह्यात्मतेजः। हुत्वाऽपि प्राणान् प्रयतस्व निरोद्धुमिमामापदम्। इयं ते सत्त्वपरीक्षा। उत्तीर्णा चास्यां····अमरत्वं यास्यसि····अमरत्वं यास्यसि' इति, प्रक्षालयन्तं च तस्य चरणारविंदमजस्रं परिवहन्तीभिरुष्णाभिः – धावमानाभिरिवान्तःकरणविषादं प्रगाढं – अश्रुधाराभिः।

प्रबोधिता च सहसा तस्यास्तंद्रायाः केनचिदुष्णस्पर्शेन – समवेदात्मानं तस्मिन्नेव मंदालोके निःशब्दे निर्जने शयनकक्षे तस्मिन्नेव सुधाधवलप्रच्छदे चंदनपर्यंके पूर्ववदेव शयितं, क्लेदयन्तं शिरोधानमजस्रं प्रवहन्तीभिरश्रुधाराभिः, परंतु विलीनावसादं, व्यपगतविषादं, संक्रमिताऽऽत्मबलमिव स्वप्नदृष्टेन महापुरुषेण सुखदुःखयोः लाभालाभयोः जयपराजययोः समदर्शितामापन्नं, प्राप्तापदश्चाऽऽमरणप्रतीकाराय कृतप्रतिज्ञम्।

अहो पावनः प्रभावः पुण्यात्मनाम् ! स्वप्ने दृष्टस्यापि हि तस्य महर्षेः सामर्थ्यातिशयोपकृतेव सिंधुकन्याऽऽरभत तत्क्षणादेव व्यवहर्तुमभिनिविष्टैवैकमात्रेण यवनप्रतीकारसंकल्पेन ध्रुवध्रुवेण, निर्मुक्ता संतापादुपतापाच्च प्राक्रमतोद्धर्तुं विषादपंकादतलात् स्वं वृद्धं जनकं, समुत्तारयितुं कुंठासागरादतिगभीरात् तन्मंत्रिमंडलं, पुनरुज्जीवयितुं च प्रजाजनमनोबलं निर्वाणभूयिष्ठम्।

अहो प्रगाढः प्रतापो वज्रसंकल्पानाम् !

अर्धोन्मीलितसुमसमाया अपि हि तस्याः राजदारिकायाः संततोद्यमेन प्रभाविताः सर्वे सैंधवा उच्चावचाः सधनाः निर्धनाः

सबलाः निर्बला विजित्य भाग्यवादं परित्यज्य च कांदिशीकभावमाततायिनः संरोद्धुं मध्येसागरं च निक्षेप्तुं परिकरं बबन्धुः ।

अहो दुरुत्खेयः परिणामः संस्काराणाम् !

तिरस्कृत्य पारंपरिकप्रतिरोधपद्धति भ्रात्रा जयसिंहेनाल्पवयसाऽपि विचक्षणमनसा परिकल्पितां सविस्तरं प्रतिपादितां चाभिनवां रणनीतिं सुविचार्यांगीकुर्वत्या मंत्रिपरिषद्यसकृत् तामेव सयुक्ति पुरस्कुर्वत्या तया प्रभाविता अपि हि सिंधुनरेशस्य वयोवृद्धाः सेनान्यः न शेकुः स्वीकर्तुं यत् तेषां परंपरागता युद्धविद्या नूतनाया अपरिचिताया यवनानामाक्रमणविधायाः प्रतीकाराय न समर्था स्यात्, द्वित्रभारतीयनृपपृतनोपबृंहितसामर्थ्याऽपि तेषां सेना देवलदेवीविग्रहखंडन – निरूढसिंधुमद्दुर्गादिपतन – राजपुत्रवप्पबाहुनिधनादिविपरीतघटनाक्रमक्षितमनोबला संततपरिवर्धमानसामर्थ्यामविच्छिन्नविजयमालिकामत्तां म्लेच्छसेनां सांमुखीने समरप्रसंगे पणीकृत्य प्राणान् विजेतुं न प्रक्रमेत, प्रक्रांताऽपि संप्रवृत्ते तुमुले रणे चपलाचपलयवनवनायुजसंपीडितया गजपृतनयाऽप्यान्त्याऽवस्कंदिता दुर्गतिमात्यंतिकीं लभेत, अतोऽभिनवयवनप्रसरणमभिनवेनैवाभिषेणनेन प्रतिरोद्धव्यं परिहृत्य सांमुखीनानां युद्धानामवसरान्, सैंधवं बलमासिंधुसागरात् शिबिप्रदेशपर्यन्तं प्रसृताया यवनसेनाया दौर्बल्यस्थानेष्वेव तेषु तेषु – समुपलभ्य योग्यान् संधीन् – प्रयोक्तव्यम्, अतिवाह्य च समयमेवमपरिचितवर्षर्तुवर्षाकुंठितायाः निरुद्धतया सागरमार्गस्य प्रलयवीचिसमवीचितांडवनृत्यैरुपरुद्धवलोपसराया विविधरोगाक्रांतायाः संत्रस्तायास्तस्याः पन्नगपिपीलिकान्यायेन विनाशने व्यापारयितव्यम् – इति ।

यदा तु प्रयत्याप्यसकृत् न शशाक राजदारिका पितरं तत्सेनाध्यक्षांश्च ग्राहयितुं साहसिकीमनीकनीतिं तदा खिन्नापि सा 'वृद्धान् छंदानुरोधेन' इति विचिन्त्य, समयं पर्यालोच्य, स्वं खेदमपह्नुत्य, क्षुब्धं भ्रातरं सामवचनैर्युक्तियुक्तैः पर्यवस्थाप्य, पारंपरीणयैव रीत्या

प्रतिपक्षिप्रतिरोधाय कृतसंकल्पा, तदुद्देश्येन सर्वां स्वां शक्ति प्रयोक्तुं प्रारभत। अलभत च साफल्यं कल्पनातीतम्। यत्र यत्र हि सा हिमधवलतुरगाधिरूढा – विद्युल्लतेव स्फूर्जेण – श्रात्राऽनुगता, द्रढयितुं प्रजाजनमनोबलं जगाम तत्र तत्र तत्तेजःप्रज्वालिता इव सैंधवा उत्साहं निरपवादं परचक्रनिवारणे बबंधुः।

विशेषतः सैनिकाः। राजकुलदेवताविग्रहखंडनखंडितधैर्याः पराजयपरंपरापरास्तप्रायपराक्रमा मूर्तिमतः प्रतापस्येव राजकुमारस्य वज्रवाहोस्तादृशेन निषूदनेन निषूदितोत्साहाः सर्वतःप्रसरदतिशयोक्त-प्रतिपक्षपराक्रमवृत्तांतावसन्नावष्टंभाः प्रवयसि राजनि जराजीर्णेषु सेनाध्यक्षेषु च विश्वसितुमपारयन्तोऽनेतृकमिवाऽऽत्मानं भावयन्तस्ते हि यदाऽऽततायिशासनाय शरीरं धृत्वाऽवतीर्णां साक्षाद्देवलदेवीमिव, विग्रहवतीं विग्रहस्फूर्तिमिव, तां, तेषु तेषु कटकेष्वविगणय्य परिश्रम-मर्हर्निशं भ्रमन्तीं, पादातिकान् रथिकान् धानुष्कान् नैस्त्रिंशिकान् कौंतिकान् शाक्तीकान् पारश्वधिकान् प्रासिकान् याष्टीकान् – उच्चावचान् सर्वानेवाऽऽयुधिकान् – स्वोत्साहसंपदाऽक्षय्ययाऽऽपूर-यन्तीमिव – साक्षाच्चक्रुस्तदा पुनरुज्जीवितसामर्थ्यमिव पुनरुप-लब्धनायकमिवाऽऽत्मानमनुभवन्तस्तस्यां तद्भ्रातरि च परं विश्वसन्तो, विस्मृत्यातीतं पराभवमलिनं, समरसंनाहे महतोत्साहेन मनश्चक्रुः।

एवमपूर्वमेकीभावमापद्य स्वे स्वे कर्तव्ये प्रवृत्तान् तान् दृष्ट्वा समाश्वस्ता राजदारिका, संनिकृष्टनियुद्धनिपुणबलमभि-कांक्षमाणा, समयमेव केवलं संनहनपर्याप्तं वेधसमयाचत।

आरभत च क्रमशोऽनुभवितुं तां याचनां तेनाऽऽपूर्यमाणामिव।

प्रतिप्रहरं हि समापतन्तः,पौरस्त्ये सिंधुतीरे तेषु तेषु निरीक्षण-स्थानेष्वभ्रंकषशाखिशाखाशिखरेष्वत्युन्नतेष्वधित्यकाप्रदेशेषु नियुक्ताः, पाश्चात्यतीरवर्तिनः प्रत्यर्थिनश्चेष्टा अहर्निशं निरीक्षमाणा अपसर्पाः

प्राक्रमन्त तस्यै निवेदयितुमप्रत्याशितां वार्त्तामपारस्य यवनसेना-सागरस्य गतिरोधस्य।

तत्कालपर्यन्तं दुर्निवार्यया गत्योदीच्यभिमुखमनवरतं सर्पन्तं म्लेच्छबलसागरमभिव्याप्य शिविप्रदेशं कुंठितप्रसरमिवाऽद्रौ स्थिरता-मापन्नं ततश्चांशतः प्रतिनिवृत्य सिंधुमद्दुर्गमभिलक्ष्येव पुनर्दक्षिणा-भिमुखं प्रस्थितं चारचक्षुर्भिरुपलभ्य, प्रकल्प्य च तं ग्रसित्वाऽर्धमेव सिंधुराज्यस्य कृतकृत्यंमन्यमानमधिकानाकांक्षिणं- परं खलु जहर्ष सिंधुनरेशः। स हि समुत्प्रेक्षत तं समाकर्ण्य तस्य सेनासंनहनस्य प्रचंडस्य वार्त्तां सहसा विलुप्तधैर्यम्। आरभत च प्रत्याक्रमण-वल्गितानि कल्पनावल्गूनि।

अनुभववृद्धास्तत्सेनाध्यक्षास्तद्दुराशादामभिरनिगडिता अपि न दधृषुस्तस्य मनोराज्यं मनोरमं खंडयितुम्। भेजुश्च मौनमुद्रां सर्वार्थद्योतिकाम्।

न तु राजदारिका। तद्भ्राता वा।

तौ हि सर्वथाऽनुत्प्रेक्षितया द्विषन्चेष्टया किंचिच्चकितावपि क्षणमात्रमपि न चिंतयामासतुर्यत् योजनशतदीर्घंदीर्घमत्ययबहुलं मार्गं तथाऽऽक्रम्य सिंधुसरिन्मुखप्रदेशे पदं तथा निधाय सैंधवमात्रश्रद्धास्थानं देवलदेवीविग्रहं तथा विभज्य सामाद्युपायचतुष्टयप्रयोगेण चतुरेण रिपुराज्यस्य पश्चिममर्द्धं तथा विजित्य परिवृढबलो यवन आकर्ण्य रिपोः सेनासंनहनवार्त्तामिव केवलां विगलितधैर्योऽकस्मादात्मसंरक्षण-मात्राऽऽतुरः संजात इति। अपि तु दृढं विशश्वसतुर्यत् सः समूलघातं स्वरिपुं जिघांसुः सुदूरप्रसृतस्य स्वबलस्य पुनर्घटने, सामरिकदृष्ट्या महत्त्वशालिषु स्थानेषु तस्य विनियोजने च व्यापृत इति। प्रतिपाद-यामासतुश्च तथा मंत्रिपरिषदि विस्पष्टाक्षरम्।

अचिरादेव च प्रापतुः पर्याप्तानि प्रमाणानि स्वतर्कपरिपोष-काणि निरीक्षणनियुक्तेभ्योऽचारवर्तिभ्यो गूढपुरुषेभ्यस्तेषु तेषु

पारवर्तिषु स्थानेषु यवनसेनासंघट्टमतिदृढं सूचयद्भ्यः। प्राप्य च तान्यधिकतरमेव रणोद्योगरतौ कथमपि प्राक्कलयितुं रिपोः संकल्पितं तरव्यूहमचेष्टतामनवरतम्। न त्वलभतां साफल्यमण्वपि,– दुस्तार्यतया नदीपात्रस्य भयजडस्येव निस्तरङ्गस्यापि कृतपुंखयवन-धनुर्धरोपरुद्धपरतीरस्य।

इदं च वैफल्यं तयोर्मनसि व्यग्रतामेव प्रतिक्षणं घोर-तरामजनयत्।

'अपारबलोऽपि यवनः पौरस्त्यं योजनशताधिकदीर्घं सिंधु-नदीतीरं समस्तं युगपदेवाऽऽक्रमितुमसमर्थः नूनं सामरिकदृष्ट्याऽति-महत्त्वशालिनमेव प्रदेशमुपरोत्स्यति। स च प्रदेशः शिबिप्रदेशनिकट-तमाद्राजधानीप्रदेशादन्यो भवितुमेव नार्हति। तत्रैव हि समूलघातं प्रहृत्य, निहत्य च राजकुलं, स सिंधुराज्यस्यावशिष्टमर्द्धं जेतुं चेष्टेत'– इति तर्कयन्तावपि हि तौ श्रुतिपथमनवरतमागच्छन्तीभिः, कदाचित् 'यवनसेनानीः शिबिप्रदेशात् प्रतिनिवृत्तः निरुद्धदुर्गे परिकल्पितनिवासः संतीर्य नदीपात्रं पौरस्त्यं सिंधुदेशमुपरुरुत्सुरिव महान्तं सेनासंनाहं कुर्वँल्लक्ष्यत' इति सूचयन्तीभिः, कदाचित् 'सिंधुसरिन्मुखेन पौरस्त्य-मपि सिंधुदेशं प्रविविक्षुरिव यवनो देवलपत्तनरोधसि प्रबलां नौसेना-मेकत्र कुर्वन् दृश्यत' इति निवेदयन्तीभिः, कदाचित् 'महती खलु यवनसेना, समुल्लंघ्य मरुप्रदेशं सिंधुदेशप्रविष्टा, सिंधुमद्दुर्गपरिसरे क्लृप्तकटका रणोत्सुकेव परिदृश्यत'– इति निगदन्तीभिर्वार्त्ताभिः विचलितौ– विस्मृत्य स्वां तर्कप्रणालीं– नातिचिरादेव व्याकुलाविव बभूवतुः।

एवंप्रायया व्याकुलतया व्यतीते लोहपादे इव युगदीर्घदीर्घे मासे– एकदा, प्रहरमात्रप्रौढेऽपि नैदाघतापदुःसहे निर्वर्तिते पूर्वाह्णे, सह मंत्रिपरिषदा मंत्रणागृहे विचारयति तास्ताः प्रतीकारयोजनाः संक्षीणोत्साहसंपदि सिंधुभूभृति, ''''अपि नाम शृगालचतुरो यवनः

संततेन कृतकेनाऽऽचिरूंसाप्रदर्शनेनास्माकं सैनिकानां नागरिकाणां-सर्वेषामेव सैंधवानां धैर्यसंपदं दिधाविषति ? धावित्वा च तां निःशेषं संततप्रतीक्षामात्रश्रांतान् विनायासमेव जिगीषति ? यदि नाम ....एवं ....र्तहि किमिति वयमेव गूढं संतीर्य नदीपात्रं तमेव तडिद्वेगेन नाऽऽक्रमेमहि ? ....परंतु.... तत्पर्याप्तं नौबलं कुतो लभेमहि ?' इत्यादि किमपि किमपि स्वात्मनैव तर्कयन्त्यां राजदारिकायां– सहसा प्रविश्य प्रधानो दौवारिक एकं साधारणवृत्तांतं प्रौढं सैंधवमविलंबमेव दर्शनमभिकांक्षन्तं भूभृते न्यवेदयत् । क्षणमात्रं विचार्य तेनानुज्ञातश्च प्रावेशयदनुपदमेवाऽऽगतं धूलिधूसरितवेषमातुरातुरया दृष्ट्या प्रस्फुरन्त्या ओष्ठमुद्रया च स्फुटपरिलक्ष्यमाणाऽऽवेगं दीर्घदीर्घं श्वसन्तं फेनिलौष्ठप्रांतं सैंधवं दूतं कंचित् ।

प्रविष्टमात्रश्च सः— असहमान इव क्षणमात्रमपि विलंबं-कथंचिन्नमितमस्तक आरभत ससंभ्रममस्फुटाक्षरं '....देव ! ....अत्याहितम् ! ....अत्याहितम् ! ....प्रवृत्तः खलु यवनो विहाय निरुद्धदुर्गपरिसरमुत्तरितुं नदीपात्रम् ! ....अथवा– समुत्तीर्ण एतावत्या कालकलया तीरं आस्माकीनं कृतसेनासंनाहश्चलितुं राजधानीं समुद्दिश्य'– इति वक्तुम् ।

समादिष्टश्च देवेन सहसोत्तेजितेन सविस्तरनिवेदनायावदत् कथमपि संनियम्याऽऽत्मानं, 'मर्षयतु देवः ! मया खल्वावेशवशात् समुल्लंघयता मर्यादाः सदाचारस्य महत् खल्वपराद्धम् । ....देव ! अयं खलु देवस्य दासो देवेन पौरस्त्ये सिंधुतीरे प्रतियोजनार्द्धं प्रतिपक्षिकुचेष्टितनिरीक्षणाय नियुक्तानां सैनिकगूढपुरुषाणामन्यतमः । अतीते निशामुखे, यवनपददलितायाः सिंधुभुवः निःश्वास इव मंदं मंदं प्रवहति कदुष्णे सायंसमीरे, यदा तावदहं नियमानुसारं चिरपरिचितमौदुंबरं वृक्षमारुह्य निरीक्षणकार्ये आत्मानं व्यापारयं तदा क्षणमात्रमपि न समभावयं पतितप्रायं विपत्प्रहारम्'। अतीततुल्यां

तामपि तमस्विनीं विभावयन्, परतीरप्रदेशनिखातनयनः, कदाचिद्दे-वलपर्त्तनप्रतिबद्धानां स्वजनानां, कदाचित् यवनेन तत्रानुष्ठिताना-मत्याचाराणां विषये चिंतयन्, कदाचित् 'कुत्र खलु प्रहरेदयं यवनः शलभायमान' इति विचारयन्, कदाचित् 'किमिति नास्माभिरेव प्रदर्श्य पुरुषकारं स एवाऽऽक्रमणीय' इति तर्कयन्, शनैः शनै- र्मर्षयतु देवः- तंद्रितलोचन एवाभवम्। सहसा च व्यपगततंद्रः- न जाने कस्यचिदस्वाभाविकस्य ध्वनेर्वशात्, अनुकूलत्वाद्वाऽस्मद्भागधेयस्य- अनतिस्पष्टयाऽप्यनपवार्यया दुःशंकया कयाचिन्नुद्यमानः, सावधानः, निश्चलः, निरुद्धश्वास, उपक्रममकरवं सहस्राक्ष इव नातिदूरमप्यंधत-मसाऽऽवृततया दुर्लक्ष्यविशेषं परतीरप्रदेशमधःप्रसृतं च निस्तरंगं यवनसंस्पर्शवशात् कलुषितमिव कृष्णं नदीपात्रमवलोकयितुं, सहस्रश्रव इव श्रोतुं क्षुद्रतममपि स्वनम्।"

"कृतोपक्रम एव च साक्षादकरवं- पारादवारं निभृतमुप-सर्पन्तमविच्छिन्नं कृष्णवस्त्रावगुंठितयवनसैनिकसहितानां कृष्णवर्णतया लुप्तप्रायाणामिव घनांधकारे दुर्लक्ष्याणां महाप्रमाणानां नारकीयाणां विपक्ष्मीणामिव कोलानामोघम्।"

"अथमर्षिण्यास्तरंगिण्या अतलस्पृशस्तलात् प्रसह्य समुत्थितं युगसंचितं दुःसहानां पापानां समूहमिव तं वीक्ष्य क्षणमात्रं विस्मयमूढः, क्षणेऽन्यस्मिन्नेव प्रकृतिमापन्नः, 'रिपोरवारेऽवतरणात् प्रागेव इतः निभृतमपसरणं, कथमपि राजधान्यां देवचरणौ साक्षात्कृत्य तयोरेतत्कूटाक्रमणनिवेदनं च श्रेयस्करमिति कृतनिश्चयो, वृक्षास्तस्मात् निःशब्दमवातरम्। अनवरतमाक्रम्य च मार्गं देवसेवायामुपातिष्ठम्।"

समाकर्ण्य समाचारमिमं राजा दहरस्तन्मंत्रिणस्तत्सेनान्यः स्वयं राजदारिकाऽपि नियतिशापाद्वा व्याकुलत्वाद्वा चेतसोऽ-धिकतरप्रतीक्षासहस्य- न जाने कस्मात् कारणात्- तत्क्षणमेव

तस्मिन् बाला इव] परं विशश्वसुः, नानुबभूवुः लेशलोऽप्यावश्यकतां तद्वृत्तांतसत्यापनस्य। संप्रधार्य च यवनं दक्षिणत एवाऽऽक्रममाणम-विलंबमेवाभिनिर्याणमैकमत्येन निश्चिक्युः।

अभिनिविष्ट इव च तेन निश्चयेन विषादजाड्यं समूलं प्रविलापयता, राजा दहरस्तत्रैवोपस्थितान् चतुरङ्गसेनाध्यक्षान् स्वानि स्वानि सेनाङ्गानि तत्तत्कटकेभ्यः समाकृष्टु विरचयितुं युद्धशास्त्रानुसारं यवनव्यूहभेदक्षमसेनारूपेण समुपस्थापयितुं च निरुद्धप्रदेशाभिमुखे राजपथेऽविलंबमेव– आदिदेश।

आज्ञापयामास च – अपगतेषु तेषु वीरोचितमभिवंद्याऽऽदेशानुष्ठानाय, सांधिविग्रहिकं वृद्धं सुमतिं राजधान्या बहिरेव क्लृप्तकटकं काश्मीरपृतनाया अध्यक्षं सत्वरं सूचयितुं सबहुमान-माह्वातुं च साहाय्यदानाय, निर्गते तस्मिन् प्रणम्य गृहमंत्रिणं सडिंडिमनादमुद्‌घोषयितुं राजधान्यां विजयाभियानवार्त्तां, दौवारिकं च प्रस्थानलग्ननिर्द्धारणाय राजपुरोहितमामंत्रयितुम्।

आघ्राय मदगंधं प्रतीपपवनोपनतं सहसा संक्रुद्धं वनराजमिव निशम्य यवनाक्रमणसमाचारं समुत्तेजितं, वृद्धमप्यावेशवशात् तरुणमपि तिरस्कुर्वन्तं तं समवलोक्य समुपजातप्रत्यया, कटकात् सत्वरं प्रत्यागतं भ्रातरं पितुर्नियोगात् तांस्तान् सोत्साहमनुतिष्ठन्तं दृष्ट्वा संजाततोषा, राजदारिका तु मुहूर्तमात्रानन्तरं ततः प्रस्थिताऽन्तःपुरायाऽऽयोजनेच्छया लोहाभिसारस्य यदा मार्गे एवाभियानचर्चामुखरपरिजना-कुलाकुलेऽपश्यत् परिचारिकया कयाचित् सादरमुपदिश्यमानमार्गं, धौतधवलवाससं, भस्मचर्चितललाटपट्टं, वयसा नातिवृद्धमपि चिताभरेणेवावनमितोत्तमांगं, ब्राह्मतेजोभासुरमपि निस्तेजसमिव भासमानं, निर्लिप्तचेतसमपि व्याकुलमानसमिव दृश्यमानं राजकुल-पुरोहितमनुत्सुकानीव पदानि क्षिपन्तं मंत्रणागृहमुद्दिश्य – तदा बलात् स्मारिता युगान्तर इव दृष्टस्य महर्षेश्चिदानंदस्य सहसा म्लानस्वान्ता,

हठात्समुपजातानिष्टाऽऽशंका, क्षणमेकं विचार्य किमपि स्वात्मनैव, चरणस्पर्शव्याजेन भूदेवं तं मार्ग एवारुणत् ।

कार्यान्तरमिषेण प्रेष्य च प्रेष्यां मार्गोपदेशिकामन्यत्र, तेन सह मंत्रणागृहाय नाम चलिता, मार्ग एव, स्वैरमिव, विजययात्राप्रस्थान-लग्नमपृच्छच्छोभनम् । विज्ञाय च तस्मादस्फुटस्वरान्न केवलं तदत्यंताभावं प्रत्युत राजप्राणघातकग्रहयोगं प्रबलमागामिशुक्ल-तृतीयापर्यन्तं सहसा म्लानमुखकमलाऽपि स्खलितपदक्षेपाऽपि महता प्रयासेन संनियम्याऽऽत्मानं, मंद्रेणापि दृढेन स्वरेण वर्णयामास प्राप्तप्रायां परचक्रापदं संक्षेपतः, प्रार्थयामास तं मारकग्रहयोगं कस्याप्यन्यस्य समीपेऽप्रथयित्वा तद्दिवसावसानात् पूर्वमेव प्रस्थानसमयं उपदेष्टु, व्यावर्तयामास च पदानि स्वानि समुद्दिश्याऽन्तःपुरं पुनः.... अंगीकृते तेन परिकलितकार्यगौरवेण तथाऽनुष्ठातुं कथमपि ।

एवं कृत्वा विपरीतग्रहयोगमात्ममात्रविदितं, संवृत्याऽऽत्मनो विषादं प्रगाढं स्मितेनाऽऽहार्येण, गूहित्वा खेदं घनं कृतकेनोत्साहेन, विजययात्राप्रस्थानसंबद्धानां तेषां तेषां कार्याणां करणेऽतिव्यापृत-मिवाऽऽत्मानं प्रदर्शयितुमारभत सा । अलभत च साफल्यं कल्पना-तीतम् । उत्साहेनापारेणान्यानपि प्रोत्साहयन्तीं, विश्वासेनागाधेन शंकितानपि समापूरयन्ती, धैर्येण वज्रदृढेनाधीरानपि द्रढयन्तीं, मूर्तिमती स्फूर्तिमिव सर्वत्र दिव्येन तेजसा दीप्यन्ती, सौदामिनीमिव सर्वत्र विलसन्तीं तां दृष्ट्वा – न तस्याः पिता, न माता, न भ्राता क्षणमेकमप्यशकन् अनुमातुं विषादमतलस्पृशं तस्या हृदन्तस्तले प्रसृतम् । किं पुनरितरे जनाः ?

दुःखं वै संविभाज्य भुक्तं शतभाजितं भवति । असंविभाज्य सहस्रगुणितम् ।

यदि हि वराकी सूर्यकुमारी बाल्यसखेनाभिन्नहृदयेन वज्र-बाहुना सहावश्यंभाविनो विपत्प्रहारस्य तस्याऽऽशंकां हृदय–

मिवोत्पीडयन्तीं मानसमिवोपमर्दयन्तीं प्राणानिवोपरुन्धन्तीं संभोक्तुमशक्ष्यत् – तर्हि तस्याः कुसुमकोमलं मानसमेवं मंत्रमुग्धमिवागतिकं संमोहितमिव किंकर्तव्यविमूढं नाभविष्यत्। अपि तु – प्राप्तायामपि विषमपरिस्थितौ कमपि नाम समुत्तारोपायं कथंचिदप्यचिन्तयिष्यत्। अपहृते तु तस्मिन् कृतांतेन कुटिलेन सहभोक्त्रन्तराभावात् साऽऽशंका प्रतिक्षणं लक्षकृत्वो वर्धमानाऽचिरादेवाच्छिदत् तस्या मतिं, व्यपाहरत् तस्याः शक्तिम्, अकरोच्च तां पुत्तलिकामिव सूत्रधारेण निर्घृणेन केनचिन्नर्त्यमानामवशाम्।

# सप्तमः परिच्छेदः

अवशैव च सा – अलक्षयत् ज्ञात्वाऽभिनिर्याणलग्नं राजकुलपुरोहितेन प्रहरमात्रावशिष्टे तस्मिन्नेव दिवसे सुनिश्चितं सहसा प्रवृद्धं, मर्यादाः सर्वा उत्पीडयन्तं, समापूर्य राजप्रासादं बहिः नगरे सर्वत्र प्रसरन्तम्, उच्चावचान् सधनान् निर्धनान् यूनो वृद्धान् सबलान् निर्बलान् सर्वानेव सैंधवान् समुत्तंभयन्तमुत्साहमपारम् ।

अवशैव च सा – अलक्षयत् स्वात्मानं स्वस्वसारं स्वभ्रातरं च प्रस्थानाय संनद्धं पिनद्धं शस्त्रधरं प्रासादप्रांगणेऽन्तःपुरनिर्गमनं सिंधुराजस्य प्रतिपालयन्तम् ।

अवशैव च सा – अलक्षयत् गत्या धीरोद्धतयाऽन्तःपुरान्निर्गच्छन्तं, पुरःप्रधावद्भिः जयावलोकयाऽऽदिघोपमुखरैः सौविदल्लैरूपदिश्यमानमार्गं, व्यूढकंकटं, धृतशिरस्त्रं, खड्गभीषणहस्तं, वनराजमिव दर्पाधगंधगजताऽऽक्रमणोद्यतं दुष्प्रसहं, पुरोहितकृतमंगलतिलकोद्भासितललाटफलकं, बद्धरणकंकणभीषणदक्षिणभुजदंडं, नीराजनादीपकदीप्तमिव प्रखरतरराजतेजोभासुरं, नमयन्तमिव महीतलं यवनसंस्पर्शदूषितं, प्रासादप्रांगणेऽवतरन्तं, सौभाग्यतिलकालंकृतभालया कुलदेवताचरणकमलरजोविभूषितभ्रूमध्यया कृतमहार्हवेषया विविधरत्नाभरणभूषितांगलतिकया मंगलगीतमुखरपरिचारिका-

जनानुगम्यमानया विलासयात्राप्रस्थितयेव विलसत्स्मितमधुरतर-मुखमंडलया निपतद्वज्रप्रहारानभिज्ञया निराकुलया महाराज्ञ्याऽनुगम्यमानं, सर्वतः प्रवर्षत्पुष्पवर्षा घनां सस्मितं स्वीकुर्वन्तं, समुत्थाप्य शुंडादंडं विचित्रवर्णविरचनामनोरमं प्रणम्य भर्तारं समादरेणेव भूमावुपविष्टां महार्हपरिस्तोमाऽऽवृतकज्जलकृष्णकलेवरां सौवर्णशीर्षण्याऽऽवृतमस्तकां मंगलतिलकभूषितावग्रहां वर्मितकृतहस्तहस्तिपकनियम्यमानां कल्याणलक्षणां धेनुकामारोहन्तं, आरुह्य च शनैः शनैः प्रासादमहाद्वाराभिमुखं गच्छन्तं, समानवयोवेषवृत्तांतां वशामन्यामारुढया महाराज्ञ्याऽनुगम्यमानं, किंचिदूनविशेषां करिणीं समारूढेनाऽऽत्मना स्वस्वस्रा स्वभ्रात्रा चानुसिध्यमानं, प्रासादमहाद्वारान्निर्गच्छन्तं, बहिःसंकुलितनिबिडनागरिकसहस्रोत्थितां गगनवितानमिव विदारयन्तीं दिक्चक्रवालमिव कंपयन्तीं जयघोषणां समुन्नमय्य दक्षिणभुजं बहु मानयन्तं, जनसहस्राकुलाकुलेनोभयपार्श्ववर्तिहर्म्यवातायनपतत्पुष्पपरागरंजितेन राजपथेन प्रशस्तेन प्रस्थितं, पार्श्ववर्तिनः जयघोषमुखरान्नागरिकसंमर्दादकस्मान्मध्येमार्गमुपस्थितया दूरदर्शितलक्ष्यविशेषया कृष्णया वामनया कुब्जया वृद्धयाऽनावृतप्रायया कंकालशेषया जरत्या कयाचित् सावेशं सकंपं तारस्वरमाक्रोशन्त्याऽवरुद्धमार्गं, चकितचकितं तामवलोकयन्तं, बलादपसारितायां तस्यां पुरः प्रवर्तितनगररक्षकैः पुनः प्रचलितं, किंचिद्विमनस्कं, शनैः शनैः राजधानीप्राकारमहाद्वारं दाक्षिणात्यमुपगच्छन्तम्, आदित एव तत्र समुपस्थितेन वर्मितेनातिधवलघोटकारूढेन कृतांतहासभीषण – विकोश – खड्गदुर्धर्षेण महाबलाधिकृतेन सादरमुपकृताभिवंदनानं, स्वीकृत्य तदभिवादनं महाद्वाराभिसरन्तं, बहिरेव प्राकारात् – आ क्षितिजं – प्रसृताया अभिक्रमोत्सुकानामसंख्यानां रथानां पताकाभिः पवनोद्धूताभिर्यवनं तर्जयन्त्या इव मदोत्कटानां वारणानां शुंडाभिरनवरतं वेल्लन्तीभिः ग्रसितुं प्रयतमानाया इव विद्युच्चपलानां तुरगाणां हेषारवैः निर्भर्त्सयन्त्या इव [illegible] धन्विकानां पारश्वधिकानां शक्तिहेतिकानां याष्टीकानां नैस्त्रिंशिकानां वैजयन्तिकानां [illegible] पादातिकानां प्रतिफलद्[illegible]

इव, समवलोक्य प्राकारमहाद्वारान्निःसरन्तं, तं, सिंहनादेन प्रचंडेन दिग्गजान् वाधमानाया इवानीकिन्याः स्वीकृत्य नेतृत्वं दक्षिणाभिमुखेन मार्गेण प्रस्थितम्।

यथा यथा तु सा क्रमशः शीघ्रतरां गतिमंगीकुर्वताऽसंख्य-पादाहतोत्थितधूलिघनघटाभिः दिक्चक्रवालमिवाऽऽच्छादयता, गगन-वितानमकालवर्षाघनमेदुरितमिव मार्तंडमंडलमसमयास्तंगतमिव सर्ग-मेकमहाभूतमयमिव कुर्वता, तुमुलेन कोलाहलेन, कर्णरंध्राणीव दिग्गजानां विदारयता, दुर्वहेण भारेण भूमंडलमिव कंपयता, स्वेन वलेन सहाग्रे सर्तुं प्राक्रमत – तथा तथा तस्याः सा संमोहावस्था.-छिन्नमूलेव धूम्या – स्वयमेव क्षेतुमारभत।

प्रबोध्यमानेव च तामस्याः निद्रायाः केनचित् – प्रावर्तत सा शनैः शनैरनुभवितुमावश्यकतां निःशब्दस्य संघट्टितस्य तीव्रतर-वेगस्याभिषेणनस्य।

अनुभूय तु तां यावदाज्ञापयति हस्तिपकं स्वमुपसारयितुं वशां वशां सेनामुखेऽभिक्रममाणस्य धूसरिततया धूम्राह्वस्य दुर्लक्ष्य-प्रायस्यापि प्रस्फुरत्पताकासंसूच्यमानावस्थानस्य पितुः समीपे – तावदवलोकयामास पार्ष्णितः प्रभंजनवेगेनाऽऽगच्छतां फेनिलघोटकाऽऽ-रूढानां धूलिधूसरितसर्वांगानां प्रस्वेदक्लिन्नवेषाणामारक्तनयनानां शुष्यन्मुखानां सैंधवानां. केषांचित् संहतिं प्रसह्य कृत्वा मार्गमनी-किनीमध्यात् सिंधुराजं समुपसर्पन्तीं, क्षणमात्रानन्तरं च राजछत्र-धारिणीं करिणीं मार्गाक्रमणाद्विरमन्तीम्।

'किं न खलु सहसा समापतितं स्यात्' – इति चिंतया समुद्विग्ना समुपसारितधेनुका चाऽविदत वार्त्तां व्यग्रान्महाबलाधि-कृतात् समुपसृष्टात् यद्विशाला खलु यवनसेना, शिविरप्रदेशकटकात् प्रस्थिताऽद्य – गगनमध्याद्दुःखभरेणेव निपतिते दिनकरे–

अगणेयैरुडुपैः नदीप्रवाहं तर्तुमुद्यता, तीरनिरीक्षकैः सैंधवैस्तैः परिलक्षितेति ।

यावच्च सा सहसाऽनुमिमीते 'यदयमेव नूनं मुख्यः प्रहारो यवनस्य, अत्रैव विजित्यास्मान् खलु स आचिक्रंसते समीपस्थां राजधानीं, अतोऽत्रैव सः प्रतिरोद्धव्यः परिवर्त्य सर्वामपि सेनां दक्षिणाभिमुखामिति', अनुमाय चैवं प्रवर्तते तातं तथाऽनुरोद्धुं – तावदशृणोत् तं निश्चयकर्कशया वाण्याऽऽज्ञापयन्तमश्वसादिबहुलां कश्मीरसेनां स्वसैन्यमध्यात् पृथग्भूय उदीच्याभिमुखं तत्क्षणमेव व्रजितुं, निरुध्य च यवनसेनां तीर एव नद्यास्तां विनाशयितुम् ।

अपश्यच्चाचरेव तं पुनः प्रतिष्ठमानं पितृपतिदिगभिमुखम् ।

एवं निमेषमात्रं विचिन्त्य, विनिश्चित्याऽऽत्मनैवोदीच्यं यवनाक्रमणं गौणं, संप्रेष्य च कश्मीरसैन्यं तत्प्रतिरोधाय यथापूर्वं प्रचलितोऽपि सिंधुराज आरभताचिरादेवानुभवितुं संदेहवृश्चिकदंशान् मर्मदाहकान् – 'शिविप्रदेशनिवेशात् प्रस्थितमुत्तरितुं नदीप्रवाहं प्रयतमानं यवनस्येदं सैन्यं न प्रधानमित्यत्र किं नाम विनिगमकम् ? किं च – निरुद्धदुर्गपरिसरात् प्रचलितं पौरस्त्ये नदीतीरे कृतपदं न गौणमित्यत्र ?···· वंचयित्वाऽस्मान् कृतकेनाभिनिर्याणेन दाक्षिणात्येनापसार्य चैवं नः राजधानीपरिसरात् निष्प्रतिरोधमेव किं विजिगीषते राजधानीं यवनः ?···· अत्याहितम् ! तथा सति त्वहं, रिपोराक्रमणव्यूहं वास्तविकं प्रावकलयितुं लेशतोऽप्यसमर्थो विभक्तबलः स्वमूलस्थानादात्मनैव निष्कासितः, सामरिकदृष्ट्या सर्वथा प्रतिकूले स्थाने यवनेनाऽऽक्रांतः, पंकमग्न– किंकर्तव्यविमूढ – वृकवृंदलुंच्यमानगजराज इव सर्वेषां हास्यास्पदं भविष्यामि !···· किं नु खलु करिष्यामि'– इति ।

साधु खलूक्तं – 'संशयात्मा विनश्यति' – इति ।

विनिश्चेतुमपारयन् हि राजा दहरः, सहसा संक्षीणोत्साहभरोऽचिरादेवापारयतीव तस्य मनोदौर्बल्यं साक्षात्कर्तुं पश्चिमां-

बुनिधौ निमज्ज्यादर्शनं याते सहस्रकिरणे, मार्गपतितस्य दुर्भाग्यं स्वमनुशोचन्त्याः सिंधुराज्यश्रियः निरंतराभिरश्रुधाराभिरापूरितस्येव नैदाघेऽपि काले पयोबहुलस्य प्राक्कलयित्वेव भाविनीं विपदं जलपक्षिभिः परित्यक्तस्य निश्चलस्य विशालस्य, विदीर्णस्य भारतभुवः हृदयस्येव, कस्यचित् सरसो दक्षिणे तीरे रात्रिविश्रामार्थं किल बलं स्वमादिदेश ।

यावच्च तदवलोकयति विमनस्को धेनुकारूढ एव दावानलवत् सर्वत्र प्रसृतामुदीचीनाक्रमणवार्त्तां निशम्य विस्मितं पार्ष्णिप्रहारभीत्या व्याकुलं कथंचिदपि संनिवेशमुपगच्छत् तावद्ददर्श तमोदुर्लक्ष्यविशेषाद्दक्षिणक्षितिजात् सरभसमुपयान्तं तिमिरखंडमिवैकं जंगमतामुपगतं वर्मितानां कौंतिकानामश्वसादिनां समूहम् । शुश्राव च तन्मुख्यात् सत्वरमुपसृतादवनतादन्यतमवज्रपातसंनिभां वार्त्तां यत् – व्यतीत एवाहनि, प्रकटयितुमिव तद्दुश्चेष्टितमुदयाचलमारोहति भगवति विवस्वति, संख्यातीताः नैस्त्रिंशिका यवनसैनिकास्तदश्वाश्च पारसीका, अतलस्पृशः सागरतलादुत्थितैः सविपजलजंतुकलेवरैरिवासंख्यैः कृष्णवर्णैः प्लवैः सिंधुसागरात् नदीमुखं प्रवेशितास्तस्याः पौरस्त्ये तीरेऽवतारिता, अविलंबमेव संनह्योदीच्यभिमुखं प्रस्थिताश्च देवलपत्तनपरिसरस्थितैश्चारैः संसूचिता इति ।

निशम्य वार्त्तामिमां समुपसृत्य पितुः समीप उदीच्यस्य यावनस्याऽऽक्रमणस्य विपयेऽभिप्रायं स्वं निवेदयितुं प्रवृत्तकल्पा राजदारिकापि विस्मयविमूढेवाभवत्, अभजच्च – निष्क्रियतामात्मघातिकामसहमानाऽपि – मौनमेव । का पुनः कथा दुर्बलचित्तस्य कृतांतदृष्टस्य तत्पितुः ? स तु – भ्रांतचित्त इव गलितगात्र इव – विलुप्तधैर्य इव – अक्षमः किंचिदपि विनिश्चेतुं – कूर्म इवावगूरणभीतः, जरन्मृग इवाऽऽखेटकपरिवेष्ट्यमानः, अतिवयसा विशीर्णपक्षतिः कपोत इव व्याधत्रस्तः, संहृत्य सर्वाण्यंगानि, असहाय इव यवनप्रहारमेवानपेक्षितदिशं प्रतीक्षितुमारभत ।

न केवलः सिंधुराजः। अपि तु सकला एव तस्य योद्धारः। न केवला योद्धारः। अपि तु संकटानभिज्ञा गजा अपि, तुरगा अपि – सर्व एव कृतांतमुखगर्तप्रविष्टमिवाऽऽत्मानं निरुच्छ्वासं, भयेन ब्रह्मांडव्यापिना निष्पीडितसारमिवाऽऽत्मानमसारं भावयन्तोऽगतिकाः संत्रासेन सर्वंकषेण व्याकुलतां परामनुभवितुमारभन्त।

अयं स तेषां संत्रासः, प्रहरमात्रजीर्णायां तस्यां तमिस्रायां, सहसा प्रवृत्तैर्गगनादिवाधःपतितानां भूतलादिवोत्थितानां दिक्चक्रवालादिव समागतानां व्यूढकंकटानां कौंतिकानां यवनानामश्वसादिनां तडिच्चपलैराक्रमणैः, स्वल्पकालिकैरपि तीव्रसंवेगैः, कदाचिदुदीच्यैः, कदाचिद्दाक्षिणात्यैः, क्षुद्रैरपि व्याकुलत्वान्मनसो भ्रांतत्वात् संविदो विषण्णत्वाच्चेतसोऽत्युरुवैः, प्रतिकलं वर्धमानैः, कोटीमेतावतीं समपद्यत यद्वराकास्ते शुष्यन्मुखाः ज्वलन्नयनाः स्विन्नगात्राः, स्कंधावारैकदेशे शृंखलितानां तंद्रिलानामनुभूय सहसा कुंतक्षतीः मर्मभेदिनीरुत्तेजितानां समुत्खायाऽऽलानानि सबृंहितं स्वैरं धावमानानां व्याकुलानां स्वगजानामेव तीक्ष्णैः रदनैर्विदीर्यमाणाः पादैर्मृद्यमानाः शुंडादंडैरुत्क्षिप्यमाणा, असंख्यानां स्यंदनानां युगंधरेभ्यो विमोच्य कटके तत्र तत्र विश्रामार्थं संनिधापितानां प्राक्कलयित्वेव भाविनीं विपदमादित एवाशांतानामनुभूयाकस्माद्विशिखहतीः क्षुभितानां त्रुटित्वा बंधनानि सहेषमुत्पुच्छमाकुलाकुलं प्रधावतां रथ्यानां पादैस्ताड्यमानाः, स्थाने स्थानेऽभ्युच्चितानां कृतांतदृक्क्षेपैरिवाकस्मादापतितैरग्निमुखैरजिह्मगैः दीपितानां सधूममुच्चत्स्फुलिंगं प्रज्वलतां घासोच्चयानां प्रकाशे क्षणदृष्टैः लोहकवचाऽऽवृतसर्वांगैरसिततुरगाधिरूढैः निःशब्दैर्यवनैः सह योद्धुं प्रयतमाना अपि क्षणमात्रानन्तरं दिगन्तव्यापिनि सूचिभेद्ये तमसि विलीनेषु तेषु शून्य एव शरसंधानं कुंतक्षेपमसिप्रहारं कुर्वन्तमात्मानमुपलभ्य कुंठिताः, निवेशे तत्र तत्र भूमौ लुठतः करुणकरुणं क्रंदतः लोहितलोहितदेहान् क्षतविक्षतान् सहयोधान् समवलोक्य निराशा, विधातारमक्षणदायाः क्षणदायास्तस्या अवसानमेव केवलं याचितुमारभन्त।

अशक्नुवन्निव तेषां वराकाणां याचनां तां दीनामवधीरयितुमधिकतरं, विधाता समस्विनीं तां तमीं कथमपि निरास्यत्। प्रावेशयच्च पूर्वदिगंगणे भगवन्तं विवस्वन्तमनिच्छन्तमपि साक्षात्कर्तुं सिंधुराजमारणं विधिविधानमुल्लंघयितुमसमर्थं, सांद्रेण रजःपटलेनान्तरिक्षव्यापकेनान्तर्धायाऽऽत्मानं वियन्मार्गमाक्रमितुं प्रवृत्तम्।

# अष्टमः परिच्छेदः

दुर्दमनीया खलु प्राणिनां जिजीविषा ।

अन्धकारेण सह हि शनैः शनैरक्षयत् सैन्धवानां सैनिकानां सन्त्रासः । प्रभया सह च प्रभाकरस्य प्रावर्द्धत प्रत्ययः । स्मारं स्मारं नैशीं यातनां संक्रुद्धाः, आरक्तनयनाः, क्षणिकमपि विश्रांतिसुखमवधीरयन्तस्ते समारुह्य घोटकान् प्रजविनो मार्गयितुमभ्यासादनकुशलान् यवनसैनिकान् दिक्षु सर्वासु प्रतस्थिरे । येतिरे च प्राणान् पणीकृत्य प्रहरपर्यन्तम् । न पुनर्लेभिरे साफल्यं स्वल्पमपि । प्रत्याववृतिरे च स्वं कटकं निराशाः, क्षणमेकं विभावयन्तो नैशीं यातनां समुद्भ्रान्तचित्तमात्रनिर्मितां, क्षणमन्यं च निश्चिन्वन्तस्तासां याथार्थ्यं समवलोक्य कटकभूमौ सर्वत्र विकीर्णान् क्षतविक्षतान् कुणपान्, सर्वत्राऽऽकुलाकुलं भ्रमतः लोहितक्लिन्नप्रोथान् ह्रेषमाणान् तुरङ्गमान्, चिक्षालयिषया नु क्षतानां कासारामस्यवतीर्णान् मुद्रितनेत्रान् गजान्, भस्मावशेषांश्च घासोच्चयान् अशक्नुवन्त समाकलयितुं परिपन्थिमनोगतं विस्मयमानमानसाः ।

अत्यल्पमिदमुक्तम् । नानुभवद्वृद्धः सिन्धुराजः न तस्य प्रथमो महाबलाधिकृतः न ज्यायान् धीसचिवो वा — का कथा

किशोरस्य जयसिंहस्य – राजदारिकैव केवला शशाक प्रारंभत एव समाकलयितुं दुर्हृदं दुर्हृद्गतम् ।

सा हि – निशामुखे सहसा प्रवृत्तैर्द्विपत आक्रमणैश्च किताऽपि, पर्यवस्थाप्याऽऽत्मानं तेषां प्रतिरोधाय बद्धपरिकराऽपि, समारुह्य कर्क विद्युल्लतेव सर्वत्र भ्रमंत्यपि, नैराश्यगर्ते निपततः स्वसैनिकान् समुद्धरन्त्यपि – स्मरन्ती सततं वज्रेणानुभूतचराणि रिपोस्तानि मरुदेशचेष्टितानि – क्षणमेकमपि न समदिग्ध यत् 'द्विपत एतानि समाक्रमणानि सैंधवमनोबलचिक्षिणिपामात्रप्रेरितानि, तस्य मुख्यः प्रहारः – स तु – श्व एव भविष्यति' – इति ।

अत एव – सा निशाचरानिव निशया सहादर्शनमात्यंतिकं गतान्, मार्गयित्वाऽप्यसकृत् पुनरलब्धान् यवनसैनिकान् समाकर्ण्य न लेशतोऽपि व्यस्मयत । अपि तु – श्रांताऽपि, तिरस्कृत्य विश्रांतिसुखं, प्रतिक्षणं प्रत्यासीदतः परिपंथिप्रहारस्य प्रखरतमप्रभावस्य प्रतिरोधाय पृतनां स्वां संनद्धां कर्तुं तेनैवाभिनिवेशेन प्राक्रमत । अलभत तु साफल्यमांशिकमेव । अतीतायां रजन्यां निमेषमात्रमपि निमिषितुं नयनेऽसमर्थः, श्रमातुरो, दिवंगतस्य पुत्रकल्पस्य वज्रबाहोरेव वारं वारं स्मरन्, खिन्नस्तस्याः पिता राजा दाहरः, सर्वथाऽननुभूतसदृशेन नैशेन द्विपद आक्रमणेन विस्मितो महाबलाधिकृतो वाऽवसानमेव कूटाक्रमणानां महत् सौभाग्यं मन्यमानः नैव मनस्यकरोत् तस्याः साग्रहमनुरोधम् । किं पुनः क्षतविक्षताः छिन्नखड्गा हतहयाःक्लांता विश्रमितुं प्रवृत्ताः सैनिकाः ? ते हि तस्यास्तामवधारणां दुराशंका-मात्रोद्भूतामभन्यन्त । असकृश्रुता एव च तया क्षणमात्रमपि क्षांतिमपरित्यजन्त्या युवराजेन जयसिंहेन सिंहशावकेनेव कैशोर्येऽपि रिपुमर्दनेन धीसचिवेन च श्रांतेनापि सावधानेन विमनस्कतयैव रणसंनहने प्रावर्तत ।

इयं सा तेषां विमनस्कता क्षणमात्र एव व्यलीयतात्यंतं – समवलोकयितुमिव भाविनं तेषां संग्राममभूतपूर्वसदृशं गगनस्य

मध्यमध्यारोहति, जागरयितुमिव तान् तंद्राया आत्मघातिन्याः करैः स्वैः निशितशरखरैः ललाटंतपति भगवति मरीचिमालिनि, सूचयितुमिव तान् द्विषत्संपातं तडित्तीव्रं प्रतीपं वहति सवेगं सोष्मणि मातरिश्वनि – समवलोक्य सहसा धूलिधूसरिते वियदंगणेऽन्तकदिशोऽनवरतं समापतत, उपर्येव स्कंधावारस्यैकत्रभवतः, विस्तार्य पक्षान् कृतांतकटाक्षकृष्णान् कदाचिन्मंदं संडीयमानान् कदाचित् सवेगमवडीयमानान् क्षणमात्रानन्तरमेव पुनरुड्डीयमानान् नैकदाऽपि भूमावतरतो गृध्रान्, – आघ्राय सहसा सर्वतः प्रसरन्तमज्ञातप्रभवमुदग्रमभिभवन्तमिवोद्वमयन्तमिव वसामांसासृक्पूतिगंधं, — निरीक्ष्य च सहसा सुदूरे दक्षिणक्षितिजेऽकस्मादुदितां पूर्वापरदिगंतप्रसृतां सांद्रां धूलिघटाम् ।

उदैच्च तत्स्थानेऽनिर्वर्णनीया काऽपि मनोदशा – समाकर्ण्य समुत्तुंगमहीरुहाधिरूढेभ्यश्चतुर्दिगवलोकनव्यापृतेभ्यः सैनिकेभ्य आवेशतीव्रां घोषणां 'आगतः·········आगत' इति ।

'आगतः·········आगतः' आरभन्त एकस्वरमाक्रोष्टुं ते सैनिकाः स्वं स्वं गजं तुरगं रथमभियियासवः, स्वं स्वं खड्गं शरासनं कुंतं परशुवधं तोमरं मुद्गरं परिघं परिजिघृक्षवः, स्वं स्वं कवचं परिधित्सव आकुलाकुलाः ।

'आगतः·········आगतः' आरभन्त एकस्वरं बृंहितुं तेषां वारणाः समुत्तेजिताः ।

'आगतः·········आगतः' आरभन्त एकस्वरं ह्रेषितुं तेषां तुरंगमाश्चंचलाः ।

'आगतः·········आगतः' आरभन्त एकस्वरं विरावितुं परिडीयमाना गृध्रा गृध्नवः ।

'आगतः·········आगतः' आरभन्त एकस्वरं जल्पितुं दश दिशः क्षुभिताः ।

प्रवलतमा नूनं प्राणिनां जिजीविषा ।

ये हि योद्धारोऽसकृत् प्रेरिता एव राजदारिकया राजकुमारेण धीसचिवेन वा समरसंनहने स्वात्मानं प्रायुंजत कथंचित्ते समवलोक्य सुदूरे दक्षिणक्षितिजे दृग्गोचरीभवन्तीं प्रतिक्षणं च सांद्रतरीभवन्तीं पंक्तिमसंख्यानां यमदूतानामिव यवनसैनिकानां, शक्त्याऽतिमानुष्या कयाचिच्चालिता इव विद्युद्वेगेन प्रतीकारकर्मणि प्रावर्तन्त ।

प्रवृत्तानेव तु तानभ्याजघान दुष्प्रसहेन वेगेन – 'अल्लाहो अकबर' इति रणगर्जनयाऽतुलया दश दिशो विदारयन्ती, युगपन्निपतत्तुरगखुराघातैर्भूतलमिवाऽऽपातालं खनन्ती, योजनदीर्घाऽपरिलक्ष्यमाणान्ता, समुत्पतद्रजोघटाऽऽवृता, युगान्तवातक्षुभित-महासागरोर्मिभीषणा, समुद्यतदिनकरकरद्योतितकृतदुर्धर्षा सांद्रा सेना–अतिजवनपारसीकाऽऽरूढानां लौहकवचाऽऽवृतसर्वांगाणां लौहशिरस्त्र-त्रातमस्तकानां दुर्लक्ष्यविशेषाणां तेजोभंगायाऽऽयावर्तस्याहंयुतयाऽनार्याणां धृतानामसंख्यानां विग्रहाणामिवोदग्राणामवमर्दनाय भारतीयानां प्रकटीभूतानां तत्पातकानामिव युगसंचितानां दुःसहानामेकयंत्रचालितानामिवैकजीवाधिष्ठितानामिवैकमंत्रस्फोरितानामिव युगपत् समुपसरतां यवनानामसंख्यानाम् ।

चिंतयन्त्यामेव च संनद्धायां सशस्त्रायां सैन्यैकदेशावस्थितां करिणीं जनन्या सहाऽऽरुह्य निर्निमेषं निरुच्छ्वासमवलोकयंत्यां तस्यां सिंधुकन्यायां – 'एतत् तत् म्लेच्छबलं, यद्वदनमिव राहोः, भारतभूमंडलं जिगरिषति, पुण्यभूमौ चाऽऽसर्गप्रारंभात् प्रचलितमार्यधर्मं विनाश्य स्वं धर्मं स्थापयितुमिच्छति- ।.... अहो संश्लिष्टताऽस्याः सेनायाः ! प्रलयोर्मिरिव क्षुभितस्य महासागरस्य सूच्यग्रमात्रमप्यनिर्भिन्ना पुरः सरतीयम् ! अहो नियमबद्धताऽस्याः ! दैत्येन केनचिदेकमात्रेण प्रेर्यमाणेवेयं युगपदेव समुपसरति ! न खलु सेनेयम् ! इयं तु दग्धुमार्यसंस्कृत्युपवनं निष्प्रतिबंधमग्रे सरन्ती नारकदहनहेतिः ! अहो भिन्नताऽस्याः ! न गजयोधिनोऽस्यां, न

रथिनः नाऽपि पदातिनः। अश्वसादिन एव केवलाः। असंख्या अश्वसादिनः। दिगन्तप्रसृताः पंक्तिबद्धा अश्वसादिनः। न गजढक्काः। न पटहाः। न तूर्याः। न दुंदुभा अस्याम्।.... एक एव रणघोषः – 'अल्लाहो अकबर! अल्लाहो अकबर' इति। नोच्चावचभेदः। न हि दृश्यते दिगन्तव्यापिन्यामस्या-मेकमपि छत्रम्!....तत् किमनुकामीनः सः मुहम्मदः....कासीमसुतः.... 'सांयुगीनः' .... 'जित्वरः' नास्ति एतया सह? .... अशक्यमेतत्! स हि – आसिंधुभूस्पर्शात् प्रतिक्षणं स्वसेनया सह वर्तमानोऽस्मिन् अवसरे निधाय सेनायाः संचालनधुरं कस्मिंश्चित् सेनापतौ स्वयं कस्मिंश्चित् सर्वविधसुविधोपपन्ने स्थाने विश्राम्येदित्यशक्यमेव! तत् किं प्रवंचनार्थमस्माकं सेनायाः भ्रातृभावसंवर्द्धनार्थं वा स्वसेनाया अन्यतमसैनिक इव निर्विशेष एवाभियाति सः? .... एवमेतत्।.... एवमेतत्!.... (सविषादं) परंतु – यद्येवमेतत् – कथं तर्हि तातस्तं प्रत्यभिज्ञातुं प्रभवेत्! महती खल्वभिलाषा तातस्य – तमेवाभ्यमित्रीणं साधिक्षेपमाह्वातुं शाययितुं च चिरनिद्रां रणांगणे खड्गप्रहारेणैकेनैव। दृढं हि स विश्वसिति – लंभित एव तस्मिन् आलंभं दुर्दान्ताऽपि तस्य सेना क्षणमात्र एव प्रद्रावप्रवृत्ताऽनायासेनैव निपूदनीया स्यादिति।.... अप्रत्यभिज्ञाय तु तं कमिव लक्ष्यीकुर्यात् तातः प्रत्याक्रमणस्य? कमिव....' इति – तडिद्वेगेन पुरःप्रधावमानां चीत्कारकर्कशां सिंधुनरेशधेनुकामनुसरद्भिरुत्थाप्योत्थाप्य शुंडादंडान् सभल्लान् कर्णपीडं बृहद्भिः पुच्छदंडान् चालयद्भिरनपेक्ष्यैवाऽऽधोरणानां प्रोत्साहनं रिपुकंदनाय प्रवृत्तैरसंख्यैर्वारणैर्युगपत् प्रत्याक्रांता च क्षणमेकं स्खलिता विमूढा संत्रस्ता – महोर्मिरिव दृषद्वता रोधसा प्रतिरुद्धा – तेनैव वेगेन परिवृत्य न्यवर्तत। निवर्तमाना च सरभसं पुरःसरन्तीभिः स्वतुरगपंक्तिभिरेव निबिडाभिः संघट्टिता व्याकुलतां परां समपद्यत।

अक्षोभ्यतया दुष्प्रतिरोध्यतया च दिगन्तविश्रुतां तामेवं व्याकुलितां प्रतिरुद्धां च वीक्ष्य सैंधवसेनाऽननुभूतपूर्वसंदर्शनोत्साहेन, शौर्यं शतगुणितमिव साहसं सहस्रगुणितमिव कुर्वता, सहसाऽऽपूरिता,

सिंहनादं कर्णविदारकं कुर्वाणा, तां यवनसेनां, समाकर्ण्य तीव्रेण स्वरेण केनचित् कुतश्चित् प्रदत्तां कांचिदाज्ञां व्यावर्त्य मुखं पलायमानां, आ योजनमन्वसरत् । तिरोहितायां च तस्यां दिगन्तप्रसृतेषु सांद्रेषु रजःपटलेषु, परावर्तितपरचक्रमिव कृतकृत्यमिव विजयिनमिवाऽऽस्मानं मन्यमाना, जयजयकारेण तुमुलेन हरिदश्वाश्वानपि विचलितान् कुर्वाणा, स्कंधावारं स्वं न्यवर्तत । आरभत च विजयोत्सवम् ।

सुलभभावनोद्रेका हि वयं भारतीयाः ।

निरीक्ष्य म्लेच्छसेनाया विद्रवं नितांतमनपेक्षितं हृष्टाऽपि, विलोक्य तां दिगन्तप्रनष्टां सोत्साहाऽपि क्षणमप्यक्षममाणा विश्वसितुं तामपुनरावर्तनाय प्रपलायितां परित्यज्य च विजिगीषामात्मसंरक्षण-व्यापृतां - राजदारिका, रुधिरस्नातेन देदीप्यमानमुखारविंदेन राजकुमारेण पितृव्यसमेन धीसचिवेन च सह विहसन्नयनेन, भृशं प्रायतत, प्रतिक्षणं स्मरन्ती सिंधुसागरतीरे यवनसेनयाऽभिनीतचरस्य पलायननाटकस्य, सावेगमनुरोद्धुं न केवलं सिंधुनरेशमाहोपुरुषिका-मुखरं तन्महाबलाधिकृतं वा विजयोन्मत्तमपि तु समस्तमेव सैंधवं सैन्यं नापव्येतुममूल्यं समयं विजयोल्लासे – अपि त्वनुधावितुं तत्क्षण एव प्रपलायितां यवनसेनां, विनाशयितुं च तामेवं व्याकुलिताम-विलंबमेव ।

प्रयतमानैव चापश्यत्-न केवले दक्षिणेऽपि-तूदीच्येऽपि न केवल उदीच्येऽपि तु पश्चिमेऽपि क्षितिजे – पूर्ववदेव सहसा दृग्गोचरीभवन्तीं, प्रतिक्षणं च सांद्रतरीभवन्तीं, लेशतोऽप्यन्यूनीभूताऽऽवेशां, प्रत्युत प्रतिहिंसाभावनोदग्रतरां पंक्तिमसंख्यानां कृतांतमुखादिव प्रत्यागतानां समरांगणादिव सुप्तोत्थितानां यवनसैनिकानाम् ।

अपश्यंश्च सर्वे सैनिकाः सैंधवाः । न तु पूर्ववत् प्रावर्तन्त विद्युद्वेगेन स्वे स्वे कर्मणि । अपश्यन्नेव व्यात्तमुखं निर्निमेषं निःस्पंदं विस्मयमूढा अश्रद्दधानाः स्वदृष्टीः ।

यदि हि राजकुमारः, सहसा साक्षात्कृत्य प्राणसंकटं विनिश्चितमेवमुच्छुष्कमुखं विस्फारितनयनमवलोकन एव यापिते काले, पर्यवस्थाप्याऽऽत्मानं निमेषमात्रं, आविष्ट इव साक्षाद्रणचंड्या, समारुह्याऽऽजानेयं समीपतमवर्तिनं, समुत्क्षिप्य कुंतं स्वं, प्रतिरुरुत्सयाऽग्रे नाधाविष्यत्""र्तीह तत् समस्तमेव सैंधवं वलं, प्रतिक्षणं तडिद्वेगेन समुपसर्पन्त्या दुर्मेधया यवनसेनयाऽऽसमन्तादवरुद्धं, पृष्ठतस्तडागेनापारेण निरुद्धं, विस्मयस्तिमितमेव, यथावस्थितमेव, निष्प्रतिरोधमेव, दलितं, मर्दितं, पिष्टं, मांसकीकसवसासृक्सर एवाभविष्यद्भीषणम् ।

अवलोक्य तु युवराजं, सिंहशावकमिव दृष्ट्वा गजयूथं संक्रुद्धमेकलमेवाभिक्रममाणं, तन्मोहमुक्तमिव प्रत्यागतप्राणमिव प्रस्फुटितचैतन्यमिव निमेषमात्र एव समरायोद्यतमर्द्धवृत्ताकारेण समुपसर्पन्त्या द्विषत्सेनायाः प्रतिचिकीर्षया तथैव प्रत्यधावत् ।

प्रावर्तत च पणीकृत्य प्राणान् तां भेत्तुं, भित्त्वा वलयितुं, वलयित्वा दलयितुमश्ववारकान् यवनान् ।

उद्देशेनानेन च प्रायतत प्रयोक्तुं स्वं द्विरदबलम् ।

न त्वलभत साफल्यम् ।

यवनसेना हि, प्रारंभिकेनानुभवेन विदग्धतरा, स्वयमेव प्रावर्तत विद्युद्वेगेन वलयितुं स्वैस्तुरगैः वलयित्वा च खंडयितुं तीक्ष्णैः मर्मभेदकैः कुंतक्षेपैराक्रमणोद्यतान् सैंधवान् गजान् – एकैकशः ।

अलभत च साफल्यं कल्पनातीतम् ।

चपलतरा हि यवनानां प्रशिक्षिताः पारसीकाः – प्रयतमानानामेवाकुलाकुलं वहिर्निर्गन्तुं तेषां गजानां – पाठीना इव

जलपतितान् मांसपिंडान् – तान् परिवव्रुः । कृतांतकटाक्षा इव कुंतक्षेपाश्च तान् विभिदुः ।

भिद्यमानाश्चैवं सैंधवा द्विरदा, वेदनया तीव्रया व्याकुलाः, सहसा परावृत्ताः, क्रोधोन्मत्तं चीत्कुर्वन्तः, पलायमानाः, स्वानुगामिनः रथान् अजस्रान् बभञ्जुः । रथिकान् ममर्दुः । तुरगान् भाययामासुः । पदातिनश्च पिपिषुः ।

एवं स्वैरेव गजैरकस्मादाक्रांताः सैंधवाः स्यंदनारोहा अश्ववाराः पादातिकाश्च व्याकुला, विस्मृत्य द्विषत्प्रतीकारमात्मरक्षायै केवलायै व्याकुला, दिग्भ्रांता इव किंकर्तव्यविमूढा इव, – कृष्णपिपीलिका इव समुत्ताप्यमानपिठरस्था, – इतस्ततो दधावुः । बभूवुश्च लक्ष्यमनायासमेव निर्विरोधमन्तःप्रविशतामतिचपलैः प्रासैस्तडिद्भिर्भैः खड्गैः कृतांतकटाक्षानिव वर्षतां, निःशब्दानां, यमदूतानामिव सहस्रशः धृत्वा पार्थिवान् देहान् समवतीर्णानां यवनसैनिकानाम् ।

द्वे पर्णैरसंख्यैरश्ववारैरावृतामपि, निरंतरं क्षिप्यमाणैः प्रासैः क्षतविक्षतकलेवरामपि किंचिदप्यविचलितामुत्क्षिप्योत्क्षिप्य कुंतं निशिताग्रं शुंडाग्रधृतं प्रतिक्षणं प्रत्याक्रममाणां वशामारूढा, समुत्पतद्रुधिरधारार्द्रतनुत्रा, प्रक्षिप्तयवनकुंतच्यावितशिरस्त्रा, विलुलितालकपाशा, दुर्गेवाऽसुराणां कुंतप्रक्षेपैर्मर्मभेदकैर्विद्युच्चपलैर्यवनानां संहारे व्यापृता, राजदारिका च, लंबितेवावधानं नैराश्येन पश्चिमाचले हठाद्विनिपात्याऽऽत्मानं विचूर्णयितुमिव प्रवृत्तेन सहस्रकिरणेन म्लानैः स्वकरैः संस्पृश्य, ददर्श, एवं प्रयाते प्रतिक्षणभयंकरतरे प्रहरे, दिगन्तप्रसृते तस्मिन् समरांगणे समुत्पतत्पांसुपटलधूसरितेऽपि प्रसरत्सायंसंध्यारागोद्भासितविशेषे समुच्चरत्करुणक्रंदननिनादिते सर्वत्र निश्चेष्टं पतितान् संख्यातीतान् स्वपदिकान्, वेदनातिशयेन लोठमानान् स्वरथिकान्, निगृह्याऽऽत्मानं विकीर्णेषु भग्नरथावशेषेषु क्षेप्तुं यदृच्छालब्धान् प्रासान् अश्ववारेषु रिपोः प्रयतमानान्

विनष्टशरासनान् स्वधानुष्कान्, तत्र तत्र निपतितान् क्षतजक्लिन्नान् महाप्रमाणानयूपानिव घृतबहुलान् क्रव्याददेवभोगार्थं नियत्या यत्किंचित्कारिण्या कल्पितान् द्विरदकलेवरान् ।

ददर्श सहसाऽसंख्यान् लेशतोऽप्यक्षतशरीरान् रणांगणे सद्यःप्रविष्टानिव सोत्साहान् यवनान् अश्ववारान्, समादिष्टान् तीव्रेण स्वरेण केनचित्, दुःसहवेगं समुपसर्पतः पितरं पूर्ववदेव वशारूढं पूर्ववदेव निर्भयं पूर्ववदेव युद्धयमानं परंतु गल्लक्षतप्रवहत्-क्षतजक्लिन्नकवचं परिभ्रष्टशीर्षण्यं विनष्टपताकं च्युतछत्रं, परिवेष्टय-तश्चैकाकिनं तं निष्प्रतिरोधम् ।

ददर्श सहसा पंचशताधिकान् वर्मितान् उदग्रान् तुरगारोहान् समुद्धृतकुंतान्, निर्दिष्टान् तेनैव तीव्रेण स्वरेण, सपदि प्रचलितान्, रणांगणप्रांतेऽवस्थितां धेनुकारूढां निर्निमेषं दष्टाधरं प्रकंपितगात्रमव-लोकमानां पतिप्राणसंकटं प्रतिक्षणं घनतरीभवत् व्याकुलां प्रभ्रष्ट-शिरोंऽशुकां प्रस्वेदधाराऽऽमृष्टसौभाग्यतिलकां पुत्तलिकाप्राय-परिचारिकापरिवृतां मातरं समुद्दिश्य ।

ददर्श सहसाऽवलोक्य समुपसर्पतस्तान् यमदूतान् शुद्धान्त-परिचारिकागणात् समुत्थितमार्तमाक्रोशमाकर्ण्य प्रक्षुब्धं, सिंहमिव सिंहीपरिरक्षणायोद्यतं गर्जन्तं, समुद्यतभल्लं, विभिद्य निबिडमपि द्विपत्तुरगबलयं साहाय्यार्थं प्रचलितं, अकस्मादापतितैरग्निमुखैः रिपुमार्गणैः प्रज्वालितं स्वं कुथमनुभूय चकितायाः क्षणमात्रं विमूढाया अविलंबमेव कासारं पार्श्ववर्तिनं समुद्दिश्य प्रधावितायाः प्रविश्याऽम्भसि शमयित्वाऽऽस्तरणं बहिरागतायाः सक्ष्वेडं सशुंडोत्क्षेपं तमेव स्वामिन्य-धिष्ठितं रणांगणभागमुद्दिश्य प्रचलितायाः, सहसा निपतिताभ्यां केनापि कृतहस्तेन यवनेन व्यापारिताभ्यां विषाक्ताभ्यां मार्गणाभ्यामीषिकयोर्विद्धाया, अंधाया, वेदनाविह्वलायाः, करुणकरुणं चीत्कुर्वत्या, अवलोकयितुं तत्पीडामक्षमेणेव, सहसा पुरः समुपसृतेन, महाप्रमाणकृष्णतुरगाधिरूढेन बलिष्ठेनोर्जस्वलेनोरसिलेनाऽऽजानु-

वाहुना केनचित् लोहकवचाऽऽवृतसर्वांगतया नातिलक्ष्यविशेषेणाप्य-प्रत्याख्येयप्रभावेणाप्यमित्रीणेनोरसि निखातेन दीर्घदीर्घेण कुंतेन वेदनाक्रदंष्ट्राया विमोचिताया, भूमौ पतन्त्याः स्ववशाया उत्पत्याश्वमेकं झटित्यधिरोहन्तं, पुरः प्रचलन्तं, दृष्ट्वा स्वामिनं वशाया उत्पतन्तं विभिद्य द्विपद्वलयं प्रसह्याग्रे सरन्तं तमनुयान्तं पृष्ठतः प्रक्षिप्तेन भल्लेन केनचिदपसारितशिरस्त्रं पार्श्वतः प्रहृतेन करवालेन केनचिद्विदारितमस्तकं पुष्पमिव वृंताल्लूनमश्वात् सहसा निपतन्तं महाबलाधिकृतं वीरभद्रं बालसखमभिन्नहृदयमप्यपरिलक्षयन्तं, निरीक्ष्य तमेवमप्रतिहतगतिं क्षणमात्रं विस्मयस्तब्धेनेव कौतुकनिश्चलेनेवापरस्मिन्नेव क्षणे पुरःसारिततुरगेण तेनैवाश्ववारेण – सैनिकपरिवृतेनाप्येकाकिनेव भासमानेन – मध्येमार्गमेव प्रतिरुरुत्स्यमानं – अप्रतिरुद्धगतिं – प्रत्युत समुत्क्षिप्य कौक्षेयकं वामेन हस्तेन तमेव प्रहर्तुं प्रवर्तमानं, समवलोक्यैव काममपि स्वतुरगखलीनावलग्नां चकितं, अपराद्धप्रहारं, निमेषान्तर एवाश्वसादिना तेन लेशतोऽप्यविचलितेन समुत्क्षिप्य कृतांतकटाक्षकुटिलं खड्गं ग्रीवायामाहतं, विमस्तकं, विमस्तकमेव क्षणमात्रं तुरगे यथापूर्वं प्रधावमानेऽवस्थितं, समुद्वेल्लद्रुधिरप्रवाहं धृतकौक्षेयकमेव च तस्मात् रणभूमौ निपतन्तं…पितरम् !

ददर्श साक्षात्कृत्य सिंधुराजनिहननं सहसा स्तंभित इव निरुद्धनिःश्वास इव निर्वाते भरतभूदुर्भाग्येनेव मूर्तिमताऽवतमसाऽऽक्रांते समरांगणे तस्मिन् सहसा निनादितां वृद्धस्य धीसचिवस्य ब्रह्मदत्तस्य प्रत्युत्पन्नमतेराज्ञामावेगकर्कशां निशम्य झटिति परिवृत्य मुखं वेगेन तीव्रेण पलायमानां समरांगणात् संतमसाच्छन्नतया दुर्लक्ष्यविशेषाद्-वसामांसासृक्पिच्छलात् स्वां वशाम् ।

ददर्श…पृष्ठत एव वेगेनानुसरतः, निविडतया तमसोऽलक्ष्यप्रायान्, निःशब्दान् – अवयवानिव चराचरव्यापिनस्तमिस्रस्य

सहसा सचेष्टान् – पुंजानिव शोकस्याऽचिरंसयाऽनुधावतः कतिपयान् गजान् ।

ददर्श च---व्यावृत्तमुखा---प्रतिक्षणं दूरीभवत्, यवनजयघोष-निनादितं, सद्यःप्रज्वालितासंख्ययवनालातोद्भासितं, विकटं निर्नतिपोः प्रेताधिपस्य रंगस्थलमिव भीषणं, रणस्थलं – रक्षणाय मातृभूमेः हुतप्राणस्य वृद्धस्य स्वजनकस्य वसामांसासृक्कर्दमे निमग्नेन मस्तकेन, नृत्यत्सपत्नसैनिकपादपीड्यमानेन कबंधेन च भूषितम् ।

## नवमः परिच्छेदः

दिगन्तव्यापिना नभःस्पृशा तमसाऽऽवृतेन, भूगर्भमध्ययायिनैव दुर्लक्ष्यविशेषेण, मार्गेण सवेगमुह्यमाना, बधिरेवांधेव, नावेत् सा चिरायाऽऽत्मानं पुत्तलिकावत् निश्चलमुपविष्टं, निर्निमेषया दृशा शून्यशून्यया पुर अवलोकयन्तं, निशीथसमीरोद्धूयमानविमुक्तकेशपाशं हास्तिकं वा निःशब्दमनुगच्छत् ।

तमेव भीषणं घटनाक्रमं पुनः पुनः घटमानमिव प्रतिक्षणमपश्यत् ।

विलुप्तचेतनेवान्वभवन्न तु पितृप्रमापणशोकम् ।

अविदितयापितयामैव चाद्राक्षीत्, लंभितेव संज्ञाभासं दृक्पथेऽवतीर्णेन प्रतिक्षणं समीपतरमिवोपसर्पता सधूमं ज्वलता क्षीणेन केनचिदलातेन, स्वात्मानं, कैशोर्ये कदाचिन्मृगयाप्रसंगेन तातेन सह दृष्टचरं, अंधकाराऽऽवृततया दावानलदग्धक्षुपावृतखंडितप्राकारतया जर्जरितमहाद्वारतया नीरवतया निर्जनतयाऽश्रीकतया मृतमिव प्रेतदेशीयमिव पैशाचमिव भासमानं, स्थलदुर्गं रौरवाभिधं वेगेनोपसरन्तं, तन्महाद्वारे निष्कपाटे प्रेतमुख इव सदा व्यात्तेऽवतरन्तं वशायाः, प्रविशन्तमाभ्यन्तरे प्रांगणे विरूढशुष्कतृणाच्छन्नविस्तरे

गुल्फलुरःस्थाननिबद्धोभयपार्श्वं, समुपविशन्तं स्वीकृत्य पुरःसरतः श्रांतस्य धीसचिवस्य निःशब्दानभ्यर्थनां प्रांगणैकदेशप्ररूढस्यात्युन्नत-शिखरस्योन्नमय्य शिरांसि निःशब्दमवलोकयत इव रिपुचेष्टितानि प्रतशाखामरस्य प्रसार्य भुजानभयमिव ददतः शरणागतेभ्यो, मंदनिशीथसमीरप्रकंप्यमानपर्णसंभारस्य सहशोकेन प्रचलदोष्ठपुटस्येव प्राचीनस्याश्वत्थस्य महास्कंधस्येव मूले – सहानुजेनापनीततनुत्रेण निष्प्रभेणाऽऽरक्तनयनेन, कनीयस्या भगिन्या 'सततरुदितोच्छून-नयनया', मात्रा विगलितकेशपाशया प्रमृष्टसौभाग्यतिलकया प्रभ्रष्टशिरोंऽशुकया विनष्टग्रैवेयकया वेदनातिशयवशादवशपाऽऽत्मनः परिचारिकया कयाचिद्हस्ते धृत्वा नीयमानया, नीरवैश्चाधोमुखैः रक्तरंजितकवचैरनावृतमस्तकैरुच्चावचैरधिकारिभिश्चावशिष्टैः।

समुपविश्य च निःशब्दं प्रतीक्षमाणं किमपि।

अपश्यच्च, व्यतीत एवं प्रहरार्द्धे, एकमश्वसादं यवनवेषं वस्त्रावगुंठितं किमपि निधिमिव महार्हं वामेन हस्तेनोद्वहन्तं, महाद्वारेणान्तः प्रविशन्तं, समवलोक्य भर्तृपरिवारं भूतलोपविष्टं मसंभ्रममश्वादवरोहन्तं, सह तेन वस्तुना धीसचिवं – अपेक्षमाणमिव तदागमनं प्रतिक्षणं दृष्ट्वा तमागतं झटिति-समुत्थितं – प्रत्युपसरन्तं, ददतं महताऽऽदरेण तस्मै तद्वस्तु, धीसचिवं गृहीत्वा तत् ससंमानं प्रत्यागच्छन्तं, युवराजं जयसिंहं समुपसरन्तं, निवेदयन्तमिव तस्मै किमपि मंद्रेण स्वरेण, समर्पयन्तं तस्मै तद्वस्तु व्यपनीय तदावरणं, भ्रातरं यंत्रचालितमिव निःसंज्ञं तत् स्वीकुर्वाणं, क्षणमेकं निरीक्ष्य तन्निर्निमेषया दृशा ददतं तत् तस्यै, स्वात्मानं तत् स्वीकुर्वन्तं प्रसारिताभ्यां यंत्रचालिताभ्यां कराभ्यां, लोकमानं च भावशून्यया दृशा।

-अलोकत च सहसा तस्मिन् नितान्तमनपेक्षितमेकदेशज्वल-दलातप्रकाशितवामभागं , विलुलितपीतधवलविरलालकमाश्यान-गल्लक्षतं, क्षतजारक्तश्मश्रु विवक्षयेव संदिदक्षयेवार्द्धोन्मीलितौष्ठपुटं

विच्छिन्नकंठनालमर्द्धमीलिताभ्यां स्थिराभ्यां नयनाभ्यां प्रतिलोकमानमिव — पितुर्मुखम्।

निमज्जितेव प्रसह्य शोकसागरे गभीरतमे तेन – नितान्तमनभिज्ञा सहसा निष्कंपदलस्य परिहर्तुमिव तस्या भावतंद्राया भंगं निश्चलस्याश्वत्थस्य, मंदतरीभूतगतेः सदागतेः, सर्वथाऽपारयन्तीनामिव साक्षात्कर्तुं तस्या दयनीयामवस्थां नभोंऽगणादपसरन्तीनां तारकाणां, नितान्तमक्षमतया द्रष्टुं तच्छोकमधोमुखं निःशब्दमुपविष्टानां राजपुरुषाणामुच्चावचानां – निरुद्धनिःश्वासा – तत् – बाल्ये सकौतुकं कैशोर्ये साभिमानं यौवने सानुक्रोश दृष्टचरं, विलोक्य तस्यास्तास्ता बाल्यक्रीडाः कदाचित् हर्षोत्फुल्लं, समवलोक्य जित्वा राज्यकंटकान् तांस्तान् दाक्षिणात्यान् सामंतव्रवान् प्रत्यागतां स्वां सेनां कदाचिदभिमानदीप्तं, समनुभूय भयानकां परचक्रघटां तडिद्वेगं समापतन्तीं चिताम्लानं – ध्यायन्ती नावेत् प्रांगणकोणं समुद्दिश्य प्रतिष्ठमानं धीसचिवं ब्रह्मदत्तं, तदिंगितानुसारं तमनुगच्छन्तं स्वं भ्रातरं, समुत्थाय सहसाऽनाहूतमेव तमनुसरन्ती स्वां मातरं, समाकृष्यमाणमिव तथा स्वेन गौरवेण तां निःशब्दमनुयान्तं च राजपुरुषगणम्।

लंभितेव संज्ञाभासं धीसचिवस्य मंद्रेण शोकशुष्केण धीरगंभीरेण स्वरेण, तत् पुनरर्पयदनुजाय पुरःसमुपस्थिताय मुंडितमस्तकाय परिहितोद्गमनीयायानुपानद्धपादाय।

अपश्यच्च तत् – मुंड्यमानं केनचिन्मुंडकेन, स्नप्यमानं कदुष्णेन जलेन, अलंक्रियमाणं ललाटफलके केशरसुरभिणा लोहितचंदनेन, समापूर्यमाणं मुखबिले तुलसीदलेन भ्रात्रा, स्वीक्रियमाणं पुरःसमुपसृतया धौतमुक्तकेशपाशया सिंदूररेखांकितसीमंतया सद्यःपुनःकृतसौभाग्यतिलकभूषितभालपट्टया कज्जलाक्तनयनया धृतकुंडलया ललंतिकोद्भास्यमानपयोधरमंडलया परिहितदुकूलया मेखलाबद्धमध्यया जनन्या, सादरमुह्यमानं च तया

प्रांगणैकदेशपरिकल्पितां महतीं चितां समुद्दिश्य धीरगंभीरया गत्या प्रचलन्त्या ।

हस्ते धृत्वा समुत्थापिता च परिचारिकया कयाचित् शनैः शनैः, यंत्रचालितेव, अन्वगच्छदपश्यच्च तद्वक्षसि सुमनोमाला-विभूषिते कृत्वा चितां तामधिरोहन्तीं, सस्नेहं क्रोडे कृत्वा तत् चितामध्ये समुपविशन्तीं, समुन्नमय्य च दक्षिणं हस्तं प्रणामान् परितः कृतसंमर्दानां परिजनानां सैनिकानामधिकारिणां स्वीकुर्वन्तीं स्वजननीं देदीप्यमानमुखीम् ।

पश्यन्त्या एव च समुट्टंकयितुमिव तद्दृश्यं स्वहृत्पटले निर्निमेषं – युवराजः, साष्टांगं प्रणिपत्य पितरौ हव्यवाहनमारुह्य स्वर्गं जिगमिषू, प्राज्वालयच्चिताग्निं शास्त्रोक्तं विधिमनुसृत्य ।

समुत्सुक इव तौ प्रापयितुं दिव्यं लोकं, क्षणमात्रानन्तरमेव, प्रजज्वाल चिताग्निः ।

तर्जयन्निव यवनान् शिखाभिरसंख्याभिः, लिखन्निव सुरवर्त्मनि पुण्यकृत्यानि सिंधुराजस्य स्फुलिंगाभिः आववार तार्वाचिपटलैर्निर्धूमैः, ददाह च पश्यतामेव सर्वेषां मुकुलितहस्तानाम् ।

ददाह च राजदारिकायास्तंद्रावरणं सांद्रम् ।

अवरुद्ध इव तेन तावत्कालपर्यन्तं, सहसा तदन्तः उदियाय प्रगाढः शोकः ।

कन्या हि पितुः प्रियतरा । तत्रापि ज्येष्ठा । पिता च कन्यायाः । तत्राऽप्यसहायः ।

स च शोको मनस्विन्याः, निर्धूममन्तर्ज्वलन्, वहिश्चरां चेतनामिव तां वहुमन्यमानमुदारचेतसं तातं, महता प्रयत्नेन

विजित्याऽऽभ्यन्तरानहितान् स्ववशंवदीकृत्य पैतृकं राज्यं प्रजाहित-चिकीर्षयाऽनवरतं प्रयतमानं, तथा विप्रलभ्य सप्रयोजनं प्रसारिताभिः मिथ्यावार्त्ताभिराक्रम्य छद्मना, विदीर्य जनमनोबलं तत्कुलदेवता-विग्रहभंजनेन, निहत्य कपटपूर्वकं तत्पुत्रतुल्यं वज्रबाहुं वज्रपराक्रमं, वशीकृत्य तद्विद्वेषिण दाक्षिणात्यं सामंतगणं तेन तेन प्रलोभनेन, रणक्षेत्रे तथा हतवतो द्विषत आत्यंतिके द्वेषे परिणनाम ।

प्रेरयामास च तां, साक्षीकृत्य ज्वालान्तर्धापितौ पितरौ, प्रतिज्ञातुं द्विषदुन्मूलनमात्यंतिकम् ।

अभिभूता इव तत्प्रतिज्ञाप्रतापेन दुःसहेन, ज्वालास्तस्य चिताग्नेरचिरादेवाशमन् ।

आविरभवंश्च समाजयितुं वज्रसंकल्पां सिंधुकन्यां प्राच्यंगणे त्विषः काश्यपेः । जजागरुः पिप्पलशाखाविरचितनीडनिलीना विहंगमाः । न तु रुरुवुः – शोकाकुला इव । प्रसस्रुः पूर्वाचल-मनिच्छयेवाधिरोहतः प्रभाकरस्य प्रभाः । न त्वालोकयामासुः जगतीतलमपहृतप्रभा इव ।

अथ, विहायारुणाचलं गगनांगणं कथमपि प्रविशति भगवति सवितरि, धीसचिवो ब्रह्मदत्तः, समुपसृत्य राजदारिकां पाषाणखंड एकस्मिन् निश्चलमुपविष्टां मंद्रस्वरं न्यवेदयत् – 'भर्तृदारिके ! अपसरता रणांगणादतीते निशीथे मयाऽनुमाय भवदनुज्ञां त्रयः स्पशा यवनवेषधरा, विजयोन्मादेन नृत्यत्सु द्विषत्सैनिकेषु, प्रत्यर्थिनः संकल्पजिज्ञासया तत्रैव विसृष्टा आसन् । तेषां मध्यादेकोऽपसृत्य निभृतं द्विषत्स्कंधावारात् केनापि मिषेण, समारुह्य घोटकं स्थान एकस्मिन् मया गूढं संनिधापितं, सद्य एवेहाऽऽगतो । भवद्दर्शनं याचते । तमनुग्रहीतुमर्हति भवती ।"

स्वीकृत्य तदनुरोधं समुत्थिताऽनुसृत्य तं निर्जने भग्नप्राये तृणबहुले कक्ष एकस्मिन् सह भ्रात्रा कृतप्रवेशाऽपश्यदेकं घृतनिर्घन-

सैंधवग्रामीणवेषं पुरुषं धूलिधूसरितवेषम्, अध्यगच्छच्च - तस्मात् रामधिगतेनाभूतपूर्वसदृशेन विजयेन लेशतोऽप्यनाध्मातं यवनसेनापति-मनुमत्य स्वसैनिकान् समुल्लसितुं यथेच्छमानिशं, प्रातरेव, सिंधु-राजधानीविजिगीषया प्रस्थानाय कृतनिश्चयम् ।

"एवं तर्हि, तात !"— प्राह राजदारिका वृद्धं धीसचिवं – "प्रत्यूषे कृतप्रस्थानः स – एतावत्या कालकलयाऽतिक्रांतानेकयोजनोऽ-पराह्ण एव – अनुपस्थिते कस्मिंश्चित् महति प्रत्यवाये – राजधानी-मस्माकमुपरोत्स्यति । शक्ष्यति च तां – कदाचित् सिंधुराज-पतनस्याप्यनभिज्ञां – अभिज्ञामपि भयातुरां – अनातुरामपि स्वरक्षाऽ-समर्थां – प्रहरमात्रेणैव विजेतुम् ।"

"शृण्वतु भर्तृदारिका" प्राह ब्रह्मदत्तः । "मया खलु व्यतीतेऽर्धरात्रे समरभूमेरपसरता एव प्रेषित एकोऽश्ववारः राजधानीं वज्रपातसमाचारसुसूचयिषया । तत् ···· राजधानी यवनस्य प्रस्थानात् पूर्वमेव, विजित्य शोकावेगं, संयम्याऽऽत्मानं, स्वात्मरक्षार्थं संनद्धा भवेदित्यत्र न संदेहः । ···· स तु – कियत्कालपर्यन्तं साऽऽत्मानं रक्षितुं समर्था भवेदित्यत्र ।"

"आम् !"–प्रत्याह राजदारिका । "ततः (सविषण्णस्मितं) सोत्साहं साडंबरं प्रस्थितैः पराजयमेवंविधमनुत्प्रेक्षमाणैरस्माभिः गुल्मा एव कतिपयाः नगरीपरिरक्षणार्थं तत्र संनिधापिताः । ते च यवनस्या-विच्छिन्नविजयपरंपरापरिबृंहितप्रतापस्य प्रचंडवेगमाक्रमणं दिनमेक-मपि प्रतिरोद्धुं शक्ष्यन्ति – इत्यत्र मे संदेहः । ····अथवा – किं वृथा चिंतया ? ···· यद्भावि तद्भविष्यत्येव । अस्माभिस्तु प्राप्तस्य गतिश्चिंतनीया । ···· यवनोऽस्मान् राजधानीं प्रपलायितान् मन्यमानोऽ-स्मान् जिघृक्षुः, राजधानीं वा विजित्य सैंधवानां मनोबलमधिकतरं जिघांसुः – अकृत्वा खलूत्तरसिंधुविजयसंकल्पं – राजधानीमेव प्रति-रुत्सति – इत्यहो उच्छ्वासावकाशः ! कदाचित् समासन्नात् भारतीयादुदवर्षर्तोः बिभ्यत् – तत्पूर्वमेव विजिते दाक्षिणात्ये प्रदेश

आधिपत्यं स्वं दृढतरीर्तुं कृतनिश्चयोऽस्मद्राजधानीमेव स्वं प्रधानं स्कंधावारं चिकीर्षति सः । ···· कथं वा मन्यते तातः ?" — साऽपृच्छत् ।

"भर्तुः राजधानीं स्वं प्रधानं स्कंधावारं चिकीर्षति यवनः···· न वा इति तु संदिग्धम् । सामरिकदृष्ट्या हि तस्या अवस्थितिः नातिवांछनीया"— प्रत्याह ब्रह्मदत्तः । "परंतु – निपुणं तर्कितं भर्तृदारिकया यत् सः प्रावृषः प्रारंभात् प्रागेव प्राप्तस्य परिरक्षणे व्यापृतो भवेदिति । साधारणोऽपि सेनानीः सद्योविजिते परप्रदेशेऽनभ्यस्तप्राकृतिकबाधोपगमात् प्रागेव स्वमाधिपत्यं दृढतरीकर्तुं प्रवर्तेत ।"

"साधारणोऽपि च सेनानीः परविजितं स्वं प्रदेशं ···· समुपगतायामभ्यस्तप्राकृतिकबाधायां पारदास्यान्मोचयितुं प्रवर्तेत परविजितं स्वं प्रदेशं" — सोल्लुण्ठमाह राजपुत्रः ।

"परंतु ···· तदर्थं पर्याप्ता सेना रणसामग्री च आ····" प्रारभत धीसचिवः ।

"भवानपि, तात !, वीरभद्र इव परंतुवादमाश्रयितुं प्रवृत्त – इत्यहो सौभाग्यं गोभक्षकस्य" सहसा प्रत्यवदत् राजपुत्रः । "अनेनैव वादेन किंपुरुषीकृतैरस्माभिरुपायनीकृतः सैंधवस्य राज्यस्य पाश्चात्योऽर्द्धः । तस्य च – अधिपः ।"

"अदत्वाऽणीयांसमपि कादाचित्कमप्यवकाशं तादृशाम परन्तुवादाय····वयं····सिंह !····तातसंमतां परंपरागतां पद्धतिमाश्रित्य यवनं प्रतिरोद्धुं प्रयतिष्यामहे । त्रासयिष्यामहे च भवत्कल्पितामभिनवां पद्धतिमवलंब्य तं तत्पादाक्रांतेऽस्मत्प्रदेशे ।····तात !"–आह राजकन्या "परस्परोपकारिण्यौ खल्विमे पद्धती । विज्ञाय यवनं राजधानीं समुद्दिश्य प्रचलितं····वयमद्य निशामुख एवेतः प्रस्थास्यामहे पुरातनमुदीचीनमस्मत्कुलमूलावासं ब्राह्मणावासम् । विधाय च तं दुराक्रमणीयदुर्गपरिरक्षितमस्माकं प्रधानं स्कंधावारं – यदि नाम नियतिः

कारयित्वा प्रतिवार्षिकीं वर्षा रिपुं प्रतिरोत्स्यतीतः प्रचलनात् – वयं नंनाहयिष्यामहे नवीनं बलम् । ···· राज्यस्योदीचीनायाः सीमायाः प्रत्याहृतैर्युद्धनिपुणैः सैनिकैर्युद्धकलायां सद्योदीक्षितैरपि सोत्साहैर्देशभक्तैः नवीनैस्तरुणैश्च संघट्टितं तद्दुष्प्रधर्षं भविष्यतीत्यत्र न संशयः ।"

"अवशिष्टमिहत्यं बलमस्माकमस्माभिः सह ···· इतः प्रचलितं ···· वर्द्धयिष्यत्येव तस्य सामर्थ्यम्"—आह धीसचिवः ।

"अवशिष्टमिहत्यं बलमस्माकं नाऽस्माभिः सह ···· इतः प्रचलिष्यति" प्रत्याह दृढस्वरं सा । "अपि तु – विभज्याऽऽत्मानं क्षुद्रेषु गणेष्वेतस्मिन्नेव दाक्षिणात्ये प्रदेशे····तत्र तत्र समुद्व जयद्रिपुं···· अस्मान् उपकरिष्यति । कथं नु मन्यते वत्सः ?"

"संख्यया क्षुद्रा अपि प्रतिहिंसाभावनया दुष्प्रधर्षा अस्माकं सैनिकाः कृतवेषपरिवर्ताः निगूहिताऽऽयुधाः, प्रदेशेऽस्मिन् वर्षाजलप्लाविते, मरुसंभवस्य यवनस्य कृते दुःसंचारेऽपि परिचिततया स्वकृते सुसंचारे, यथेच्छं भ्रमन्तो, यथावसरं यवनगुल्मान् आक्रामन्तो, यथावकाशं तत्खाद्यादिसामग्रीं विनाशयन्तो, यथायोगं तत्सैनिकसामग्रीं लुण्ठन्तो यवनं तथा जर्जरयिष्यन्ति नूनमेभिश्चतुर्भिर्मासैः यथा उत्थिते देवे स उदीच्याः प्रस्थितायाः नवीनायाः प्रतिजिघांसोदग्राया अस्मत्सेनाया विनायासमेव जय्यो भविष्यति"—प्रत्यवदत् जयसिंहः ।

प्रत्यग्रपितृशोकसंतप्तहृदययोरपि सहसा साक्षात्कृत्याऽऽत्मानं नियुक्तं नियत्या रणनीतिनिर्धारणधुरायां किंचिदुत्तेजितयोः, प्रत्याक्रमणयोजनास्तास्ताः परिकल्पयतोस्तयोः,···· तत्तदनुभवविदग्धस्यापि परिचिततया दाक्षिणात्यानां सैंधवानां स्वभावेन परिकल्प्यमानकूटयुद्धसाफल्यविषये साशंकस्यापि नानाविधान् नवीनान् उपायान् पितृहन्तारमुन्मूलयितुं चिंतयतोः स्वामिपुत्रयोरुत्साहं भंक्तुमनिच्छुकस्य,

संकल्पैस्तयोः स्वां सहमतिं सादरं संसूचयतः, साक्षात्कृत्य तयोर्नातिवास्तविकीमपि सत्यानुकूल्ये विधेः परिणामकरीं साहसिकीं रणचातुरीं विस्मितस्यासाक्षात्कृत्यैव स्वतनुजयोस्तादृशं समरनीतिनैपुण्यं दिवंगतं वृद्धं स्वं स्वामिनमनुशोचतो वृद्धस्य ब्रह्मदत्तस्य च ···· युगदीर्घोऽपि स दिवसोऽविदितगतयाम एव व्यरंसीत्।

तेन सह च तेषां प्रतीक्षाकालोऽपि ।

अस्तं गते हि संताप्याऽप्या दिवसं यवनसेनासागरं स्वकरैः प्रचंडतापैरसंतुष्टे, गगनांगणादपगन्तुमनिच्छुकेऽपि विधिविधानं तिरस्कर्तुमक्षमे स्वात्मसंतापतापित इवाऽऽरक्तमंडले दिनकरे, प्रवहति सिंधुराज्यलक्ष्म्याः स्मारं स्मारं स्वपतिनिधनं दूयमानमानसायाः निःश्वास इव सोष्मणि मातरिश्वनि, प्रत्यागतेषु दिगन्तेभ्यः नैदाघतापसंतप्तेषु किंचिद्व्यात्तचंचूपुटेषु दीर्घंदीर्घं श्वसत्सु मनसि कृत्वेव दारुणं शोकमद्य उपविष्टानां सैंधवानां निःशब्दमेव स्वं स्वं कुलायमश्वत्थपर्णसंभारनिलीनं प्रविशत्सु विहगेषु, समुदितायामारक्ते पश्चिमदिगंगणे प्रतिपच्चंद्ररेखायां, समुपातिष्ठत् तेषां पुरतः रजस्वलश्मश्रुलवदनोऽनवरतप्रवासश्रांत · आरक्तलोचन एकोऽश्ववारकः। असुसूचच्च यवनसेनां तदहरेव प्रातः राजधानीविजिगीषया प्रस्थिताम्।

श्रुत्वैव तां वार्त्तामसहिष्णुः कालापव्ययस्य राजकन्या वचःसंकल्पा सह भ्रात्रा निरगच्छत् तस्मात् कक्षात्। अशादाभ्यंतरे प्रांगण आसमन्ताद्भस्मप्रायायाश्चितायाः समुपविष्टान् समवलोक्य सामुत्थितान् निःशब्दमवनमय्य मुखं तदाज्ञामपेक्षमाणान् सैनिकान् तदधिकारिणश्च संकल्पितं स्वं रणव्यूहम्। समाश्वासयत् तैस्तैः प्रोत्साहनपरैर्वचनैस्तान् स्वामिवंशांकुराणां प्रियदर्शनानां प्रियंवदानां प्रियंकराणां सहभावसौभाग्यं सहसा भ्रंशयदनुभूय खिन्नान्। प्रावर्तयच्च तान् स्वस्वकर्मणि।

# दशमः परिच्छेदः

प्रातिष्ठत चास्तंगतायां शशिकलायां प्रहरार्द्धजीर्णायां तमस्विन्यां तस्मात् स्थलदुर्गात्, सास्त्रं स्पृष्ट्वा शुंडादंडे शिथिले स्वधेनुकाममिन्नामिव स्वस्वामिनीप्रयाणस्य शोकाविष्टां प्रस्त्रवन्नेत्रां निश्चलां, निःशब्दमारुह्य सेवायां समुपस्थापितं जवनमश्वमेकमनुगम्यमानाऽऽजानेयाधिरुढेन पित्रस्थिकलशसनाथदक्षिणभुजेन वर्मितेन भ्राता जयसिंहेन, गंभीरमुखमुद्रेण विचारमग्नेन पितृव्यतुल्येन वृद्धेन धीसचिवेन, तुरगाधिरुढैश्च कतिपयैरंगरक्षकैः।

स्वीकृत्य चांधकारबहुलतया बहिःप्रदेशस्येपल्लक्ष्यविशेषाणां निर्निमेषया दृष्ट्याऽन्तः समुट्टंकयतामिव स्वस्वामिकुलांकुराणां मूर्तीरपुनर्दर्शनाशंकया सैनिकानां प्रणतीः, खेदविव्हलाऽपि कृत्रिमगांभीर्योदारदर्शना, प्राक्रमताऽऽक्रमितुं कुपथमुदीचीनं, पुरःप्रधावता सैनिकेनाऽऽत्तसनाथहस्तेनोपदिश्यमानमार्गा।

निबिडतया तमसो दुर्लक्ष्यप्रायेण मंदप्रकाशेनोल्मुकेनैकलेन कथंचित् प्रकाश्यमानेन निम्नोन्नतेन क्वचिद्दृषद्बहुलेन क्वचित् पांसुलेन क्वचिदन्तःप्रवहन्निर्झरमध्ययायिनाऽऽर्द्रशीतलेन क्वचिच्छर्करिलेन क्वचिदुभयपार्श्ववर्तिनिष्पर्णनिश्चलद्रुमोपरुद्धेन संकीर्णेन क्वचिद्दूरतया प्रदेशस्य निस्तृणेन विस्तृतेन क्वचित् संत्रासितोन्निद्रोत्-

पततूपतगरवनिनादितेन क्वचित् क्षुभितपरिभ्रमदौलूकदुर्गमेन दुरध्वेन तेनानवरतं प्रवसन्ती, कदाचित् यवनसंकल्पितस्याऽऽक्रमणस्य तास्ता विधास्तर्कयन्ती, कदाचित् तत्प्रतिरोधस्य तांस्तान् प्रकारान् पर्यालोचयन्ती, कदाचित् क्षुद्रस्वार्थसिसाधयिषया गोभक्षकदासतामुररीकुर्वद्भ्यो मूकादिभ्यः क्रुद्धयंती, कदाचित् कपटेन घातितं भ्रातरं वप्यबाहुं समरकलाकोविदमनुशोचन्ती, कदाचिद्विगतसायंतनं पितृवधप्रसंगं स्मृतिचक्षुषा पुनः पुनरवलोकयन्ती, कदाचित् प्राक्तनं सहमरणं मातुः स्मरन्ती, कदाचिन्निःशब्दमनुगच्छतः प्रौढिमसामयिकी सहसा संप्राप्तस्य गंभीरस्य भ्रातुः सिंहस्य द्विपदुन्मूलनविधामभिनवां विचारयन्ती, कदाचिदनुभवविदग्धस्य पितृव्यकल्पस्य धीसचिवस्य मौनकारणमनुमिन्वती, कदाचित्तावत्या कालकलया यवनेन निरुच्छ्वासमुपरुद्धाया राजधान्याः स्वसंरक्षणक्षमतां संशयाना, कदाचिद्विलोक्य स्वस्वामिवंशांकुरान् वज्रदाहावशिष्टान् साहाय्याभिलाषया चिरात् खल्वागतान् समुद्भवित्री ब्राह्मणावासवासिनां प्रतिक्रियामुत्प्रेक्षमाणा च त्रिभिर्दिनैः जाग्रत्यपि विनिद्रा, सा तमस्विनीमेव तां शनैः शनैः क्षाययत""न तु चिंतां""तामेकपदीं वा ।

प्रबोधितेव च विचारतंद्रायाः निःशब्दमुपसृतेन श्रांतेनापि सावधानेनाहर्मुखं समासन्नप्रायं संसूचयता मंद्रस्वरेण धीसचिवेन, सहसा सावधाना, व्यलोकयद् दिदृक्षयेव तत्प्रगतेः प्राच्यंगणे हरिदश्वरथं सरभसं प्रवेशयन्तं गरुडाग्रजम् । तर्कयित्वा च दिवाप्रवासमनिष्टकरं, निरचिनोदा दिवसावसानं विश्रामं तस्या एव एकपद्याः नातिदूरेऽभ्रंकषमहावृक्षपंक्तिपरिवेष्टिते स्थले शाद्वले विरुढवीरुद्दुर्लक्ष्ये । अवलोक्य च तत्रैकत्रभूतान् सैनिकान् तदश्वांश्च तत्र तत्र विश्रांतान्, समनुष्ठाय दैहिकीः क्रियाः स्वयमपि, नियुज्य कतिपयान् सैनिकान् समारुह्य वृक्षशिखराण्युच्चतमानि निरीक्षितुं गतागतानि कादाचित्कानामपि पांथानां, भ्रातुः समीप एव मृदुलहरिततृणकल्पितायां शय्यायां विश्रांता, निद्रांकेऽलीयताचिरादेव ।

जागरिता च, व्यतीतेषु क्षणकल्पेषु प्रहरेषु, लोकान्तरादिव समापतद्भिर्मंद्रैः स्नेहसिक्तैः शब्दैर्व्यलोकयत् प्रमीलालसलोचना–रजनीं

जुगुक्षयेव तत्प्रचासस्य प्रत्यर्थिपापदृष्टेः शीघ्रमेव प्रतिनिवृत्य स्वतिमिरवाससा तामाच्छादयन्तीं, प्रतिक्षणपरिस्पंदिभिरसंख्यैः नक्षत्रनयनैस्तां मातरमिव साकूतं पश्यन्तीं, पूर्णाभयदित्सयेव तां मंदपवनहस्तेन स्पृशन्तीं – स्वसमीपोपविष्टं, पुनः प्रविवत्सया संनद्धं, निर्निमेषाभ्यां लोचनाभ्यां तामेव लोचमानं भ्रातरं जयसिंहं – नातिदूर एव महतो वृक्षस्य मूल आटविकमेकमदृष्टचरं किमप्यादिशन्तं मंद्रस्वरेण धीसचिवम् – एकदेशे प्रज्वलताऽलातेनेषत्प्रकाशितान् निःशब्दं संनह्यतश्चाश्ववारान् ।

क्षणमात्रानन्तरं च प्रबुद्धा सावधाना, परिसमाप्य दैहिकीः क्रिया, आरुह्य घोटकं, प्रारभत पुनराक्रमितुं तमेव विपथम् ।

एवं निगूह्याऽस्मानं तामिस्रेणाऽऽवरणेन प्रतिनिशं प्रवसतां, परिजिहीर्षया द्विषद्दृष्टेरादिवसं गहने कांतारे मार्गपतिते विश्राम्यतां, क्षुद्रा अपि ग्रामटिकाः साभिप्रायं परिवर्जयतां, कादाचित्कानपि याहच्छिकानप्याऽऽरण्यकानपि पांथान् साशंकमवलोकयतां, प्रतियोजनं विप्रकृष्टतरमिवाऽऽत्मानं यवनग्राहग्रहात् परिकल्पयतां तेषां सप्ताह एकः युगदीर्घ इवासीत् ।

उपेक्ष्य तान् चिंतावृकः नितांतमनपेक्षितः । अनधिगम्य हि लेशतोऽपि वार्त्तां यवनप्रतिरुद्धायाः राजधान्याः, प्रतिदिनं समीपतरमुपसर्पंतामपि ब्राह्मणावासप्रदेशमभयप्रदं तेषां चेतः शनैः शनैरग्रस्यताऽऽशंकया.......अधिकाधिकमेव च पर्यभूयत खेदेन ।

विशेषतः राजदारिकायाः । रणनीतिनिर्देशं नितान्तनिष्ठुरं शिरसि कृत्वा राजधानीं स्वां – राज्यस्य मूर्तिमतीं प्रतिष्ठां – अनात्मनीनामिव परित्यज्य ( – स्याग्राम प्रबलतमप्रतिरोधसंनिनरसया –) सुदूरमुदीचीनमभयस्थानमुपसर्पन्त्यास्तस्याः कुसुममृदुलं मानसं, सापराधमिव कृपणमिव क्षुद्रमिवाऽऽत्मानं विभावयत् – शनैः शनैस्तां तथा म्लापयितुमारभत यथा धीरगंभीरो धीसचिवोऽपि,

परिलक्ष्य तस्या मनस्तापं चिताक्रांत:, संवर्द्धयितुं तस्या उत्साहसंपदं, परित्यज्य मितभाषितां, तांस्तान् संकल्पान् प्रत्याक्रमणस्य महतोत्साहेन चर्चयितुं युवराजेन सह प्राक्रमत सत्येवाऽवसरे, न खलभत वांछितं परिणामम् ।

एवं व्यतीतेषु दीर्घदीर्घेषु दशसु दिवसेषु, आ अहर्मुखं रंहसा महता प्रवहता प्रावृषेण्येन पवमानेन स्नेहावेगादिव प्रकंप्यमानानां वृक्षाणामधस्तात् विश्रांताननवरतप्रवासखिन्नान् चिताम्लानान् यंत्रचालितानिव कथमपि प्रवासार्थं संनद्धप्रायान् स्वसैनिकान् विमनस्कमवलोकमाना पाषाणशिलाखंडोपविष्टा राजदारिका सहसाऽपश्यदेकं निरीक्षकसैनिकं धृत्वा स्कंधेनैकमपरिचितं क्षामश्मश्रुलमुखं धूलिधूसरितजर्जरितपरिधानं निःशस्त्रं युवानं धीसचिवमुपयान्तं ""धीसचिवं विरम्य कार्यान्तरान्निक्षिप्य दृष्टिं तद्दिशि मंद्रेण स्वरेण पृच्छन्तं तमागन्तुकं किमपि, "" आगन्तुकं निर्जीवेनेव स्वरेण प्रत्युत्तरन्तं,"" धीसचिवं सहसा म्लानतरमुखमुद्रं गृहीत्वा तं हस्तेन तामुपसरन्तं, गदन्तं च गंभीरेणापि किंचित्प्रकंपमानेन स्वरेण – 'भर्तृदारिके ! तस्मिन् निशामुखे यवनसेनायां मया सप्रयोजनं मेलितानां स्वसैनिकामयमन्यतम:, सद्य एव संप्राप्त:, निवेदयति यद्राजधान्यस्माकं, प्रतिकूलतया प्रारब्धस्य प्रत्यर्थिन: प्रतिरोधेऽक्षमा, संप्रति तत्पददलयमाना निष्प्राणेव प्राणिति,""यवनश्च विलोड्य तामनुपलभ्य च तद्द्विपद्वंशांकुरान् क्रुद्धस्तस्मिन्नेव प्रदेशे कुत्राऽपि गूढं निलीनान् भवत उत्प्रेक्षमाणो, भवद्विभन्तसया प्रबलया प्रेर्यमाण:, सैनिकान् सर्वत्र भवद्गवेषणाय व्यापारयति, "" श्रुत्वा भर्तृदारिका प्रमाणम् ।"

राजदारिका तु समाकर्ण्य राजधानीपतनसमाचारं खिन्नाऽपि मन्यमानाऽऽत्मानं दुराशाजालनिर्मुक्तं, समुत्सुकाऽपि श्रोतुं सर्वं वृत्तान्तं सविस्तरं प्रतिशुशुत्सोदग्रा, तत्क्षणमेव निरचिनोत् ततः प्रस्थानं सह तेन वार्ताहरेण ।

प्रोष्य चाऽऽनिशमपरेद्युरधित्यकाप्ररूढस्यैकस्य महावृक्षस्य विशालशाखासंभारस्याधस्तात् क्लृप्तविश्रमा समादिश्य सैनिकमन्यतममारुह्याभ्रंलिहं तच्छिखरं निरीक्षितुं दक्षिणं क्षितिजं निवेदयितुं च तत्क्षणमेव क्षुद्रमप्याश्वं दृग्गोचरीभवत्, सह भ्रात्रा धीसचिवेन चैकस्मिन् आमते शिलापट्टे समुपविष्टा, तं संदेशहरमानाययत् । समादिशच्च तं स्ववृत्तान्तं सविस्तरं निवेदयितुम् ।

सोऽपि, पूर्ववदेव क्षामश्मश्रुलमुखोऽपि धूलिधूसरितजर्जरितवसनोऽपि वहोः कालादनन्तरं प्राप्तेन पर्याप्तेन भोजनेन प्रत्यागमितप्राण इव किंचित्स्फुरद्देहदीपदीप्तिः व्यजिज्ञपत् "भर्तृदारिके ! सुसूचयिषया यवनप्रस्थानस्य निभृतमपक्रांते मम वयस्ये, अहं भारहारछद्मना सह पृष्ठ्येनैकेन राजधानीमुद्दिश्य प्रचलितां सेनां गोभक्षकाणामनुगन्तुमुपक्रममकुर्वम् । अनभिज्ञोऽपि यवनसेनायाः सैनिकस्य दैनंदिनस्य जीवनस्य च शीघ्रमेव पर्यलक्षयमन्वभवं चाऽनुत्साहमिवानवरतं पुरः सरन्तीष्वपि दिगन्तदीर्घासु यवनाश्वारोहपरंपरासु ।"

"अशमनुवंश्च नियन्तुं जिज्ञासावेगं स्वैरमिव सहप्रवसन्तं भारिणमन्यं तत्कारणमपृच्छम् । अवेदं च तस्माद्यत् – आक्रामका खल्वतीते सायंकाले लब्धेन विजयेनोत्फुल्लाः सैंधवं राज्यं समस्तं विजितमेव मन्यमानाः रणांगणे तत्र तत्र विकीर्णां सिंधुराजपरिवारस्यापारां संपदं लुण्ठित्वाऽप्यतृप्ता दिनानि कतिचित्तत्रैव व्युष्य प्रदेशं तत्रत्यं लुण्ठितुमैच्छन् । न्यवेदयंश्च स्वामिच्छां सानुनयं स्वप्रभुखाय । स तु – लेशतोऽप्यनाध्मातः प्राप्तेन साफल्येन – कृतसंकल्पोऽदत्वा प्रत्यर्थिने स्वल्पतममप्युच्छ्वासावकाशं राजधानीमुपरोद्धुं तदहरेव, न केवलं तदनुरोधं प्रत्याख्यात्, अपि तु समादिशत् निक्षेप्तुं लुण्टितां द्विषत्संपदं सैनिके कोषागारे राजकीये । सुपरिचितास्तस्य न्यायनिष्ठुरेण समुदितेऽदसरे कृतांतकठोरेण स्वभावेन नाशकंस्तेऽवधीरयितुं तदादेशं, नाशकंस्तु पुनरुद्दीपयितुमादेशश्रवणसमकालमेव निर्वातिकल्पमुत्साहमरमिति ।"

"स च तेषां निरुत्साहः, निशाततयाऽनुशासनकुठारस्य सुनिगूहितोऽप्यन्तर्गूढघनव्यथः नातिचिरादेव नितांतमनपेक्षितया प्राकृतिकया बाधयैकया क्षोभे पर्यणम्यत। उदयगिरिशिखरमारूढ एव हि भगवान् सहस्रकिरणः प्रतिजिघांसया दुर्दमनीयया लक्ष-गुणितैरिव किरणैस्तान् तथा तापयितुं प्राक्रमतान्येद्युर्यथा ते आ जन्मनो मरुस्थलतापपरिचिता अपि गगनमग्निबाणवर्षुकमिव दिङ्मंडलमग्न्यस्त्रप्रक्षेपकमिव भूतलमंगारचितमिवोत्प्रेक्षितुमारभन्त-अनुभवितुं चाऽऽत्मानमसमर्थं करधृतान् कुंतान् पृष्ठबद्धान् लोह-फलकान् परिहितान् वारबाणान् वोढुम्।"

"स च तेषां संतापः प्राक्कलयित्वेव तपनतापमभूतपूर्व-सदृशमंतरिक्षादा प्रत्यूषादेवापसृतेन पवनेन परां काष्ठां समपद्यत। प्रस्वेदक्लिन्नसर्वांगा फेनिलमुखास्तदश्वा अचिरादेव प्रतिक्षणप्रवर्द्ध-मानपिपासाकुला व्यात्तमुखा अचिरादेव भूमौ पतितुमारभन्त। ताननु तत्सादाः। आहुता इव च नियत्या ज्वलद्भूकुंडे प्रकंपमान-हस्तपादाः लुठन्तः क्षणमात्रानन्तरं शोषितजीवनरसाः निष्प्राणा अन्तं यातनानां नारकीयाणां यातुम्।"

"उत्तप्तस्थालप्रधावत्क्षुद्रकीटकवत् प्रतिक्षणं प्राणान् परित्यजतः स्वबांधवान् वीक्ष्य सर्व एव यवनसैनिकास्तदधिकारिणश्च प्राणान्तकेन भयेनाऽऽक्रांताः निमेषाभ्यंतर एव नूनं प्राणान् स्वान्-परिजिहीर्षया वेदनानां-सुखमत्यक्ष्यन्... यदि हि तेषां सेनानीः स्तोकमप्यविचलितः ईषदप्यश्रांतः लेशतोऽप्यखिन्नो दृढतरसंकल्पो बलवत्तरतितिक्ष उन्नततरमस्तकस्तेभ्यो मानसिकं बलं स्वं न प्रादास्यत्।"

....."अहो ऊर्जस्विता तस्याभ्यमित्रीणस्य! एकाकी एव दिगंतप्रसृतं तदाश्विकं बलं स्वीयेन संकल्पबलेन केवलेन समाकर्षन् क्षणमात्रमपि नाखिद्यत। निर्मित इवाभौतिकेन केनचित् तत्त्वेन मुहूर्त-मात्रमपि नास्खलत् स्वध्येयात्।"

"का कथा तद्देशीयानां स्वधर्मप्रसारेच्छया तृणीकृत्य प्राणान् समुल्लंघ्य महासागरान् विदेशेषु तेन सह प्रवसतां सैनिकानाम् !···क्षुद्रस्वार्थसिसाधयिषाघितधियो विनष्टोभयलोकास्तत्क्रीता अस्माकं सैनिकाः काकादयस्तन्मुख्या अपि, पूर्वेद्युतनसमरसमयेऽभ्यासादनशंकया दूर एवावस्थापिताः, प्राप्ते च विजये सहप्रस्थानायानुमोदिता यवनसेनापतिना, संमोहिता इव तद्व्यक्तिमत्वेन, विनैव प्रतिवादं, समन्वगच्छन् ।"

"समवलोक्य स्वसुहृदं भगवन्तं दिनकरं विफलप्रयासं तत्साहाय्यचिकीर्षयेवाकस्मादाविरभवत् पश्चिमक्षितिजाद् भगवान् प्रभंजनः प्रभंजकवेगः ।"

"समनु च मदकला मतंगजा इव महान्तो धूसरा धूलिपटला ···असमय अवसानं गमयन्तो दिवसं, प्रसह्य समाच्छादयन्तश्चराचरं नीरंध्रेण क्षोदकंबलेन, बलादभिभवन्तो दृष्टिपथं, हठात् कारयन्तः श्वासरोधम् ।"

"निष्पिपीडयिषयेव च समस्तं तद्यावनं बलं पर्यवेष्टयन्त ।"

"तदनुगतेन विगंतप्रसृतेनाभ्रंकषेण चक्रवातेन घोरगर्जितेन प्रतिरुद्धं स्वं बलं वीक्ष्य स यवनसेनानीरपि, निरुद्धय क्षणमात्रमप्यस्खलितां स्वां गतिं, विचार्य क्षणमात्रं, विनिश्चित्य स्वयमेव, संरावेऽपि तस्मिन् रौद्रे श्राव्येण तीव्रेण स्वरेण किमप्यादिशत् ।"

"अहो संचलननैपुण्यं प्रत्यर्थिबलस्य ! श्रांतमपि भ्रांतमपि क्लांतमपि तत् श्रुत्वैव तं तस्याऽऽदेशं – एकप्राणमिव – एकचित्तमिव – निमिषमात्र एव व्यरमत् मार्गाक्रमणादुपाविशच्च प्रतिपालयितुं प्राकृतिकप्रकोपप्रशमम् ।"

"एवं – मुखं मुद्रितनयनमवनमय्य, हस्तपादं संकोच्य, स्वं स्वं तुरगं समानवृत्तं स्वसमीप एवावस्थाप्य, तितिक्षयाऽगाधयाऽ-

"स च तेषां निरुत्साहः, निशाततयाऽनुशासनकुठारस्य सुनिगूहितोऽप्यन्तर्गूढघनव्यथः नातिचिरादेव नितांतमनपेक्षितया प्राकृतिकया बाधयैकया क्षोभे पर्यणम्यत। उदयगिरिशिखरमारुढ एव हि भगवान् सहस्रकिरणः प्रतिजिघांसया दुर्दमनीयया लक्षगुणितैरिव किरणैस्तान् तथा तापयितुं प्राक्रमतान्येद्युर्यथा ते आ जन्मनो मरुस्थलतापपरिचिता अपि गगनमग्निबाणवर्षुकमिव दिङ्मंडलमन्यस्त्रप्रक्षेपकमिव भूतलमंगारचितमिवोत्प्रेक्षितुमारभन्त–अनुभवितुं चाऽऽत्मानमसमर्थं करधृतान् कुंतान् पृष्ठबद्धान् लोहफलकान् परिहितान् वारबाणान् वोढुम्।"

"स च तेषां संतापः प्राक्कलयित्वेव तपनतापमभूतपूर्वंसदृशमंतरिक्षादा प्रत्यूषादेवापसृतेन पवनेन परां काष्ठां समपद्यत। प्रस्वेदक्लिन्नसर्वांगा फेनिलमुखास्तदश्वा अचिरादेव प्रतिक्षणप्रवर्द्धमानपिपासाकुला व्यात्तमुखा अचिरादेव भूमौ पतितुमारभन्त। ताननु तत्सादाः। आहुता इव च नियत्या ज्वलद्भूकुंडे प्रकंपमानहस्तपादाः लुठन्तः क्षणमात्रानन्तरं शोषितजीवनरसाः निष्प्राणा अन्तं यातनानां नारकीयाणां यातुम्।"

"उत्तप्तस्थालप्रधावत्क्षुद्रकीटकवत् प्रतिक्षणं प्राणान् परित्यजतः स्वबांधवान् वीक्ष्य सर्व एव यवनसैनिकास्तदधिकारिणश्च प्राणान्तकेन भयेनाऽऽक्रांताः निमेषाभ्यंतर एव नूनं प्राणान् स्वान्–परिजिहीर्षया वेदनानां – सुखमत्यक्ष्यन्... यदि हि तेषां सेनानीः स्तोकमप्यविचलितः ईषदप्यश्रांतः लेशतोऽप्यखिन्नो दृढतरसंकल्पो बलवत्तरतितिक्ष उन्नततरमस्तकस्तेभ्यो मानसिकं बलं स्वं न प्रादास्यत्।"

"अहो ऊर्जस्विता तस्याभ्यमित्रीणस्य! एकाकी एव दिगंतप्रसृतं तदाश्विकं बलं स्वीयेन संकल्पबलेन केवलेन समाकर्षन् क्षणमात्रमपि नाखिद्यत। निर्मित इवाभौतिकेन केनचित् तत्त्वेन मुहूर्तमात्रमपि नास्खलत् स्वध्येयात्।"

तस्मिन् जलबहुलं शाद्वलतीरप्रदेशं – बीजमिव भाविनः जलप्लावनस्य वार्षिकस्य – पुरोयायिना मूकेन निर्दिष्टं – समाससाद ।"

·····"अहो दौरात्म्यं पापस्य"···सहसा जगाद धीसचिवः ।

"क्लृप्त्वा च तत्र प्रदीर्घं विश्रामं – अपरेद्युः – अस्तंगते दिवाकरेऽनुदितेऽनिच्छावशादिव निशाकरे, ततः प्राचलत् । प्रोष्य च सवेगमन्तमुपगच्छति प्रदोष, एकस्मिन् गहनाटवीप्रदेशे न्यलीयत ।"

वसानमुपद्रवस्याऽऽधिदैविकस्य प्रतीक्षमाणस्य तस्य कल्पकल्पः कथमप्यन्तमियाय स दिवसः। तमनु संप्राप्ता च निशा। चक्रनेमिक्रमेण तामन्वागतो दिवसोऽपरः।"

"न तु नैसर्गिकः सः क्षोभः·····आक्रामकसत्त्वपरीचिक्षिपयेव दुर्दमनीयया प्रेर्यमाणः।"

·····"श्रांत इव त्ववसादमायात् परिणते तस्मिन्नप्यहनि। क्लांत इव व्यरमत् वहनात् गंधवहः। वैफल्यजडा इव न्यपतन् भूमौ धूलिपटलाः। प्रसन्नमिवावलोक्य यवनस्य धैर्यमपारं निर्मलमभवदन्तरिक्षम्। दिदृक्षयेव तत्कुशलस्य गगनांगणेऽवातरत् नक्षत्रमंडलम्। अनुतापकोमल इव मंदं मंदं वातुमारभत निशामुखसमीरणः।

"संकल्प इव धीरस्य, व्यपगत इव प्रत्यवाये, सहसोदतिष्ठत् स यवनसेनाध्यक्षः। उन्नततरमस्तको विशालतरवक्षःकपाटश्च पूर्ववदेव तीव्रेण स्वरेण किमप्यादिशत्।"

"आदेशसमकालमेव च सहाऽऽश्वेन समुत्थितं तस्य बलमेकचित्तमिव व्यपनीय तनुत्रमनावृत्य मस्तकं याचकभावेन जानुभ्यां भूमौ गतं हस्तौ प्रसार्य – तमनु – जगत्पितरं बहु मन्तुमारभत गद्गदस्वरं·····कृतज्ञम्।"

"निशम्य तस्य तां प्रार्थनामेकस्वरामेकाऽऽरोहाऽऽवरोहां, निरीक्ष्य तस्य तदाश्वमप्यवनतमुखं निश्चलं नीरवम् – अहमपि कौतुकाविष्टोऽभवम्। का पुनर्वार्ता मूकादेर्देशद्रोहिवृंदस्य ?"

"समाप्य प्रार्थनामुत्थितं, प्रवृद्धधैर्यमिव च स्वं नायकमनुसरत्, तत्, यथापूर्वमारभत प्रवासम्। आक्रम्य च योजनानि कतिपयानि, दूरेमार्गमवस्थितं दुरापमेकं सरोवरं – निदाघांतेऽपि

तस्मिन् जलबहुलं शाद्वलतीरप्रदेशं – बीजमिव भाविनः जलप्लावनस्य वार्षिकस्य – पुरोयायिना मूकेन निर्दिष्टं – समाससाद ।"

....."अहो दौरात्म्यं पापस्य"....सहसा जगाद धीसचिवः ।

"क्लृप्त्वा च तत्र प्रदीर्घं विश्रामं – अपरेद्युः – अस्तंगते दिवाकरेऽनुदितेऽनिच्छावशादिव निशाकरे, ततः प्राचलत् । प्रोष्य च सवेगमन्तमुपगच्छति प्रदोष, एकस्मिन् गहनाटवीप्रदेशे न्यलीयत ।"

# एकादशः परिच्छेदः

"किमधुना चिकीर्षति द्विपन् – इति विस्मयमान एवाहमपश्यं पंचाशदधिकान् यवनान् स्वस्वतुरगेभ्योऽवतरतः, समुत्सृज्य प्रासान् छुरिकाः स्वीकुर्वतः, नरापसदेन मूकेनोपदिश्यमानं दुरध्वमनुसरतः, नातिदूरेऽटवीमध्यवर्तिनि खंडितप्राये देवतायतन एकस्मिन् प्रविशतः, क्रमशोऽदर्शनं च गच्छतः।"

"न त्वद्युण्वंताननुगन्तुं रहस्यभेदभिया।"

"तर्कवितर्ककर्दमे निमज्जनोन्मज्जनेऽनुभवन्नेव च साक्षादकरवं, व्यतीते प्रहरमात्रे, तद्द्विपद्बलं, प्राप्यैव प्रत्याशितं कमपि गूढं संकेतं, सहसा प्रचलत्, निःशब्दमग्रे सरत्, अटव्याः निर्गच्छत्, निराशंकमिव समुपसर्पच्च सद्यो दृष्टिपथेऽवतीर्णस्य, तिमिराऽऽवृततया दुर्लक्ष्यप्रायविशेषस्य, समासन्नं वज्रप्रहारं समुत्प्रेक्ष्य भयविमूढस्येव स्तब्धस्य, दिवंगतं स्वामिनमनुशोचन्त्या राज्यश्रिया परित्यक्तस्येव निःश्रीकस्य, समाकर्ण्य परप्रसरणवार्त्तां भयाकुलैर्नागरिकैरुज्झितस्येव निर्जनस्य, यियाचिषयेव दैव्याः साहाय्यसंपदः नभःस्पृशः, राजधानीमहाप्राकारस्य दक्षिणं द्वारं — उरसि कर्तुमिव तत् व्यात्तम्।"

"पश्यत्येव च मयि हतभाग्येऽपारयति विश्वसितुं स्वदृष्टिं— प्राविशत् तदन्तः। समुल्लंघ्य च द्वारमार्ग एव इतस्ततः निपतितान् निःशस्त्रान् निष्कवचान् रक्तरक्तान् शवान् द्वाररक्षकाणां सैनिकानामारभत स्वागतमिव कर्तुं मध्येमार्गं सह तैः पंचाशदधिकैः सैनिकैरुपस्थितस्य हर्षोत्फुल्लमुखमुद्रस्य मूकस्य निःशब्दान् निर्देशाननुसृत्य प्रसर्तुं प्राकारान्तःप्रसृतासु रथ्योपरथ्यासु, प्रहर्तुं समाकर्ण्य तमनपेक्षितं शब्दं निःशस्त्रमेव बहिरागतानवलोक्य साक्षाद्यमदूतानिव तान् विस्मयमूढान् भयेन कांदिशीकान् नागरिकान्, समुपसर्तुं च मंदयाऽपि दुष्प्रतिरोध्यया गत्या राजधानी-केंद्रवर्तिनं राजप्रासादम्।"

"सहसा चान्वभवदन्तरिक्षादिव पतन्तीं बृहद्दृषद्वृष्टिम्। 'कुतः खल्वियम्' इति विस्मयमानं चोर्ध्वदृष्टि यावदवलोकयत्य-भ्रंलिहस्य प्राकारस्य शिखरेऽभिवृष्य पाषाणान् जुगुप्सया पलायमानान् नगररक्षकान् तावदशृणोत् तमेव तीव्रं स्वरं किमप्यादिशन्तम्। तत्प्रेरितं च श्रवणसमकालमेवाऽऽत्मानं व्यभजदनेकेषु गणेषु।"

"तेषां मध्यात्—केचन निर्गत्य दक्षिणात् महाद्वारा-दारुह्याऽऽश्वं द्वाराण्यन्यानि समुद्दिश्य प्रधावितुमारभन्त, केचन वर्मिताः लोहफलकहस्ताः प्रासिकाः पुरः प्रसृतेन दुर्दैविनः जीवितेनेव शून्यशून्येन राजमार्गेण लक्ष्यीकृत्य राजप्रासादं स्वस्वतुरगान् प्रेरयितुं-केचन व्यूढकंकटाः सछुरिकाः पदिका एव—यथापूर्वं परंतु सवेगं— उपरथ्यासु प्रसर्तुं, समुपस्थिते क्षुद्रेऽपि प्रतिरोधे सामंतिकेषु गृहेषु प्रसह्य प्रवेष्टुं, स्वगृहरिरक्षिषयाऽग्रे सरतः निःशस्त्रप्रायान् पुरुषान्, गृहकोणेषु निलीनान् पितृप्रतिघातनं भयविस्फारितेक्षणमवलोकयत-स्तदात्मजान्, अनुनिनीषया पुरः सावेगं समुपसर्पतः सप्रणाम-मनुरुन्धतः साश्रुनयनकमलान् तद्दारान् प्रहन्तुं लुण्ठितुं च यथेच्छं तत्संपदः।"

"एवं यवनैः परमकुटिलैः निर्दयैः मर्मस्थानेषु तेषु तेषु युगपत् समाक्रम्यमाणा सा महानगरी – नारीव काचित् विषकीटकगणैरसंख्येयु तेषु तेषु सुकोमलेष्ववयवेषु युगपत् संदश्यमाना – वेदनाव्याकुला हृदयविदारकैश्चीत्कारैः करुणकरुणैर्विलापैश्च निन्दितुमिव स्वानि भाग्यान्यारभत ।"

"शृण्वन्नेव च तत् परिदेवन सहसाऽपश्यं हर्म्यमालिकाव्यवधापितोद्गमस्थलं, प्रस्फुटितादिव हृदयाद्राजधान्याः समुद्गच्छन्तमभ्रलिहज्वालाजिह्वं निर्धूमं धूमकेतुं भणन्तमिव किंचिच्चटचटामिषेण । प्रयतमान एव च निर्द्धारयितु तदुत्पत्तिमूलमशृणवमुद्गारमेकस्य नागरिकस्य सहसा गृहान्निर्गत्य क्षणमात्रं दृष्टिमुन्नमय्य ज्वलनं तमवलोक्य पलायमानस्य – 'अहो ! दग्धः''''दग्धः राजकुलपुरोहितस्य प्रासाद' – इति ।"

''''"राजकुलपुरोहितस्य प्रासादः ? '''' किं नामापराद्धं स्यात् तातेन पापानां गोभक्षकाणाम् ?" – उज्जगाद राजकुमार उच्छुष्कस्वरः ।

"तत्वहं कर्णोपकर्णिकयैवाजानामन्येद्युः" – प्रत्यवदत् स वार्त्ताहर । "यदा खल्वाततायिनः निहत्य राजप्रासादमहाद्वाररक्षकान्, प्रविश्याऽभ्यन्तरे प्रांगणेऽकुतोभया यथेच्छं विचरन्तस्तेषु तेषु विशालेषु कक्षेषु विनाशयन्तस्तानि तानि दुर्लभानि भित्तिचित्राणि दहन्तः लेखाभांडाराणि सहेलमपहरन्तो बहुमूल्यानि क्षौमाणि लुण्ठन्तो दुर्लभानि रत्नाभरणानि शुद्धान्तर्वर्ति राजकुलदेवतामंदिरमुपसस्रुस्तदाऽवलोकयामासुस्तत्र देवताचरणारविंदयोः समीपे निश्चलमवस्थितमाराध्यदेवतामुखकमलनिबद्धनयनं जपस्फुरदोष्ठमुद्रं राजकुलपुरोहितम् । विजयोन्मत्ताश्चोच्चैर्विहसन्तस्तदवमीमांसिपया दुर्दमनीयया प्रेर्यमाणा अपशब्दमुखराः निष्ठिवुस्तदिष्टदेवताविग्रहं ताडयामासुश्च तं पादैः ।"

·····"अत्याहितम्"·····उज्जगाद राजदारिका ।

"विप्रवरेण्यस्तु तादृशं परिभवमाराध्यदेवताया असहमानः कोपातिरेकवेपमानः ज्वलन्नयन उपविष्ट एव जग्राह सहसा समीपवर्ति सौवर्णं नीराजनाभांडं, प्रजहार च तेनाऽऽततायिनमेनम् ।"

"लेशतोऽप्यक्षतमप्येवमपमानितं स्वसहृयोद्धारमवेक्ष्य क्रोध-प्रचंडास्ते नराधमाः निरर्गलं प्रलपन्तः क्षणान्तर एवं तं द्विजवरं हस्तेन चकर्षुः, पादेन ताडयामासुः, प्रासेन वक्षसि निरावरणे चख्नुः, खड्गेन ग्रीवां चिच्छिदुः, रक्तरक्तं तन्मस्तकं पादेन मंदिरप्रांगणे चिक्षिपुः । तावताऽप्यशांतकोपाश्च बहिरागता मूकानुजीविना केनचित् पापेन विनिर्दिष्टं तत्प्रासादमन्तर्निलीनपरिवारं वेष्टुः ।"

"प्रज्वालिता इव तेन प्रचंडेन ज्वलनेनान्येऽपि ज्वलनाः नगर्यां तत्र तत्राचिरादेवाऽऽविर्बभूवुः । वेष्टयामासुश्च तां – पलायमानानामेव कांदिशीकानां पौराणाम् ।"

"एतादृशस्तु निर्घृणोऽत्याचारः म्लेच्छेनानुष्ठित आसीद्देवलनगर्यामेव, नान्यत्र ।····· तत् किं नामापकृतं स्यात् वराकया राजधान्या तस्य·····यत् स दानव इव·····इत्थं·····तां भस्मावशेषां कर्तुं परिकरमबध्नात् ?"–सखेदमाह धीसचिवः ।

"बहु नामापकृतं तया तस्य । प्रतिगृहं गवेषितयाऽपि तया न समर्पितः राजकुमारः, नोपायनीकृता राजदारिका तस्य । न वा संसूचिता तयोः संभाव्याऽवस्थितिः", प्रत्युवाच स वार्त्तायनः ।

"यदा त्वन्विष्याऽपि प्रतिगेहं नालभत विपक्षवंशांकुरानवशिष्टान् तदा स यवनसेनानीः आज्ञयाऽनुल्लंघनीयया व्यरीरमत् स्वं बलं नागरिकप्रपीडनात् । समादिशच्च तद्गवेषयितुं तान् आसमन्तिके जानपदे प्रदेशे ।"

"प्रहरमात्रान्तरं च, तत्, निक्षिप्याद्र्धमृतां नगरीं तां हस्तेषु कतिपयानां सैनिकगणानां, निर्गत्य चतुर्भ्यो महाद्वारेभ्य, आरभत प्रसर्तुं चतुर्दिक्षु ग्रामीणेषु प्रदेशेषु मार्गयितुमत्रभवतः।"

"न त्वशकत् तथाऽनुष्ठातुम्। अपरेद्युरेव हि – देवलपत्तनात् सरभसं समापतितादवार्त्तायनादधिगम्य समाचारं सिंधुप्रदेशान्तः-प्रविविक्षया सवेगं सागरं नैदाघतापतप्तमतिक्रमतः, समुद्दिश्य सिंधुभुवं यावनेभ्यो देशेभ्यः प्लवमानान् सैनिकपोतान् कोलानिव विनायासमेव पुरःसारयतः, सागर उत्ताने तत्र तत्रावस्थाय प्रसार्य चाऽऽनायं यथेच्छ कालं यापयतां कैवर्तानां कोलान् सावहेलमिवानव-रतसमुद्भवत्समुत्तुंगफेनिलकल्लोलशिखरेषु दिदृक्षयेव दिगन्तलक्ष्याणां जलदानां जलभारमंथराणां गगनमध्यमारोढुं प्रयतमानेषूद्वहतो, यवनसेनानुचिकीर्षयेव, बृहदाकाराणां, विद्युदुन्मेषमिषेण सावलेपं पश्यतां, रसितछद्मना साधिक्षेपं तर्जयतां बलाहकानां सेनयाऽपारया सह भारतभुवमुपरोद्धुं प्रवृत्तस्य, प्रावृषेण्यस्य प्रभंजनस्य प्रादुर्भावस्य सावधानेन – संभाव्य भारतीयां प्रावृषमासन्नप्रायां विचारमग्नेन – संप्रधार्य स्वात्मनैव – 'दुरुत्तार्यतया महासागरस्य प्रावृट्प्रक्षोभितस्य विरतेषु मातृभुव इहाऽऽगमनादस्माकं पोतेषु सैनिकसंकुलेषु रणसामग्री-भारमंथरेषु, निजदेशमार्गमवरुद्धमाकलय्याशांतस्वान्तेषु निजसाम-र्थ्यमात्रसहायेषु, जलप्लावितयाऽस्य प्रदेशस्य सर्वस्य स्थानबद्ध-मिवाऽऽत्मानमनुभूयास्वस्थचित्तेष्वननुभूतचराऽऽसारसंत्रासितेष्वस्माकं सैनिकेषु च – एते कापटिकाः सैंधवा, आजन्मनः परिचिता जलद-कालेन, स्तोकमप्यनुद्विग्ना, योजनशतविस्तृतेऽस्मिन् प्रदेशे तत्र तत्र विकीर्णा अस्माकं पृतनाः नियतमुद्वेजयिष्यन्ति । .... तन्मन्ये – संयम्योदीचीनस्य भागस्य विजिगीषां स्वाधिपत्यमेव विजिते दक्षिणे भागे दृढतरीकुर्वता मया, भाविन आक्रमणस्य योजनां परिकल्पयता, प्रतिपालयितव्य एव वर्षान्त इति मनसि स्थिरीकृतवताऽपि, समीप एव बद्धांजलिपुटमवनमितपूर्वकायमधोनयनं संतिष्ठतां मूकादीनां सचितमिव संमतिं पृच्छता – अनुभूय तादृशमप्रत्याशितं दुर्लभं बहुमानं संभ्रान्तानां गर्वोत्फुल्लानां तेषां 'सत्येव प्रतिपक्षे

पराजयदिग्भ्रांतेऽराजकतामापन्नेऽवशिष्टः प्रदेशः स्वामिनः कृते विनायासमेव जय्यो वर्षाकालेऽपि' इति प्रतिपादकं मतमाकर्ण्य लेशतोऽपि स्वनिश्चयादविचलितेन – तदध्यक्षेण – समादिष्टं प्रत्यागतं विभज्याऽऽत्मानं तासु तासु वाहिनीषु यथादेशं निरूढस्वस्तिमदादि-दुर्गाणि विजिते प्रदेशे तत्र तत्र विद्यमानानि सामरिकदृष्ट्या महत्त्व-पूर्णानि च स्थानानि समुद्दिश्य प्रचलितुमारभत सवेगम् ।"

"अहमप्यधन्यो दृष्टादर्शनीयः श्रुताश्रोतव्यः परिलुप्त-जिजीविषोऽपि स्वामिन आदेशमवज्ञातुमसमर्थ, एतत्कुसमाचार-निविवेदिषया प्रेर्यमाणः, संरंभे तस्मिन् निभृतं ततः प्रस्थितो, भिक्षुकछद्मना प्रवसन्, यवनचमूनामपकर्षणान्निर्विघ्नयात्रः, स्वामि-सेवायामुपस्थितोऽस्मि ।"

विनिवेद्य चैवं घर्घरस्वर उच्छुष्कतालुः क्लांतलोचनो मौनमभजत । तत्कथां करुणकरुणां – निरुद्धगति – शृण्वन् सदागतिरपि तच्छोकभारभुग्न इव मंदं मंदं गन्तुमारभत । भगवान् प्रभाकरश्च निशम्य तं वृत्तान्तं स्मारित इव प्राक्तनस्य स्वप्रयत्न-नैष्फल्यस्य निष्प्रभः, अवजुगुप्सयेवाऽऽत्मनः सत्वरं यातुमस्ताचलम् ।

अमाय सैंधवहृदयेष्वसंख्येषु बहिरुत्प्लवमानेन नैराश्ये-नेवावतमसेन सांध्येन शनैः शनैः समाक्रम्यमाणं भूमंडलमवेक्ष्याथ राजदारिका शोकसागरादतलादात्मानं कथंचिदुदधरत्, प्रावर्तयद-नागतचिंतायां, विचिंत्य च यवनभयं शरत्कालपर्यन्तं विप्रकृष्टं निरचिनोत् तत्रैव थापयित्वा प्राप्तकल्पां यामिनीं पुनरारब्धुं *यात्रामपरेद्युः समाक्रमितुं चाध्वानमुदीचीनं तत ऊर्ध्वमहर्निशं* ब्राह्मणावासं समुद्दिश्य ।

एवं सुनिगूह्यान्तःक्षोभं धीरगंभीरया मुखमुद्रया तत्तत्कर्मणि प्रवृत्ता तु यदा पर्यवस्थाप्य स्वानुयायिदलं नैशविश्रामार्थं स्वात्मान-

मपि तृणशय्यायां स्वापाय किलापातयत् तदा पतितमात्रैवाऽऽ-रभतात्मानं पुनरपि शोकसागरेऽगाधे निमज्जन्तमनुभवितुम् ।

दृढं प्रयतमानाऽपि नाशकत् व्यावर्तयितुं स्वस्मृतिचक्षुरा-बाल्यात् परिचितायाः राजधान्यास्तेषां तेषां प्रियस्थलानां पुनर्दर्शनात्, स्वं कल्पनानेत्रं वा तद्विध्वंसस्यावलोकनात् ..... विशेषतः राज-प्रासादस्य ..... तत्रापि राजकुलदेवतायतनस्य ..... तत्रापि तद्विराजि-तस्येष्टदेवताविग्रहस्य ।

अलक्षयदात्मानं ध्यायन्तं – अवलोकयन्तमिव साक्षात् – तं विप्रवरेण्यं राजकुलपुरोहितमाशैशवात् परिचितं, बाल्याद्बहुमानितं, कैशोर्यात् संमानितं, धौतधवलवाससं, भस्मचर्चितललाटपट्टं, वयसाऽनतिवृद्धमपि चिताभरेणेवावनमितोत्तमांगं, ब्राह्मतेजोभासुरमपि निस्तेजस्कमिव भासमानं, निरासक्तचेतसमपि व्याकुलमिव दृश्यमान-मनुत्सुकानीव पदानि क्षिपन्तं मंत्रणागृहं समुद्दिश्यावलोक्य तां स्खलितपदक्षेपं, मंद्रया गिरा राजप्राणघातकग्रहयोगं तस्यै निवेदयन्तं, शृण्वन्तं तदनुरोधं साग्रहमधोनयनमनिच्छयेव स्वीकुर्वन्तं तदाग्रहमग्रे सरन्तं राजदिदृक्षया, प्रस्थानसमये बहु मानयित्वा राजानं मंगल-तिलकेनाऽऽभ्यन्तरराजप्रासादप्रांगणैकदेशे मूर्तिवदवस्थितं, निर्निमेषया भावतीव्रया दृशा हृत्फलके चित्रयन्तमिव प्रस्थितं राजपरिवार-मपुनर्दर्शनाशंकया, राजकुलदेवताचरणारविंदसांनिध्यात् पापैः कलिदानवैरपकृष्यमाणं, ताड्यमानं, वक्षसि विदीर्यमाणं, ग्रीवायां छिद्यमानम् ।

रुदत्येव च सहसाऽन्वभवत् मस्तके विलुलितनिःस्नेहरूक्ष-केशपाशे स्नेहेनापारेण मुहुर्मुहुः परामृशन्तमतिपरिचितं कमपि करतलम्। उन्मील्य च नयने सततरुदितोच्छून आरक्त आसमन्ताद्-व्यापारयन्ती ददर्श समीप एव समुपविष्टमेकदेशज्वलदलात-प्रकाश्यमानविलुलितपीतधवलविरलालकमाश्यानगल्लक्षतं क्षतजा-रक्तश्मश्रुजालमसृग्लोहितकवचमर्द्धमीलिताभ्यां सास्राभ्यां म्लानाभ्यां लोचनाभ्यां तामेव प्रतिलोकमानं, परिचितमप्यपरिचितमिव भासमानं पितरम्।

यावच्च प्रेरयते समन्तादृशं विस्फारितेक्षणां विस्मयते चावलोक्य समीप एव निद्रितं भ्रातरं नातिदूर एव शयितं च धीसखिं स्तोकमप्यविचलितं तावदशृणोत् पितुः खेदघर्घरां वाचं – 'मा बिभीहि तात ! ···· मा बिभीहि। अहं खलु तव तातः। तव हतभाग्यः पिता। त्वयैव सह, तात, एतावत्कालपर्यन्तमवर्ते जयसमीपवर्तिनः ···· तस्य ···· तस्यास्थिकलशस्य माध्यमेन। वर्तिष्ये च ···· इतः परमपि ; विसृष्टेऽपि तस्मिन् जयेन कस्यांचित् सरिति यवनसंस्पर्शादूषितायाम्। वर्तिष्य एव। ···· त्वं हि मम ज्येष्ठमपत्यम्। ज्येष्ठः पुत्र। ···· अतःपरं, दिवंगते हि वत्से वीरभद्रे मयि च त्वमेव स्वैकमात्रमालंबनं जयस्य समस्तस्य वा सिंधुराज्यस्य। तन्नियम्य शोकावेगं विजित्य नैराश्यभावं बधान परिकरं पापानामुच्छेदनाय···· मातृभुवः रक्षणाय। मा विरम प्रयत्नेभ्यः। एकं तु संरक्ष व्ययी-कृत्याऽपि प्राणान् ···· स्वशीलम्। गृहाण तात ! रत्नमेतत्। तव जनन्या दत्तमेतत्। ···· एतद्धि चूर्णितमवलीढं च सद्य एव पारं सर्वासां विपदां युवां प्रापयितुं क्षमम्। परंतु ···· एतच्छस्त्रं युवाभ्यां शीलरक्षणायैव ग्रहीतव्यम्। सति शीले सुरक्षितेऽस्माकं कन्यकाः, सिंह्य इव शृगालान्, संख्यातीतानपि रिपून् हिंसितुं समर्था इति हि घोषति भारतीय इतिहासः। तन्मा वृथा कुरु साक्ष्यमैतिहासिकम्। मा विरम प्रयत्नेभ्यः। सफलीभविष्यन्ति न वा तव प्रयत्ना – एतत्तु विमोचितावपि पार्थिवदेहबंधनात् न समर्थौ प्राग्द्रष्टुमावाम्। नापि

मपि तृणशय्यायां स्वापाय किलापातयत् तदा पतितमात्रैवाऽरभतात्मानं पुनरपि शोकसागरेऽगाधे निमज्जन्तमनुभवितुम् ।

दृढं प्रयतमानाऽपि नाशकत् व्यावर्तयितुं स्वस्मृतिचक्षुराबाल्यात् परिचितायाः राजधान्यास्तेषां तेषां प्रियस्थलानां पुनर्दर्शनात्, स्वं कल्पनानेत्रं वा तद्विध्वंसस्यावलोकनात् ···· विशेषतः राजप्रासादस्य ···· तत्रापि राजकुलदेवतायतनस्य ···· तत्रापि तद्विराजितस्येष्टदेवताविग्रहस्य ।

अलक्षयदात्मानं ध्यायन्तं – अवलोकयन्तमिव साक्षात् – तं विप्रवरेण्यं राजकुलपुरोहितमाशैशवात् परिचितं, बाल्याद्बहुमानितं, कैशोर्यात् संमानितं, धौतधवलवाससं, भस्मचर्चितललाटपट्टं, वयसाऽनतिवृद्धमपि चिताभरेणेवावनमितोत्तमांगं, ब्राह्मतेजोभासुरमपि निस्तेजस्कमिव भासमानं, निरासवतचेतसमपि व्याकुलमिव दृश्यमानमनुत्सुकानीव पदानि क्षिपन्तं मंत्रणागृहं समुद्दिश्यावलोक्य तां स्खलितपदक्षेपं, मंद्रया गिरा राजप्राणघातकग्रहयोगं तस्यै निवेदयन्तं, शृण्वन्तं तदनुरोधं साग्रहमधोनयनमनिच्छयेव स्वीकुर्वन्तं तदाग्रहमग्रे सरन्तं राजदिदृक्षया, प्रस्थानसमये बहु मानयित्वा राजानं मंगलतिलकेनाऽऽभ्यन्तरराजप्रासादप्रांगणैकदेशे मूर्तिवदवस्थितं, निर्निमेषया भावतीव्रया दृशा हृत्फलके चित्रयन्तमिव प्रस्थितं राजपरिवारमपुनर्दर्शनाशंकया, राजकुलदेवताचरणारविंदसांनिध्यात् पापैः कलिदानवैरपकृष्यमाणं, ताड्यमानं, वक्षसि विदीर्यमाणं, ग्रीवायां छिद्यमानम् ।

अन्वभवत् स्फोटयित्वा धैर्यबंधमुद्वेल्लितस्य शोकपूरस्याग्रदूतानिव कतिपयान् आग्नेयानिव समुत्तप्तान् लोहितानिवार्धकरान् अश्रुबिंदून् सवेगमाविर्भवतोऽन्तर्निमीलितयोः पक्ष्मपुटयोः ।

आरभत च निःशब्दं रोदितुम् ।

रुदत्येव च सहसाऽन्वभवत् मस्तके विलुलितनिःस्नेहरूक्ष-वेशपाशे स्नेहेनापारेण मुहुर्मुहुः परामृशन्तमतिपरिचितं कमपि करतलम्। उन्मील्य च नयने सततरुदितोच्छून आरक्त आसमन्ताद्-व्यापारयन्ती ददर्श समीप एव समुपविष्टमेकदेशज्वलदलात-प्रकाश्यमानविलुलितपीतधवलविरलालकमाश्यानमल्लक्षतं क्षतजा-रक्तश्मश्रुजालमसृग्लोहितकवचमर्द्धमीलिताभ्यां सास्राभ्यां क्लांताभ्यां लोचनाभ्यां तामेव प्रतिलोकमानं, परिचितमप्यपरिचितमिव भासमानं पितरम्।

यावच्च प्रेरयते समन्ताद्दृशं विस्फारितेक्षणां विस्मयते चावलोक्य समीप एव निद्रितं भ्रातरं नातिदूर एव शयितं च धीसचिवं स्तोकमप्यविचलितं तावदशृणोत् पितुः खेदघर्घरां वाचं – 'मा विमोहि तात !.... मा विमोहि। अहं खलु तव तातः। तव हतभाग्यः पिता। त्वयैव सह, तात, एतावत्कालपर्यन्तमवर्त्ते जयसमीपवर्त्तिनः .... तस्य .... तस्यास्थिकलशस्य माध्यमेन। वर्तिष्ये च .... इतः परमपि ; विसृष्टेऽपि तस्मिन् जयेन कस्यांचित् सरिति यवनसंस्पर्शाद्रूपितायाम्। वर्तिष्य एव। .... त्वं हि मम ज्येष्ठमपत्यम्। ज्येष्ठः पुत्र। .... अतःपरं, दिवंगते हि वत्से वीरभद्रे मयि च त्वमेव त्वैकमात्रमालंबनं जयस्य समस्तस्य वा सिंधुराज्यस्य। तन्नियम्य शोकावेगं विजित्य नैराश्यभावं बधान परिकरं पापानामुच्छेदनाय.... मातृभुवः रक्षणाय। मा विरम प्रयत्नेभ्यः। एकं तु संरक्ष व्ययी-कृत्यापि प्राणान् .... स्वशीलम्। गृहाण तात ! रत्नमेतत्। तव जनन्या दत्तमेतत्। .... एतद्धि चूर्णितमवलीढं च सद्य एव पारं सर्वासां विपदां युवां प्रापयितुं क्षमम्। परंतु .... एतच्छस्त्रं युवाभ्यां शीलरक्षणार्थमेव ग्रहीतव्यम्। सति शीले सुरक्षितेऽस्माकं कन्यकाः, सिंह्य इव शृगालान्, संख्यातीतानपि रिपून् हिंसितुं समर्था इति हि घोषति भारतीय इतिहासः। तन्मा वृथा कुरु साक्ष्यमैतिहासिकम्। मा विरम प्रयत्नेभ्यः। सफलीभविष्यन्ति न वा तव प्रयत्ना – एतत्तु विमोचितावपि पार्थिवदेहबंधनात् न समर्थौ प्राग्द्रष्टुमावाम्। नापि

व्याकुलौ तदर्थम् । यथाऽऽहाऽसकृदस्माकं राजकुलपुरोहितः 'कर्मण्येव' नूनं मानवस्याधिकारः । कर्मण्येव, तात !"

अद्राक्षीच्च निर्निमेषेक्षणा गदन्तमेवेत्थं परामृशन्तमेव मस्तके सस्नेहं तं विरलतां ---- पारदृश्यतामुपयान्तम् ।

क्षणमात्रं निःस्पंदमवस्थितायाः सहसा समुत्थितायाः व्यापार्य नयने विस्फारिते समन्तादवलोक्य सर्वान् पूर्ववदेव गाढ-प्रसुप्तानश्रद्दधानायाः स्वपितुराविर्भावे यदा तु तस्या दृष्टिरितस्ततो भ्रमन्ती स्वोपधानसमीप विराजमानस्य मंदेऽप्यलातप्रकाशे प्रस्फुरत-स्तस्य रत्नस्योपरि पपात तदा निमेषार्द्ध एव व्यलीयत तस्याः संशयः । उदियाय च तत्स्थाने प्रगाढो विश्वासः । तमनु दृढः संकल्पश्च । प्रसार्यैपदप्यकंपमानं हस्तं सा जग्राह तद्रत्नं सूचयदिव किमपि निमेषोन्मेषैः स्वकिरणानाम् । पीत्वा च तद्भावतीव्रया दृष्ट्या क्षणमात्रमगूहत चोलाभ्यन्तरे ।

आरभत च विनिद्रा विचारमग्ना प्रतिपालयितुमहरागमम् ।

पिपृच्छिषयेव च तीव्रया नैशस्योदंतस्य प्रेर्यमाणे प्राच्यंगणेऽ-वतीर्णे भगवति त्विषांपतौ, प्राक्रमत धीरगंभीरा दृढबद्धौष्ठपल्लवा स्वसैनिकैः सहाऽऽक्रमितुमुदीचीनं मार्गम् ।

प्रवसन्ती चाहोरात्रं, विश्रमयन्ती स्वदलमापतित एवा-परिहार्ये कारणे, मार्गपतितानां ग्रामटिकानां ग्रामणी चाध्यक्षैर्दुर्गाणां रक्षकैः पत्तनानां पौरैः परमस्वामिभक्तैः समाकर्ण्य स्वनृपविशंसन-समाचारं चिताग्रस्तैरपि यवनप्रतीकारार्थं बद्धपरिकरैः समवलोक्य राजवंशांकुरान् सुकोमलानित्थमनाथानिव सह पितुरस्थिकलशेन प्रवसतो दुःखितैः स्वसाहाय्यमादेहपातं प्रतिजानद्भिः साश्रु नमस्क्रियमाणा, प्रोष्य, पक्षेण युगकल्पेन, निरीक्ष्य प्रत्यहं तस्याः प्रवासं निरन्तरं दीर्घतरं विगताहंकार इव पश्चिमांबुनिधौ निमज्ज्या-दर्शनं याति भगवति सप्ताश्वे, सूचयितुमिव तद्गृहनगरप्रवेशवार्त्तां

दिग्वधूभ्यो मंदं मंदं वहति सार्यसमीरे, द्रष्टुमिव तस्याः पैतृक
प्रवेशमभयप्रदमवतरति गगनांगणे नक्षत्रमंडले, – प्राप, श्यामायम
पौरस्त्ये क्षितिजे दूरात् परिलक्ष्यमाणं सांध्यरागोद्भासितलोहि
प्राकारपरिवृतमभ्रंलिहसिंधुराजपताकासुशोभितध्वजस्तंभं विश
कर्णोपकर्णिकया तदागमनवार्त्तामपावृतात् सिंहद्वारात् संततं निःसर
मतिक्रम्य शाद्वलं परिसरं पुरःसरतां पौराणां पंक्तिव्याजेन ग्रहीतुं
स्वस्वामिनोऽस्थिकलशं परिश्रांताद्राजकुमारहस्तात् भुजं स्वं दीर्घव
प्रसारयन्तमतिप्राचीनं कुलसंकथास्वसकृदाकर्णितमपि सकृदेव वा
काले निमित्तेन केनचिद्दृष्टपूर्वं ब्राह्मणावासम् ।

तामनु च – वशंवद इव तदनुचर, प्रावृट्कालो धूलिधूसरि
दिक्चक्रवालेन प्रबलेन प्रभंजनेन प्रोद्घोषितप्रवेशो मदकलमद
निभमेघमेदुरितांबरः प्रचंडघनगर्जननिनादितदिङ्मंडलः प्रचल
संख्यविद्युल्लतासिलतादुर्धर्षः समुत्सुक इव बृंहयितुं तस्या सामर्थ्यम

# द्वादशः परिच्छेदः

"गतो विलयं प्रावृट्काल"–आरभत चिंतयितुं राजदारिका, समुपविष्टा कृष्णशिलासने राजध्वजस्तंभमूलनिर्मिते, ध्यायन्ती क्षणमात्रं श्रांतया दृशाऽस्तं जिगमिषोर्विभावसोः करस्पर्शेन दीपितां निरभ्रेंद्रनीलनीलगगनप्रसृतामसितसागरपरिवृतकनकगिरिश्रृंगततिमनुकुर्वाणां जलदमालां, समवलोकयन्ती क्षणमात्रं पूर्वदिगंतादाविर्भवन्तीं त्वरया महत्या नीडानि स्वानि समुद्दिश्योत्पतन्तीमपरदिगन्तेऽदर्शनं क्रमशो गच्छन्तीं पतत्रिपंक्ति, पश्यन्ती क्षणमात्रं सुदूराद्दिगन्तप्रसृताच्छाद्वलात् प्रदेशादुद्गच्छन्तीं निर्वाततया परिसरस्थेपदप्यविचलन्तीं धूमरेखां कांचित् क्षीणक्षीणाम् – एकला ।

"बहु नाम तेनोपकृतमकारणमित्रेण । चतुर्भिरेभिर्मासैरहर्निशं मुसलधारं वर्षता, स्थलानि मरुमयान्यनूपानि पुरुषगभीराणि पल्वलानि हृदगंभीराणि सरांस्यतलस्पर्शानि कुर्वता, विविधाः सरितो विदीर्य तीराणि क्वचिद्दृषन्मयानि क्वचिदुत्तुंगानि क्वचिद्वनराजिसंकुलान्युपवर्तनान्युपतीराणि योजनविस्तृतान्यापूरयितुं स्वैराविलैः फेनिलैः जलौघैः प्रेरयता, तेन तथा नामाभिभावितं रिपुबलं ···· यथा – औष्ट्रकमिव पूरनिमग्नं – भयजडं प्राणसंधारणमेव बहु मन्यमानं नूनं समयमिमं दिवास्वप्नैः स्वमरुदेशीयैरयापयत् ।"

चेतसि । .... कैः खलु लोपितास्ते ? समुपजातशंकैर्यवनैः ? आहोस्वित् मूकादिभिरस्मद्द्वेषयबांधवैरेव ?"

....'घातं तेषां साक्षात्कृत्य यावान् दुःखितोऽभवज्जयः न तावान् स्वप्रयत्नानां नैष्फल्यमनुभूय ।"

....'अहो मनस्विता जयस्य ! एतावताऽपि नैष्फल्येनाविचलितः, अतिविशालेऽस्मिन राज्ये तत्र तत्र विकीर्णबलस्य प्रबलतरस्य प्रत्यर्थिनः प्रतीकारः पक्षाहतानां न्यूनबलानामस्माकं कृत एवंप्रकारक एव शक्य' – इति पूर्ववदेव, दृढं मन्यमानः, 'सह शरदा नूनमाचिक्रंसेत उदीचीनमर्द्धं सिंधुराज्यस्य यवन' इत्युत्प्रेक्षमाणः, जिज्ञासया .... प्राक्चिकलयिषया यवनाक्रमणसंकल्पानां पुनः संप्रेष्य कृतकश्रमणकान् दक्षिणे प्रदेशे, विज्ञाय तदन्यतमस्य प्रत्यागतस्य मुखाद्यत् – 'यवनः प्रलयंकरेण निरंतरेणाऽऽसारेण प्रवाहितसमरसामग्रीभरो विनाशिताश्वो मातृदेशात् प्रस्थितान् सैनिकपोतान् महाप्रमाणान् प्रतिपालयन्, संप्राप्ते हेमन्त एव, प्रतिष्ठासत उत्तरदिग्विजयाय' इति प्रवृद्धोत्साहः, निक्षिप्यात्रत्यं प्रतिरक्षाभार मयि, 'अस्मत्प्रतीकारः, समुद्यतेषु त्रिचतुरेष्वपि भारतीयेषु नृपेषु साहाय्यमस्माकं कर्तुं स्वचमूभिः पराक्रांतं दक्षिणं भागं सिंधुराज्यस्य–समुल्लंघ्य पौरस्त्यां सीमां – समाक्रमितुं समादिष्टाभिः, अधिकतर एवाभीप्सितप्रद' इति विश्वस्य, व्यतीत एव मासे निरगच्छदितः सह कतिपयैरंगरक्षकैरश्वसादैः स्वयं द्रष्टुं विज्ञापयितुं च गुर्जराधिपं शीलादित्यं, राष्ट्रकूटवंश्यमिंद्रराजं, उज्जयिनीश्वरं नागावलोकं प्रतीहारकुलीनं, मानमुदयपुरस्वामिनं, चालुक्यनृपं च विजयादित्यं साहाय्यदानाय ।"

...."अपि नाम सेत्स्यति तस्य प्रयासः ? त्यक्ष्यति किमौदासीन्यमात्मविघातकं वलभीशः ? कार्पण्यं दृष्टिकोणस्येंद्रराजः ? उपेक्षाभावमान्तरिकविद्रोहदमनमात्रव्यापृतचित्तः नागावलोकः ? मनोदौर्बल्यं मानः ? शांतिमंत्रजापं सर्वविनाशकं सत्याश्रय – समस्तभुवनाश्रय – श्रीपृथ्वीवल्लभ – परमभट्टारकादिभिरुपाधिभिर्मंडितात्मा विजयादित्यः ?"

"नोत्सहते मम मतिरेवं मन्तुम् । (सास्रं) प्रायत्यत खलु तातेनापि दुराशयाऽनयैवाऽऽयास्यमानेन । न कोऽपि भारतीयः नृपो बुद्ध्वा परचक्रसंकटस्य वास्तविकं स्वरूपं प्राहिणोत् स्वं बलं संवर्द्धयितुं तातस्य सामर्थ्यम् – ऋते कश्मीराधिपात् । ते च – अधुना – दिवं गते ताते, निगीर्णे सिंधुराज्यार्द्धे यवनवाहसेन, सहसा साक्षात्कृत्य स्वकर्तव्यं अकस्मादनुमायावश्यंभाविनीं विपदमविनाशिते म्लेच्छाजगरे, विजित्य पारस्परिककलहभावनामुररीकृत्यैकीभावं भविष्यन्ति संनद्धा भारतभुवो रक्षणायेति नूनं दिवास्वप्नम् । ···· किंवा स्यान्नाम – समवलोक्यापरिपक्ववयसं विनष्टपितृछायमनाथमिव स्वसंसदि समुपस्थितं प्रार्थयितुं साहाय्यं तेषां हृदयपरिवर्तः ।"

····"*अथवा यद्भावि तद्भविष्यत्येव । किमेभिर्दुश्चिन्तामासैः ? एकमेव तु याचेऽनुग्रहं नियत्याः । जयो मम शीघ्रं प्रत्यागच्छतु मम समीपे । विलुप्तवत्सलवात्सल्यावलंबाया विनष्टपितृसंरक्षणाया मम मानसमेभिर्दिनैः विना जयेन व्याकुलतामत्यधिकामनुभवत् — क्षणमात्रमपि — एकलमवस्थातुं नोत्सहते ।"

(नियद्धय दृष्टिमेकाग्रां पाश्चात्त्ये क्षितिजे तावत्या कालकलयांऽधतमसाच्छन्न अचिरोदिते एकस्मिन् नक्षत्रे) "अथवा – 'सर्वथा देवताः स्वस्तिकरिष्यंति ।' मया खलु तासु परं विश्वसत्या कर्तव्यकरणमात्रबुध्याऽहर्निशं प्रयतितव्यं यवनप्रतीकाराय ।"

"दिष्ट्या प्रजाजनाः सर्व एवास्योदीचीनस्य प्रदेशस्य श्रद्धालवः राजवंशेऽनुरक्तास्ताते प्राणान्तपर्यंतं प्रतीकाराय परचक्रस्य कृतशपथा इव मया परिलक्षिताः । प्रदेशेऽस्मिन् यवनस्य प्रविष्टिः प्रगतिश्च न विनाऽऽयासं भविष्यति – दक्षिण इव । सामरिकदृष्ट्या भुजम्यो बहुरूपसदृशः स्थलदुर्गोऽपि प्रतिरोधायावश्यंभाविनः म्लेच्छाक्रमणस्य, श्रुत्वैव स्वस्वामिप्रमापणसमाचारं बद्धपरिकरो – यथंत एव

मुसलधारं देवस्य,– प्रवहत एव प्रभंजनवेगस्य मरुत्वतः प्रावृषेण्यस्य – तर्जयत एव वज्रनिर्घोषैः पुरंदरस्य, कटिदघ्ने वर्षाजले दिगन्तप्रसृतेऽवस्थाय श्राम्यद्भिः रक्षकैः निखातपरिखः, क्लिन्नपरिधानैः सैनिकैः परिवर्द्धितप्राकारः, जलप्राये प्रदेश आसमन्तिके पर्यटद्भिर्दुर्गाधिकारिभिरवचितैः रणकलायां दीक्षितैर्मनस्विभिर्युवभिः समुपबृंहितसामर्थ्यः संप्रति गोभक्षकाणां भक्षणायाऽऽतुर इव लक्ष्यते। दालिमसदृशः क्रोडादुर्गोऽपि समुच्छेद्य योजनविस्तीर्णानि दालिमोपवनानि निर्माय परिखावलयं निरुत्सति द्विपद्बलं प्रयुज्य समुपस्थितेऽवसरे पर्यंतपर्वतनिर्दरेषु दुर्लक्ष्येषु कंटकारिकाच्छादितमुखेषु निलीनान् कृतांतस्वोशावतारानिव निर्दयान् धानुष्कान्।"

"योद्धारोऽस्य महादुर्गस्य यादृशा युयुत्सवो मया दृष्टाः न तादृशा आलोकदुर्गस्यापि। प्रतिक्षणं स्वसामर्थ्यसंवर्धन एव संलग्ना, दिवानिशं प्रतीकारचिंतन एव दत्तचित्ता – असत्याऽऽक्रमण आततायिनः – स्वयमेव तमाचिश्रंसन्ते संक्रान्ते दिवाकरे मकरराश्याम्। पौरा अप्यस्य ब्राह्मणावासस्य यथा स्निग्धा अस्मासु मयाऽनुभूताः न तथा देवलपत्तनस्यापि। अवलोक्यास्मान् विपद्वात्याविनाशितपितृछन्नानशरणानिव समापततस्तस्मिन् निशामुखे समवेदनया प्रत्युद्गतानीव तेषां हृदयानि नाद्यापि वांछन्ति नूनं प्रतिगन्तुम्।"

"सह जयेन तस्मिन् प्रभात इतो नातिदूरवर्तिन्यां पावनसलिलायां तस्यां नद्यां निमज्जयितुमस्थीनि पित्रोः गतानां तेषां मनसि समुत्पन्ना सहवेदना वर्द्धत एव नूनमहरहः। कौटुंबिकैः स्नेहपाशैः संवद्धमिवाऽऽत्मानं पूज्येन पितामहेन राजवंशप्रस्थापकेन सह मन्वानाः स्निह्यन्त्यस्मासु निरपेक्षम्। सुखदुःखान्यस्माकं सह भुञ्जते। दुःखानि त्वात्मनो गोपायन्त्यस्मभ्यः। विप्रबहुलाः शांतस्वभावाः निरीहाः न वांछन्ति किमप्यस्मत्सकाशात्।"

"तस्मिन् दिनान्ते युद्धचिंताभारम्लानया मया किंचिदभिव्यक्तां पैतृकगेहदिदृक्षां कर्णोपकर्णिकया श्रुत्वा कथमपरेद्युरेवास्तं

गच्छति सवितरि तद्वृद्धाः सस्मिताननाः अनाहूता एव समुपतस्थुः, बहु बहु च विज्ञापयामासुः समानयितुं भूतपूर्वमावासं पितामहस्य सकृदवलोकनेन, कथं स्वीकृत्य तदनुरोधमितः प्रस्थितान् पादचारेणैव राजपथेनाग्रे सरतः प्रणामान् नागरिकाणां स्वीकुर्वतोऽस्मान् सोत्साहं कापथस्थितमपि मृण्मयमपि यत्नसंरक्षितमिव लक्ष्यमाणं गोमयोपलिप्तकुड्यं तन्निन्युः, प्रवेश्य चास्मान् विस्मितान् तदभ्यन्तरे कथं वर्णयामासुः प्रस्फुरत्प्रातिभप्रकाशास्तत्र व्यतीतं शैशवं बाल्यं च पितामहस्यानाथस्य ततो निर्गमनं च तस्य बालस्यापि प्रस्फुरन्महत्त्वाकांक्षाऽशांतस्वभावस्य समुद्दिश्य राजधानीं शुश्रूषोः रायकुलभूषणं नृपं साहसिकं, संकीर्णे सद्यः प्रज्वालितमृद्दीपिकादीपिते, तत्प्रांगणेऽवस्थाय तास्ताः कथाः शृण्वतोऽस्मान् कथं स्नपयामासुश्च 'दुग्धकुल्याभिरिव' स्निग्धाभिर्दृष्टिभिः – तत् खलु सर्वं स्मृतमधुनाऽपि····।"

"(सहसा सवैलक्ष्यं) का खल्वासीत् सा वृद्धा ···· कृष्णा वामना ···· कुब्जा कृशा ···· मध्ये तेषाम् ? सा हि नः – न जाने कियतः कालात् – वृद्धयाऽपि तीक्ष्णया दृष्ट्या वद्धुं भेत्तुं छेत्तुं प्राणपणेन यतन्तीव सहसा मयाऽलक्ष्यत । क्षणमात्रानन्तरं निगडय्य स्वदृष्टिं विषमयीं मम दृष्ट्या चकितचकितया कुत्सितं विदन्तं हसन्ती····अकस्माच्चादर्शनमात्यंतिकं गच्छन्ती ।"

"कुत्र नु मया सा पूर्वं दृष्टाऽऽसीत् ? ···· कुत्र नु ···· ? अहो स्मृतम् ! ···· परंतु ···· ।"

"जयतु भर्तृदारिका" – सहसा श्रुतिपथं समापतितेन धीरगंभीरेण स्वरेणाभज्यत तस्या विचारतंद्रा । अलोकत च सा ग्रीवावर्तितमुखारविंदा पार्श्वत एव सहैकेन मंदेणहरेण प्रवासपरिश्रांतेन समुपस्थितं सुदूरप्रज्वलदुल्मुकप्रकाश्यमानाऽऽकृतिरेखं क्लांतयाऽपि स्नेहसिक्तया दृशा तामनिमेषमवलोकयन्तं धीसचिवं ब्रह्मदत्तम् । समुत्थाय झटिति सादरं समुपावेशितं तस्मिन्नेव दृषदासने पृष्टं च

कार्यगौरवं भावमुखरया दृष्ट्याऽशृणोत् गदन्तं – "चिताम्लाना भर्तृदारिकाऽनधिगत्य कुशलवार्त्तां स्वभ्रातुः दिनैरेभिः प्रोषितस्य समाश्वसिष्यति निशम्य सद्य एवागतस्यास्य भद्रमुखस्य माध्यमेन प्रेषितं संदेशं – यत् – सर्वथा कुशली सः, दृष्ट्वा यथासंकल्पं गुर्जराधीश्वरं शीलादित्यमादित्यप्रतापं, विज्ञाप्य तं साहाय्यदानाय, तेन सबहुमानं समाश्वासितः, साक्षात्कर्तुमुज्जयिनीशं जयशीलं कृतप्रस्थानः, आशंसते कुशलमिहत्यानां, प्रार्थयते च – लेशतोऽपि तद्विपर्येऽनुद्विजमानैः सर्वैः परचक्रप्रतीकार एव सर्वथा दत्तचित्तैर्भाव्यमिति ।"

"अहो प्रागल्भ्यम् ! नूनमतिवया इव संदिशति ।" – सस्मितमवदद्राजदारिका ।

"आम् !" प्रत्युवाच स्मेरवदनः स वृद्धः । "चतुर इव च । भर्तृदारिकाया एव विशिष्य कुशलमाशंसमानो भर्तृदारिकामेव प्रार्थयमानः प्रागल्भ्यापवादं परिजिहीर्षुः "" सर्वेषामिहत्यानां कुशलमाशंसते । सर्वांश्च प्रार्थयते ।"

वदन्नेवेत्थमुदतिष्ठदनु राजदारिकां स्मयमानवदनकमलां समवलोक्य प्रहरजीर्णां तारकितां निशां रात्रिभोजनाय समुत्थितामन्वसरच्च तां शनैः शनैः प्रस्थिताम् ।

परंतु प्रसादोऽयं चित्तस्य राजदारिकाया अचिरादेव व्यलीयत दुश्चिताभ्रैः घनैरप्रत्याशितैः । अनतिक्रांत एव सप्ताहे समरोद्यमव्याकुलाकुले हि समापतत् तस्या, उपविश्य विश्रामकक्षे सावधानं विचारयन्त्या उदीचीनात् सामरिकदृष्ट्याऽत्यधिकमहत्वशालिनो मूलस्थानात् सद्यःप्राप्तान् समरसंनाहसमाचारान्, सेवायां"" एकः साधारणवैश्यवेषः प्रौढः पुरुषः । विनिवेद्य च तस्यै धीसचिवमात्रद्वितीयायै स्वात्मानं स्पशं देवलपत्तनाद्वाणिज्यमिषेण निभृतं निर्गत्य पराधिकृतं प्रदेशं कथमपि समाक्रम्य सीमारेखां महता

चातुर्येण समुल्लंघ्य समुपस्थितं, अकथयद्विस्पष्टाक्षरं श्लथीभूत एव सामुद्रिके प्रावृषेण्ये पवने यवनदेशेभ्यः प्रस्थितेभ्यः जवेन तीव्रेण संतीर्य महासागरं देवलपत्तने समुपस्थितेभ्यो महाकायेभ्यः सैनिकपोतेभ्यो दिवानिशमवतरतां सिकतिले विस्तीर्णे सिंधुसरिदा-मुखकूलप्रदेशे निर्मिते स्कंधावारे व्युष्य द्वित्रीणि दिनानि तत उदीच्यभिमुखमुपतीरेण मार्गेण प्रसरतामश्वसादवहुलानां यवन-सैनिकानां वार्त्ताम् ।

"अत्याहितम् !" – सविषादमचिंतयद्ब्रह्मदत्तः । "पुनर-प्येकवारं विप्रलब्धाः स्मः कृतकस्पशसमाचारेण — 'द्वे पणः संप्राप्ते हेमंततौ एव प्रतिष्ठासत उत्तरदिग्विजयायेति' सूचयता । अथवा—"

"अहो क्षिप्रकारिता यवनानां" सविस्मयमाह राजवारिका । "आदित एव सज्जीकृत्य संनिधापिता, नूतनोद्दामविजिगीषादुःसहा अश्ववारबहुलाः सेनास्तैः – प्रशममुपयात एव महासागरे – स्वदेशात् प्रेषिताः संवर्द्धयितुं तेषामिहत्यं बलम् ।"

"उपकूलेन मार्गेणोदीच्यभिमुखमेवं नीयमानास्ते न बाध्यन्ते तैस्तैरुपद्रवैः प्रकटैरप्रकटैर्वा ?"–अपृच्छद्धीसचिवः ।

"नैषदपि" – सखेदमाह स गूढः पुरुषः । "चतुर्भिरेभिर्मासैः म्लेच्छेन हि तथाऽनवरतं प्रयतितं यथा दाक्षिणात्या अस्मद्बांधवाः सर्वत्र विचरतां श्रमणकानां मुखारविंदेभ्योऽसकृदाकर्ण्य विधिविधान-घोषं दैवोपनतस्वीकारोद्यता, अणीयसीमपि क्षतिं यवनात् स्वसंपदः स्वमानस्य स्वकलत्रादिकस्य चाननुभूय परं समाश्वस्ताः, प्रत्यक्षीकृत्य तस्य सर्वधर्मसमानभावं चकिता, दृष्ट्वा तस्य लुलुण्ठिषया क्षुद्रयाऽपि प्रवृत्तमात्राणां स्वसैनिकानां दंडधारणे तत्परतां विस्मिताः – किं बहुना – तद्दास्य एव स्वकुशलमधिकतरं मन्यमानाः, न केवलं तमुपद्रोतुं नोत्सहन्ते, अपि तु – अनुसृत्याग्रमान् मूकादीन् प्रवर्तन्ते तस्याभीष्टकरणाय ।"

"उपजापार्थमितः प्रेषिता अस्माकं स्पशा – अनुत्तमा अपि – दक्षिणे प्रदेशे ···· पके-निमग्नाः, पथिका इव ···· लोपमात्यंतिकं ययुः – इति नातःपरं विस्मयकारकम्' – अचिंतयद्राजकन्या सखेदम् ।

"पाश्चात्त्येनोपकूलेन मार्गेण नीयन्त उदीच्यभिमुखं सद्योऽवतारिताः सेनास्तेन ··· उत पौरस्त्येन ?" – अपृच्छद्ब्रह्मदत्तः ।

"द्वाभ्यामपि" – प्रत्यवदत् सः स्पशः ।

"विजितायां राजधान्यां, सिंधुसरितः पारापारप्रभुर्यवनः किमिति द्वावपि मार्गौ नोपयुञ्ज्यात् ?" आक्षिपद्राजदारिका ।

"सुष्ठूक्तं भर्तृदारिकया" – स्वीचकार धीसचिवः ।

"शीघ्रमेव" – अगदत् सा सचिंतं, व्यपगते प्रणम्य तस्मिन् गूढपुरुषे, "यवनसेनाः प्रत्यग्रजिगीषादुर्धर्षा अभिभवितुमस्मत्पृतनाः पराभवस्मृतिम्लानाः प्रवेक्ष्यन्ति प्रदेश उदीचीने । तन्मन्ये – आह्वातव्यः जयोऽस्माभिरद्यैव संप्रेष्य दूतम् । स हि यथा शक्ष्यति प्रतिरोद्धुं प्रत्यर्थिपृतनाप्रगतिमुपसीममेव····न तथा कोऽपि ।"

"परंतु – युवराजेनाविज्ञापितो वलभीश उज्जयिनीनृपो वा न सेनाः स्वाः प्रेषयिष्यत्यस्मत्साहाय्यार्थं" — सखेदमवदत् ब्रह्मदत्तः

"विज्ञापितः प्रेषयिष्यति – इत्यत्र किं प्रमाणम् ?" आक्षिपद्राजकन्या ।

"न, किमपि" – प्रत्याह धीसचिवः । "तथापि – मित्रसंपदर्जनार्थं प्रस्थितो युवराज एवं त्याजयितव्यः सद्यः प्रारब्धां चेष्टां, प्रत्याह्वातव्यश्च भयातुरैरस्माभिरिति-तावत् ···· नाहं ···· । कदाचित् प्रियदर्शनः प्रियंवदः लभेताऽपि साफल्यं स्वे प्रयासे । प्रबलंबलेन

केनाऽपि भारतीयेन नृपेण पीडितदक्षिणपार्श्वा यवनसेना न तथा प्रभविष्यत्यभिभवितुमस्मान् यथा सर्वदिक्‌निराशंका ।"

"यथेच्छति तात:" – जगाद राजकन्या ।

परंतु–आशापिशाचिकाया अस्या मुक्तिमलभत धीसचिवोऽपि तदहरेव । अस्तंगते हि भगवति सवितरि, निर्विण्ण इव साक्षात्कृत्य तद्दिवास्वप्नं, अवतमसाच्छन्न आरामे पर्यटन्, स्वात्मनैव किमपि विचारयन् स वृद्धः राजपुरुषोऽपश्यदेकं प्रवासपरिम्लानं प्रवृद्धश्मश्रुजालं निर्धनकृषीवलवेषं पुरुषं दौवारिकेन परिज्ञातकार्यगौरवेणाऽऽनीयमानम् । अशृणोच्च तस्मात् प्रकटीकृतस्वयथार्थरूपात् स्पशादनपेक्षितं समाचारं विधूय वर्षाजाड्यमाविर्त एवाऽऽक्रमेणसंनद्धाया आक्रम्य योजनशतविस्तीर्णं मरुदेशं मातृदेशात् समुपस्थिताभिः पृतनाभिः समुपोद्वलितसामर्थ्याया बलातिरेकोत्सिक्तायाः शिबिप्रदेशकटकान्निर्गत्य सिंधुसरितः पाश्चात्ये तीरे क्लृप्तसंनिवेशाया उत्तितीर्षया दिगन्तप्रसृतस्यागाधस्य सरित्प्रवाहस्य नौकाबलं मूकेनाऽऽयोज्यमानमातुरातुरं प्रतीक्षमाणाया यवनसेनायाः ।

"नूनं .... यवनः .... समूलघातं जिघांसुरस्मान् सेनां नः दक्षिणदिशः समुपसर्पन्तीभिः स्वचमूभिरायोधने योजयित्वा तामेव पार्श्वतः सहसाऽवस्कन्तुं प्रसह्य च हिंसितुमिच्छति । .... तत् .... विफलयितुं तस्याभ्यासादनं युवराजस्यात्र समुपस्थितिः नितान्तमभीष्टा । स हि समरांगणयोर्द्वयोरपि – सुरासुरसंग्रामे सुरेंद्र इव – युगपदेव विलसन् यथा स्वोदाहरणेनास्मद्भटान् प्रोत्साहयितुं शक्ष्यति न तथाऽन्यः कोऽपि" – इति मंत्रयित्वा च भर्तृदारिकया सह प्रहरमात्रखंडितायां तस्यामेव रजन्यां विश्वसनीयमेकं प्रत्युत्पन्नमतिं दूतं मौखिकेन संदेशेन सह व्यसृजत् उज्जयिन्यै ।

# त्रयोदशः परिच्छेदः

युवराजमिमिलिषेयं तयोश्चितायां पर्यणम्यतापरेद्युरेव मध्यमलंकुर्वति विवस्वति परीक्ष्य समरसंनाहं सिष्णासया समुत्तिष्ठतोः सेवायां सरभसं प्रवेशितेन समुच्छ्वसद्वक्षःकपाटेनाश्वसादेनैकेन, विनिवेद्याऽस्मानं गुर्जरराजधान्यां युवराजेन नियुक्तयोश्चारयोरन्यतरं, स्वस्वामिनः प्रस्थानस्यानुपदमेव गुर्जराधिपसेवायां संप्राप्तस्य महाप्रमाणैः श्मश्रुलमुखैर्व्यूढकंकटैरारक्तलोचनैरहंमन्यैरिवाऽऽरक्तगौरैः यवनैरश्ववारैस्तीक्ष्णदृष्टिभिः पंचशताधिकैरनुस्त्रियमाणस्य यवनवाहिनीपतिसंप्रेषितस्य दूतविशेषस्य स्वयं राज्ञा शीलादित्येन : रहसि साक्षात्कृतस्य वार्त्तां संसूचयता।

...."अत्याहितम् !" – सविषादमवदत् धीसचिवः। "समुत्प्रेक्ष्याऽस्माकं प्रयत्नं नूनं विफलयितुं तं समीहते चतुरो यवनः। प्रवञ्च्य संघवी जनतां स्वकीयेन सर्वधर्मसमभावेन कृतकेन चेष्टतेऽधुना विप्रलब्धुं भारतीयान् नृपान् भ्रातृभावप्रदर्शनेन। .... अपि स सेत्स्यति प्रतिप्रयत्नेऽस्मिन् ? .... अथवा .... बिडालधूर्तस्य तस्य मनोगतं नियतमेव वेत्स्यन्ति शीलादित्यादयः प्रबुद्धा भारतीया राजानः। करिष्यन्ति च शस्त्रपरिग्रहं – सत्येव समये – समुद्धरणाय शल्यस्य भारतमातुः शरीरे......."

"कियन्तोऽश्ववारा इतस्तातेन संप्रेषिता जयेन सह ?" – सहसाऽपृच्छद्राजकन्या।

"कियन्तः ···· अश्ववाराः ···· संप्रेषिताः ? ···· मन्ये – पंचत्रिंशदनधिकाः । ···· किमिति पृच्छति भवती ?···· अपि ···· अपि ···· मन्यते भवती ···· ?"

"विपरीते दैवे किमिव नानर्थाय ?···· कियान् धूर्तः···· कियान् कूटाक्रमणनिपुणो यवनोऽयं – प्रत्यक्षीकृतमेवैतदस्माभिस्तस्य तस्मिन् कृतकसौहार्दसंदेशे निमील्याक्षिणी विश्वसद्भिस्तेन सप्रयोजनं प्रसारिताः लोकवार्त्ता अवलंब्य सिंधुसागरसीमापरिरक्षण औदासीन्यमात्मविघातकमुररीकुर्वद्भिः । विजिते प्रदेशे सुस्थितमात्मानं समीक्षमाणोऽवशिष्टमर्द्धं यावच्छक्यं शीघ्रमेव विजेतुं समुत्सुक जयमेवैकाकिनमल्पवयसमपि दुर्धर्षं जनप्रियं तस्मिन् प्रत्यवायं मन्यमानः ···· कामपि ···· राक्षसीं ···· नीतिं नावलंबेत – इत्यत्र किं प्रमाणम् ?···· वत्सस्य मे वृत्तांतः किं तातेन ···· "

····"अत्याहितम् !" – सविषादमाह स वृद्धः, प्रयतमानो गूहितुं प्रकंपं सहसा समुद्भूय हृत्प्रदेशे प्रसरन्तमिव पाणिपादे । "एतस्मिन्नेव क्षणे प्रेषयामि प्रबलं बलमश्वसादिनां पणीकृत्याऽपि प्राणान् युवराजं संरक्षितुं बद्धपरिकरम् ।"

वदन्नेव चेत्थं किमपि किमपि निरगच्छत् कक्षादनपेक्षमाणो भर्तृदारिकाया विमनस्कायाः स्वीकृतिम् ।

एवं निर्दयेन दैवेन तज्जिहसिषया क्रूरया स्वयं कर्णे जपिताया इवामंगलाया आशंकायाः हृत्कर्त्र्या उच्चारणादपि बिभ्यतोः, हृत्कंपं स्वं परस्परतः जुगुप्सितुमन्यान्येषु कार्येषु व्यापृतमिवाऽऽत्मानं दर्शयतोस्तयोस्तन्मात्रविदितचिंताभारजडः स सप्ताहो युगदीर्घ इव शनैः शनैः व्यरंसीत् ।

निमज्जयितुं तौ घोरतरेऽवसादे विधिना प्रेषित इव च समुपातिष्ठदेकस्मिन् प्रभाते, व्यतीते भौमवासरे संप्रेषितानामश्ववाराणामन्यतमेन घोटके स्व उदुह्याऽऽनीतः, शस्त्रप्रहारविलूनदक्षिण-

कूर्परोऽपि ज्वरातिरेकारक्तमुखमुद्रोऽपि सावधान एकस्तुरगारोहः। प्रणम्य च कथमपि, राजदारिकया विदितवेद्ययेव सहसा निश्चलतामुपेतया निर्निमेषया दृशैव समादिष्टः, घर्घरस्वरमारभत वक्तुम्।

"यदि नाम युवराजः ···· संयम्य यौवनसुलभामवहेलना-प्रवृत्तिं (धीसचिवमुद्दिश्य) समनुसृत्यात्रभवतामुपदेशं···· प्रस्थानसमय आत्मना सह प्रबलं बलमंगरक्षकाणामितोऽनेष्यत्तर्हि ···· शत्रुरेवं तमभिभवितुं नाशक्ष्यत्। संप्रति तु – भाग्यमेव —"

"अपि कुशलं युवराजस्य ?" – तीक्ष्णस्वरमपृच्छद्‌वृद्धो ब्रह्मदत्तः, समवलोक्यापांगदृष्ट्या मुखमुद्रां राजदारिकायाः सहसा विवर्णाम्।

"आम्" – प्रत्यवदत् स वृद्धः।

"तर्हि निवेदय सविस्तरम्" – आदिशद्‌धीसचिवः।

"यदा खलु युवराजो गुर्जराधीश्वरेण शीलादित्येन स्वसंसदि सबहुमानं समाश्वासितोऽन्यभारतीयनृपतिदर्शनार्थं विसृष्टस्तदा स लेशतोऽपि न समदिग्ध तत्सदाशयतायाम्। प्रत्युत – प्रथमं प्रयत्नं सफलं शुभशंसिनं मन्वानः समुद्वेल्लदुत्साहपूरः प्रातिष्ठत तदहरेव उज्जयिन्यै" – प्रारभत स सैनिकः।

"रिपुदमनस्तु, (धीसचिवमुद्दिश्य) श्रीमता तदंगरक्षक-नायकत्वेन संप्रेषितोऽनुभवविदग्धोऽप्रत्याशितसुलभमानुकूल्यं गुर्जरेश्व-रस्यावलोक्य किंचित् शंकितः, 'युवराजस्येयमाज्ञा' इति कृत्वा द्वौ स्पशौ परमचतुरौ तस्यां राजधान्यां निभृतं नियुज्यैव ततः प्राचलत्।"

"अचिरादेव तु व्यस्मरत् स्वां दुःशंकां, स्वामिन उत्साहभरेण प्रभावितस्तेन सह तास्ता भव्या भाव्याः प्रत्याक्रमण-योजनाश्चर्चयन्।"

"अत एव – यदा तृतीयेऽह्नि समवलोक्यास्तंगतप्रायं दिनकरं मार्गपतितस्य कस्यचिद्गहनस्य वनस्य प्रांते शाद्वले क्लृप्तस्कंधावारं व्यपनीय क्षुधां पटवेश्मनि विश्राम्यन्तं स्वामिनमामंत्र्य स: प्रविश्य पटकुटीं स्वां शय्यायामात्मानमपातयदारभत च चिंतयितुं किमपि किमपि — तदा निराशंकतया मनसः श्रांततया च वपुषः कतिपयेष्वेव क्षणेषु निद्रासागरेऽतले किशोर इव न्यमज्जत् ।"

"कथं खलु स अबुध्यत, गृहीत्वा वा खड्गं स्वामिनः पटवेश्म प्राविशदेतत्तु नाहमजानां, जानामि, (दीर्घं निःश्वस्य) ज्ञास्यामि वा कदाचिदपि । यदा त्वहं सहसा समुद्भूतेन कोलाहलेनाजागरं, सहसुप्तान् सैनिकान् समुत्तिष्ठत, आयुधानि यानि कानि गृह्णत:, निष्कंकटमेव च बहिर्निर्गच्छतोऽपश्यं, 'किमिव समापतितं स्याद्' – इति विचारयन्नेव च निस्त्रिंशपाणिः स्वामिनः स्कंधावारमध्यवर्तिनं पटवासमुद्दिश्याधावं – तदाऽद्राक्षं तं शताधिकैर्वर्मितैः पादचारिभिः संतमसाच्छन्नतया परिसरस्यांधकारखंडैरिव परिलक्ष्यमाणैः सशस्त्रैर्यवनसैनिकैः परिवेष्टितम् ।"

"यावच्च चिंतयामि कमप्युपायं निर्भेत्तुं तद्द्विपद्वलयं प्रवेष्टुं च स्वामिनः शय्याकक्षं कथमपि तावदद्राक्षं तमेव सहसा बहिरागतं विकोषया रक्तारक्तया कालीकटाक्षभीषणयाऽसिलतयाऽऽततायिनः, समवलोक्य तं सभयमपसर्पत:, खंडयन्तं, निष्कवचेन करवालकरालेन रिपुदमनेन युद्ध्यमानेन संरक्ष्यमाणपार्ष्णिभागं, शनैः शनैः समुद्दिश्याश्वबंधनस्थानं प्रचलन्तं, प्रविश्य तत् समारुह्यैकं प्रजविनमश्वं – आहूयास्मान् वज्रनिर्घोषगंभीरेण स्वरेणानुसर्तुमविलंबमेव – कांताराय प्रतिष्ठमानं, झटित्यारुह्य तुरगान्तरं तमनुगंतुं प्रवृत्तं, सहसा पार्श्ववर्तिना केनापि यवनाधमेन प्रक्षिप्तेन प्रासेन विदीर्णपार्श्वं, विलूनं चंदनवृक्षमिव निपतन्तं, रिपुदमनमजानन्तमपरस्मिन्नेव च क्षणे गहने वने प्रविश्यादर्शनं यान्तम् ।"

"क्षणमेकं निक्षिप्य दृष्टिं भूमितलनिपतिते स्वनायके, समीक्ष्य च तं प्रमीतं, सहयोद्धृभिरन्यैः साकमरण्ये प्रवेष्टुं प्रवृत्त एव

सहसाऽन्वभवं विद्युन्मयमिव निशितनिर्स्त्रिशप्रहारं (समवलोक्य स्वं दक्षिणं भुजम्) अस्मिन् कुतोऽपि निपतन्तम्। वेदनापरिजिहीर्षयेव तत्क्षण एव संज्ञया परित्यक्तः नावेदात्मानं तुरगान्निपतन्तम्। यदा तु तां पुनरध्यगच्छम् .... अद्राक्षं तदाऽऽत्मानं ज्वलद्दक्षिणकूर्परं, संतप्त-शरीरं, तृड्व्याकुलं, मध्यं गगनस्याध्यारूढेन प्रबोधयितुमिव मां प्रयतमानेन दिनकरेण विस्पष्टं प्रकाश्यमानैरितस्तः विकीर्णैः, समीपोपविष्टैः निश्चलैर्महाकायैर्गृध्रै राप्तजनैरिव सनाथानां यवनसैनिकानां शवैः सह भूमौ पतितम्।"

"नावालोकयं कमपि द्विपादं शरीरिणमासमन्तात्। महता कष्टेन समुत्थाय, पिपासाऽपनिनीषयैव केवलया प्रेर्यमाणोऽतीत एव मध्याह्ने मार्गपतितां ग्रामटिकां समुद्दिश्य पदानि कतिपयानि क्षिपन्, सहसाऽद्राक्षं नियत्यैव चिराधूनं दयार्द्रया मद्दिशि संप्रेष्यमाणमश्ववारदलमेकम् .... आस्माकम्। सरभसं समीपमुपगतेन तन्नायकेन प्रत्यभिज्ञातस्तुरगे स्वे समारोप्य सत्वरं नातिदूरक्लृप्तं कटकं नीतस्तत्र बलाध्यक्षेण स्वयं पृष्टः, निवेदितनिवेदनीयः, संप्रधार्याऽऽत्मनैव सह किमपि तत्क्षणमेव कांतारे स्वयमपि प्रवेष्टुं कृतनिश्चयेन तेन सहानेन भद्रमुखेन प्रेषितो, भर्तृदारिकायाः सेवायामुपस्थितोऽहम्।"

"नूनं सेनजित् कांतारे तस्मिन् अन्विष्य पराजेष्यते तद्यवनदलम् आनेष्यते च युवराजं" – स्वगतमिवाऽऽहाधोमुखो धीसचिवोऽपगते तस्मिन् सैनिके।

राजदारिका त्वनभिज्ञेव तस्य सैनिकस्यापगत्याः सदिच्छाया वा तस्य पितृव्यतुल्यस्य वृद्धस्य, चिंतासागरेऽतले निमग्ना, चित्रलिखितेव चिरमास्ताधोदृष्टिः। समुत्तार्य इव चाऽऽत्मानं महता प्रयासेन, दीर्घं निःश्वस्य समुत्थिता, निरगच्छच्छनैः शनैर्मंत्रणाकक्षादसमर्था मीलयितुं खेदविह्वलां स्वां दृशमपराधबोधव्याकुलया वृद्धया दृशा ब्रह्मदत्तस्य।

अयं स तयोः खेदः, प्रतिस्किरन्निव तन्मर्माणि, दहन्निव तद्हृदयं, लुंचन्निव तज्जिजीविषां ···· पिशाच इव दारुणः ···· क्षणमेकमपि तौ नाजहात्।

अश्लथत्वणुमात्रं चतुर्थेऽहनि वियन्मध्यं महता कष्टेनाऽऽरोहति सवितरि सेवायामुपस्थितेन सेनजित्सैनिकान्यतमेन निवेदितं – गहने कांतारप्रदेशे सर्वत्र विकीर्णानां यवनसैनिकशवानामेव शृगालादिभिर्जग्धप्रायाणामुपलंभं – निर्गत्य कांतारमुखात् प्राच्यावाचीकृत्यारण्यमुदीच्यभिमुखमवशिष्टैः सैंधवैः सैनिकैः सह वेगेन प्रसृतस्य, कतिपयैर्यवनैरश्वारोहैरनुसृतस्य युवराजस्य समाचारं वनेचरेभ्यो लब्धं – स्वनायकनिश्चयं च सहैव स्वामिना गुहाऽऽगमनस्य निशम्य।

यथा यथा त्वारभन्त दिनान्यस्येतुमेकैकशस्तथा तथाऽवर्द्धत पुनरपि स तयोः खेदः। प्रतिदिनं सीमासमीपमुपसर्पतां समुपसृत्य सांद्रतरीभवतां सांद्रतरीभूय तितेजयिषया नु स्वायुधानां सीमांतवर्तिनमविजितं प्रदेशमुत्पीडयतां यवनबलानां प्रलयपयोदानामिव विद्यर्पाल्याकुलानामन्तःसंघट्टमानविपक्षराणां श्रुत्वा समाचाराद् प्रधानात् स्कंधावारात् पृतनाः शस्त्रसंपन्नाः प्रतिवासरं प्रेषयतोः, प्रेष्य ताः स्वयमपि तेषु तेषु सीमाप्रदेशेषु परिभ्रमतोः, परिभ्रम्य मनोबलं तत्रत्याया जनतायाः परिवर्द्धयतोस्तयोर्मानिसमप्रत्ययमिवाऽऽत्मनि संदिहानमिव स्वक्षमतायां प्रतिक्षणमागमनमेव युवराजस्य प्रत्यपालयत्।

निष्फलमेव।

न हि प्रार्थयमानानामप्यसंख्यानां सैंधवानां प्रत्यागच्छत् प्रियदर्शनो युवराजः। आगच्छत्तु तडिद्वेगेन कुसमाचारः समुल्लंघ्य दाक्षिणात्यां पाश्चात्यामुदीच्यां च सीमां युगपदेव पुरः प्रचलितानां विभिद्य रोधांस्यन्तः प्रविशतां प्रलयसागरांभसामिव दुष्प्रधर्षाणां भीषणगर्जनानां यवनसेनानाम्।

उररीकृत्य वज्रसंकल्पं तत्प्रतिरोधस्य ताः प्रत्युद्गतयोस्तत्क्षण एवाऽऽरुह्य तुरगौ दुर्गान्निर्गतयोरनवरतं प्रोष्यावधीर्य परिश्रमातिरेकं न्यक्कृत्य बाधाजातमविगणय्य दिवानिशं तासु तासु रणधुरासु युगपदिव प्रादुर्भवतोरनुपयुज्य हास्तिकमश्ववलमेव समवलं प्रतिरोधाय प्रत्यर्थिपृतनानां सर्वत्र प्रयुञ्जतोस्तत्र तत्र प्रवृत्तानि तीव्राणि प्रत्यास्कंदनानि स्वशौर्यप्रदर्शनेन तीव्रतरीकुर्वतोस्तयोरुदाहरणं समवलोक्य समुत्तंभितात्मबलाः सैंधवसेनाः विस्मृत्य ज्येष्ठकनिष्ठभाव तिरस्कृत्य वर्गभेदं निष्कृत्य परिणामविचारं तथाऽऽरभत प्रतिरोद्धुं यवनसेना यथा ता अपि दिगंतप्रसृतशौर्यगाथा अनुभूयाननुभूतचरं प्रतीकारं विस्मिता बभूवुः। विस्मायं विस्मयं द्विगुणितेन वेगेनाऽऽचक्रमुः। अवलोक्य तमपि निष्फलं किंकर्तव्यमौढ्यं च अन्ते भेजुः।

न तु तत्प्रमुखः।

स त्वनुभूय वज्रदुर्भेद्यं प्रतिरोधं हृष्टः, प्रत्यर्थिप्रदेशपदक्षेपादारभ्यासकृत् श्रुतकीर्त्याः रणांगणे तस्मिन् सकृदवलोकिताया विलूनपितृच्छायाया भ्रातृवियोजिताया वृद्धसचिवमात्रसहायायाः कन्यायाः स्वारातेस्तादृशं सैन्यसंचालनचातुर्यं युद्धकलानैपुण्यं च दृष्ट्वा चकितः, लांगूलचालनचतुराणामवलोक्य स्वबांधवानां पराक्रमभीपदप्यहृष्टानामह्रीणानां साक्षात्कृत्य स्वकार्पण्यं प्रत्युत संतप्तानां मूकादीनामपभाषणदुर्गंधां भाषां श्रुत्वा समुद्विग्नस्तत्परामर्शानवधीर्य सेनानां संचालनभारं स्वयं जग्राह।

आरभत च महता कौतूहलेन प्रयोक्तुं तांस्तान् स्वमात्रकल्पितान् व्यूहान्, परीक्षितुं च तस्याः सिंधुकन्यायाः शौर्यं रणरंगे।

आदौ तावत् स समादिदेश स्वां सेनामुदीच्यायां सीमारेखायां द्विपद्बलेन सह युद्ध्यमानां शीशांसितुमाक्रमणम्। प्रेरयामास

च संवर्द्धयितुं तत्सामर्थ्यमन्या एव पृतनाः पारेसिंधु प्रकल्पितात् प्रमुखतमात् स्कंधावारात्। आज्ञापयामास च स्वे सेने पाश्चात्य-दाक्षिणात्यसीमारेखयोर्वर्तमाने श्लथयितुं स्वं स्वमाक्रमणम् – ईषदप्य-न्यूनीकृत्य स्वं सामर्थ्यम्।

राजदारिका त्वजानती स्वपरिपन्थिन इममतिचतुरं व्यूहं, यदा विवेद समाचारं सैनिकदूतेभ्य उदीच्यायाः प्रत्यर्थिसेनायास्ती-व्रतरस्याऽऽक्रमणस्य, पाश्चात्यायाः दाक्षिणात्यायाश्च तस्याः श्लथनस्य .... तदा वराकी .... तर्कयन्ती तं तयैव दिशाऽऽक्रमणोद्यतं .... परिमितबला .... समाचकर्षानेकाः पृतनाः पाश्चात्याया दाक्षिणा-त्यायाश्च सेनाया .... आज्ञापयामास च ताः संवर्द्धयितुं प्रतिरोध-बलमुदीच्यायाः।

अथ व्यतीते पक्ष एकस्मिन्, समवलोक्य चारचक्षुभिश्चातुर्यं स्वं सफलीभूतं, गूढं निदिदेश स यवनसेनापतिः स्वां पाश्चात्यां दाक्षिणात्यां च सेनामाक्रमितुं रिपुबलं द्विगुणेन रंहसा, परिवर्द्धयामास तच्छक्ति रणांगणे सद्योऽवतारिताभिरनीकिनीभिः, स्वीचकार च नेतृत्वं स्वयं दाक्षिणात्यायाः रणशिरसि।

आदित एवातुलबला, समनुभूय प्रबलतमं प्रतिरोधं कुंठिताऽपि स्वनायकस्य नैपुण्ये परं श्रद्धाना, समवलोक्य स्वं सामर्थ्यं परिवर्द्धितं प्रत्यग्राभिरनीकिनीभिः शतगुणितोत्साहा, साक्षात्कृत्य स्वमग्रण्यं रणाग्रे समुपस्थितमाचिरंसातुरा – पाश्चात्या यवनसेना च – तथाऽऽक्रमितुमारभत यथा क्षीणतरबला सैंधवसेना प्राणान् पणी-कृत्याऽपि न तां प्रतिरोद्धुमक्षमत।

दिगन्तप्रसृताभिरतिनिबिडाभिर्गेहनाभिः समुल्लसत्खड्ग-कांतारभीषणाभिः समुल्लसत्प्रासदुष्प्रधर्षाभिः द्विपदश्ववारपंक्तिभिः, निमज्जयितुं रोधोपरोधान् प्रोद्वेल्लितस्य प्रक्षुभितस्य महासागरस्यो-

र्मिभिरिव दुष्प्रसहाभिः, निरन्तरं विदीर्यमाणा, सूच्यग्रमात्रमपि स्थानात् स्वादव्यावर्तमाना, त्रिचतुरैरेव दिवसैः नामशेषतां चायात् ।

प्रावर्तत च यवनसेना निष्प्रतिबंधा, जलराशिरिव खंडित-वेलामूलः सगर्जनं प्रधावितुमुद्दिश्य ब्राह्मणावासं विनाशयन्ती जानपदं प्रदेशं भयनिश्चेष्टम् । परिववार दुर्गं बहुरूपमन्येद्युरेवास्तं गच्छति विज्ञाय विधिलिखितं खिन्न इव निष्प्रभे प्रभाकरे । क्षणमात्रमपि चाविश्रम्य प्रारभताऽऽक्रमितुं तमष्टाभिरपि दिशाभिः । संख्यया शस्त्रसंपदा चाऽतुलबला दुर्निवार्या यवनसेना क्व .... क्व च जानपदैः प्रयत्याहर्निशं समुपबृंहितसामर्थ्योऽपि मूलत एव सुजय्यः स्थलदुर्गो बहुरूपसदृशः ! .... अनतिजीर्णायामेव तस्यां तमस्विन्या स, विदीर्ण-महाद्वारकपाटः निहताशेषरक्षको दग्धाश्वशालो द्विषत्पादस्पर्शेणा-भ्रश्यत । .... दालिमदुर्गोऽप्यपरेद्युरेव गगनमध्यमध्यारूढे भगवति सह-स्रकिरणे । तत्पर्यन्तपर्वतनिर्दरेषु गूढमवस्थिताः शूराः सैंधवा धानुष्कास्तु– श्रुत्वाऽप्याडंबरं गगनभेदकं स्वस्वस्थानेष प्रत्यपचिकीर्षया प्रबलया तथैव निलीनाः – निशामुखे मूकबांधवैरुपदिष्टमार्गैर्यवन-सैनिकैः निभृतमानीतैः निर्दरमुखेषु निःशब्दं विरचितैः सहसा प्रज्वलितैः काष्ठैः सधूमस्तोमं ज्वलद्भिः निरुद्धश्वासनालयः, अलब्ध्वैवावसरं स्तोकमपि प्रदर्शयितुं स्वशौर्यं, अकाल एव कालकवलिता बभूवुः ।

यदा तु राजदारिका, स्वयमुदीचीने समरमुखे कुर्वाणा नेतृत्वं सेनाया अवधीर्य हानिमाक्रमणं द्विषतः प्रतिरोद्धुं दिवानिशं प्रयतमानाया, अविन्दत समाचारमनभ्रवज्रपातनिभं विनाशस्य स्वसेनाया दाक्षिणात्ये रणरंगे, पराजयस्य दुर्गस्य बहुरूपस्य, पतनस्य दालिमदुर्गस्य, प्रसरणस्य च रिपुबलस्य ब्राह्मणावासदुर्गं समुद्दिश्य तदा क्षणमात्रं विस्मयमूढाऽपरस्मिन्नेव क्षणे समुत्तंभितस्वान्ता, संप्रधार्य स्वात्मनैव, विनिश्चित्य मनस्येव सविषादं 'प्रतिरोधोऽतः परं सर्व-व्यापिनो यवनसेनासागरस्य ब्राह्मणावासदुर्गाश्रयेणैव संभवी .... आ देहपातं आ जयागमनं वेति', विन्यस्य समरमुखप्रतिरोधनभारं कतिपयेषु गणेषु साक्षात्कृत्य निर्दिष्टकार्यगौरवं प्रहृष्टेषु, तदनुज्ञाता,

साश्रुनयनाऽऽरभत द्रातुं महता वेगेन सह बलेन स्वेन पराजय-विषण्णेनापहृत्य स्वचेष्टितान्यंधतमसावरणेन सर्वतः प्रसृतेन, संदिश्य च दूतमुखेन घोसचिवं पाश्चात्ये समरांगणे युद्ध्यमानं तथैव कर्तुम् ।

आक्रम्य च दिगन्तप्रसृतं जानपदं प्रदेशं, समाकर्ण्य परचक्रमवतीर्णकल्पं भयमूढं, कतिपयैरेव दिवसैः प्रतिन्यवर्तत निशामुख एकस्मिन्, सर्वतः प्रसरति घनेऽवतमसे, परिजिहीर्षयेव तदवलोकनस्यानवतीर्णे गगनांगणे नक्षत्रमंडले, ब्राह्मणावासदुर्गं पराजयम्लानमप्या प्रलयं प्रतिरोद्धुं गोभक्षकान् कृतसंकल्पम् ।

तामनु चाऽपरेद्युरेव घोसचिवो ब्रह्मदत्तः क्षामतरशरीरो धवलतरश्मश्रुरारक्ततरलोचनः – सहावशिष्टया पराभवनिर्विण्णया निःशब्दयाऽधोदृशा स्वसेनया ।

# चतुर्दशः परिच्छेदः

"अत्याहितं .... भर्तृदारिके ! .... अत्याहितम्" – अभज्यत विचारतंद्रा खेदजडा राजदारिकाया – यथानियमं प्रदोषकाले गत्वा नगरदेवताया आयतनं, स्तुत्वा तां विविधैर्भावार्द्रैः स्तोत्रैः, ध्यात्वाऽनिमेषं तन्मुखकमलमलब्ध्वा तत्प्रसादचिह्नं किमपि विषण्णायाः, निःश्वस्य दीर्घं गर्भगृहाद्बहिरागतायाः, प्रासादं निवर्तितुमनिच्छुकाया, उपविश्य वातायने पुरुषप्रमाणे सभागृहस्य बहिरंधतमसमलीमसं यवनभयविवर्णमिव नक्षत्रहीनमपहृतमुक्ताभरणमिव दक्षिणाशामुखं निर्निमेषया चिंताबलातया दृशा विमनस्कं ध्यायन्त्या, – कुतोऽपि श्रुतिपथं सहसा समापतितैः भयकातरैः शब्दैः ।

अलोकत च सा किंचिद्व्यावृत्य मुखं – समीपोपस्थितामेकदेशप्रज्वलन्मंददीपप्रकाशितभंगुरकेशपाशरेखामनतिस्पष्टमुखमुद्रामपि समुच्छ्वसत्स्तनमंडलानुमेयभावोद्रेकां प्रासादपरिचारिकामेकां, समुपलभ्य स्वामिनीमीषदप्यनुत्तेजितया प्रश्नमुखरया स्थिरया दृशा तामेवावलोकयन्तीं व्याहताऽऽवेगां, कथमपि संनियम्याऽऽत्मानं प्रबद्धांजलिं निःशब्दं याचमानामनुज्ञां किंचिन्निवेदयितुम् ।

अन्वमनुत च तां दृशैव ।

"जयतु ···· जयतु ···· भर्तृदारिके" – प्रारभत सा प्रेष्या, मंद्रेणाऽपि प्रस्फुटदावेशेन स्वरेण । "महत् खलु कष्टं समापतितम्! ····प्रदह्यतेऽस्माकं धान्यकोशः ।"

"केन ?"– अपृच्छत् तीक्ष्णेन स्वरेण राजकन्या ।

"अनिर्ज्ञातोद्गमकारणेन प्रचंडेन ज्वलनेन! ···· उपलभ्य समाचारमिमं सत्वरं प्रधावितेभ्यः सैनिकरक्षकेभ्यः श्रीमान् धीसचिवः, शस्त्रागारेऽकस्मात् त्रुटितानां धनुर्गुणानामसंख्यानां निरीक्षणे व्यापृतः, परित्यज्य प्रस्तुतं कार्यं, सह रक्षकैः पुरुषैः सेवकैश्च प्रशमनाय हुतभुजः प्रस्थितोऽत्रभवत्या अपि तत्रोपस्थितिं प्रार्थयते ।"

"निवेदय सविस्तरं" – समादिशन्निर्गत्य मंदिरात् प्रचलिता राजदारिका याप्ययानेन धान्यागारं प्रधानतमं समुद्दिश्य ।

"यथा श्रुतं मयेहाऽऽगच्छन्त्या मुखेभ्यः नागरिकाणां, समवलोक्य प्रदीप्तं कोषगृहं स्वं स्वं सत्वरमागतानां, गृहीत्वा च यानि कान्यपि जलपात्राणि तमेव समुद्दिश्य पुनः प्रधावमानानामाकुलाकुलानां" – प्रारभत सहोपविष्टा सा दासी, "यदा खलु प्रधानः कोशपाल, आ दिवसं वितीर्य धान्यं पाचकेभ्यः सैनिकेभ्यो, भांडारं सायंकाले पिधातुं प्रावर्तत तदा स्मरन् स्वामिन्याः निर्देशं सर्वेषु कक्षेषु स्वयं संचयं तान् निरैक्षत । अनधिगत्य च स्तोकमपि संशयकारणं तदपिदधात् । अतो ···· यदा सः स्वं गृहं निवृत्तमात्रोऽविदत सरभसमागतान्नैशरक्षकपुरुषान्मतमाद्वार्तां धूमस्तोमस्य कज्जलकृष्णस्याविच्छिन्नमूलं भांडारगृहस्यान्तर्भागात् समुद्गच्छतस्तदाऽश्रद्दधान एव तद्वचस्यधावत । विगतसंदेहश्च निरीक्ष्य तं स्वयं, प्रेर्यमाण एकत्रभूतजनसमुदायेन यावत् प्रयतते समुद्घाटयितुं प्रधानं द्वारं, विस्मयतेऽनुभूय तदन्तर्निगडितमिव दुरुद्घाट्यं, प्रवर्तते च तद्विदारयितुं सत्वरमानीतानां कुठाराणामाघातैस्तावदवलोकयाभासासंख्यान् धूमकल्लोलान् वंशजानिवाऽऽदिमस्य धमस्तोमस्यान्तः

सहसा समुद्गच्छतः। पर्यालोच्य च विपदो गांभीर्यं – द्वारविदारण-व्यापृत एव – असुसूचत् तत्रभवन्तं धीसचिवम्। स च समाचार-श्रवणसमकालमेव शस्त्रागारात् प्रस्थितः ···· स्वामि····"

"कष्टम्! कष्टम्!" उज्जगार राजदारिका सहसा, दृष्टिपथमकस्मादवतीर्णस्य, प्रचंडाभिः प्रखराभिः भापयिषयेव जनसागरस्याऽऽचिक्रंसमानस्य सहोदधाराभिः प्रकंपमानाभिः ज्वाला-भिरवलीढस्य, जतुर्निर्मितस्येव निष्प्रतिबंधं ज्वलतो, धान्यागारस्य दृश्येन भीषणेनाप्याकर्षकेणाऽऽकृष्टचित्ता।

निरुद्धप्रसरा निबिडेन निश्चलेन निःसहेन जनसंदोहेन दहननिगडितनयनेन, हठात् स्मारिता चान्यस्य दहनस्य पितरौ तस्याः स्वर्गं नीतवतो, यावन्निःश्वस्य दीर्घमादिशति शिबिकावाहिनोऽग्रे प्रचलितुं, तावदवलोकयामासातिवयसमिव गलितगात्रमधोनयन-मीषद्दग्धोत्तरासंगं धीसचिवं, तामेव समुद्दिश्य शनैः शनैरुपसर्पन्तम्।

अवबुद्ध्य तदिंगितं परावृत्तैः शिबिकावाहिभिः प्रासादं प्रापिता, सह तेन मंत्रणाकक्षं प्रविष्टाऽवस्थाय वातायनसंमुखं विहायसि विस्तृतं दाहप्रकाशं निर्निमेषं लोकमाना चापृच्छत्तमासंद्यां निर्जीव-मिवोपविष्टं – "अप्येतत् प्रत्यर्थिचेष्टितम्?"

"नाहं जानामि" – मंदं मंदं प्रत्यवदत् स वृद्धः।" दुर्भेद्यत्वं दुर्गरक्षाव्यूहस्य दुरासाद्यत्वं च कोशस्य मनसि कुर्वाणो नोत्सहे मन्तुमेतत् तच्चेष्टितम्। ····'कुतस्तर्ह्यस्योद्गम' इति विस्मयमानः न लभेऽन्यत् किमपि समाधानम्।"

"स्यात्तर्हि मूकबांधवानामास्माकीनानामेवान्यतमस्य" — स्वगतमिवाऽऽह राजदारिका।

"नैतच्छक्यं" – प्रत्युवाच स वृद्धः।

"कुतः?"

"मया खलु कपटप्रहारमनुभूतचरमादित एव निरुत्सुनाऽत्राऽऽगतेनैव नागरिकाः सर्वे चारचक्षुर्भिः सुनिपुणं परीक्षिताः प्रेषिताश्च येन केनापि व्यपदेशेन तेषां मध्यादविश्वसनीया एभिश्चतुर्भिर्मासैः। नास्ति नूनं महादुर्गेऽस्मिन् पौर एकोऽपि यः स्वामिन्या घातं स्वप्नेऽपि संकल्पयेत्।"

....शृण्वत्येव तद्वचनं हठादस्मरद्राजदारिका तां जरतीं कृष्णां वामनां कृशामनावृतप्रायां विषमय्येव दृष्ट्या भेत्तुं प्रयतमानां तां तस्मिन्निशामुखे पैतृकगेहप्रांगणे सस्मितं तास्ताः कथाः प्रतिवेशिनामाकर्णयन्तीं, न त्ववदत् किमपि।

"परंत्वविदित्वा कारणमुद्गमस्य.... कथं खल्वेता दुश्चेष्टाः प्रतिरोद्ध्याः?" – प्रकटमवदत् सा।

न किमपि प्रत्यवदद्धीसचिवः कुंठितमतिः।

"कियान् खलु धान्यराशिः प्रनष्ट.... अस्मिन् निशामुखे" – पप्रच्छ सा।

"षण्मासपर्याप्तः" – प्रत्युवाच ब्रह्मदत्तः।

"तर्हि.... महादुर्गेऽस्मिन्.... अन्यत्र विद्यमाना उपकोशा एवाधुनाऽस्माकमवष्टंभाः" – सखेदमवदत् सा।

"उपकोशा एव।"

"तृतीयोऽयं विपत्प्रहार एषु पंचसु दिनेषु"–स्वगतमिवाऽऽह राजदारिका। "प्रथमे प्रहारे पंचशताधिका अश्वा अस्माकमकस्मात् पंचत्वं गताः। केन रोगेण सहसा समाक्रांता वराकास्तन्नाद्यापि विनिश्चेतुमस्माकमश्वपालाः समर्थाः। .... द्वितीये प्रहारे शस्त्रागारे सुरक्षितानामपि सहस्राधिकानां धनुषां गुणाः कृत्ता – अस्माभिरुपलब्धाः। केन .... कैर्वा .... कर्तितास्तन्नाद्यापि ज्ञातुमस्माकं स्पशाः

शवता: । तृतीये स्वस्मिन् जीवनाधार: प्रधानो धान्यकोश एव – समवलोकयतामस्माकं – भस्मीभूत: ।"

"मन्ये – नागरिका अत्रत्या दैवहतकानामस्माकमत्राऽऽगमनमेव सर्वेषां संकटानामेतेषां मूल कारण मन्वाना अस्मदपसरणमेव गूढं कांक्षितु प्रवृत्ता भविष्यन्त्यचिरादेव" – सविषादं साऽवदत् ।

...."न स्वप्नेऽपि" – प्रत्याह सावेशं ब्रह्मदत्त: । "आदित एव स्वामिन्या सह पारिवारिकैरिव प्रबलैर्बंधनैर्बद्धमात्मान विभावयन्तस्तत्रापि भवत्या मृदुवचसा विजितस्वांता अत्रत्या सर्व एव नागरिका, भवतीमनवरतं प्रताडयन्तीभिर्विपद्भि: समुद्विग्ना अपि येन केनापि प्रकारेण भवत्या दु:खं न्यूनीकर्तुं समुत्सुका अपि, साक्षात्कृत्याऽऽत्मनोऽसामर्थ्यं व्याकुला अपि, न गणयन्ति क्लेशमभूतपूर्वसैनिकसंमर्दसंभूतं, न मनसि कुर्वन्त्यवश्यंभाविनं जनधनक्षयं, तिरस्कुर्वन्ति यवनभयम् ।"

"भवत्या एव कुशलं कांक्षन्तोऽहर्निशं याचन्ति जगदीश्वरं प्रत्यागमनं युवराजस्य ।"

"जयतु .... जयतु .... भर्तृदारिका" – प्रविश्याऽऽह मंद्रस्वरं द्वारपालिका । "एक: कोऽपि पुरुषो दुर्गमहाद्वारे समुपस्थित:, निरीक्ष्याभिज्ञानं तत्रभवता सेनजिता प्रदत्तं द्वाररक्षकैरन्त:प्रवेशितो, भर्तृदारिकाया दर्शनं कामयमानो द्वारि समुपस्थित: ।"

"अहो ! सेनजिता प्रहितादूदूतादस्मान्नूनं जयस्योदन्तं लप्स्यामह" – इति विचिन्त्य किंचिद्विकसितमुखकमलया च स्वामिन्याऽनुज्ञाता प्रावेशयदेकं पांसुलवेषं प्रौढवयसं पुरुषम् ।

"जयतु .... जयतु राजदारिका" – सकौतूहलमिव तां लोकमान: सोऽवददसंस्कृतया वाण्या । "अहमस्मि योधेय: । व्यवसायेन ग्रामतक्ष: । अतीते पक्षेऽस्माकं ग्राम आनिशं क्लृप्तस्कंधावारेण

केनचित् सेनान्या सहैतया मुद्रया संदेशेन च 'रक्तपिपासुभिर्गृध्रैर-नुगम्यमानः राजहंसः लिप्सयेव साहाय्यस्यान्येषां कलहंसानां कुंकुमाद्रिमद्देशं समुद्दिश्य डयित' इति भवत्याः संनिधौ प्रेषितः ।"

"किमिति जयः, समुत्सार्य दुराशामन्येषां भारतीयानां नृपाणां साहाय्यस्य, न प्रतिनिवर्तते स्वं राज्यम् ?" आह सविषादं राजकन्याऽपगते तस्मिन् संदेशहरे ।

' कदाचिद्युवराजस्य प्रत्यागमनमार्गः निरुद्धो भवेत् म्लेच्छैः" – तर्कयामास धीसचिवः ।

"संभवत्येतत् ।"

"जयतु .... जयतु भर्तृदारिका" – पुनः प्रविश्याऽऽह ससंकोचं द्वारपालिका । "एषः प्रधानस्य धान्यकोशस्य पालः नगररक्षाधिकृतेन सह प्रतीहारभूमौ समुपस्थितो भर्तृदारिकाया दर्शनं कांक्षति ।"

"प्रवेशय तम्" – अन्वजानाद्राजकन्या समुपविशन्ती स्वासने ।

"मृष्यतां भर्तृदारिके" – प्रणम्याऽऽह सखेदं कोशपालो धूमलोष्णीश आरक्तलोचनः । "बह्वन्विष्याऽपि मया नाधिगतः सूच्यग्रमात्रोऽपि संकेत उपद्रवकारिणः नराधमस्य । .... एष नगर-रक्षाधिकृतस्तु रिपुदमनो वांछति निवेदयितुं स्वयं किमपि ।"

"श्रुतं मया कर्णोपकर्णिकया" – बद्धांजलिराहान्यतरः राजपुरुषः । "एका काऽपि जरती कृष्णा वामना .... निष्प्रयोजनमेव भ्रमन्ती परिसरे कोशस्याद्य सायंतनेऽवतमसे कैश्चिद्रक्षकैर्दृष्टा । पृष्टा च प्रयोजनमाक्रोशमुखरा ज्वलन्नयना .... महता कष्टेन तैस्ततः निःसारिता ।"

"स्यात् काचित् मुखंपचा"— स्वगतमिवाऽऽह वृद्धो ब्रह्मदत्तः।

"अहमपि श्रीमानिवाऽऽदौ समचिन्तयं", प्रत्याह स अधिकारी। "यदा स्वश्रृणवं – सा तस्मिन्निशामुखेऽश्वशालायाः समीप एवाटन्ती कैश्चिदश्वपालकैर्दृष्टाऽऽसीत्, तदपरेद्युरेव च सांद्रीभवति सांध्येऽवतमसे शस्त्रागारस्याऽऽसमंतात्तदा समुपजातशंको मृगयितुं तां नगररक्षकबलमयुनजम्।"

"अपि प्राप्नोत् तत् साफल्यम्?" अपृच्छद्धीसचिवस्तीक्ष्णेन स्वरेण।

"न" – प्रत्याह स नगररक्षाधिकृतः। "निपुणमन्विष्याऽपि न तत् प्राप्नोत् साफल्यम्। अवेदं तु तन्माध्यमेन यत् सा जरती दुर्गवसतेः पुरातने भागेऽसकृद्दृश्यते – विशेषतः स्वामिन्याः पैतृकावासमभितस्तत्राप्यस्तंगतप्राये दिनकर – इति।"

"स्यात् काचिन्नागरिकी दुर्दैविनी" – प्राह ब्रह्मदत्तः।

"न खलु नागरिकी" – प्रत्यवदत् स राजपुरुषः। "श्रुतं खलु मया मदेषु चतुर्षु मासेष्वेव साऽत्र नागरिकैर्दृष्टेति।"

"स्यात्तर्हि काचित् दाक्षिणात्या" – प्रारभत ब्रह्मदत्तः – "यवनैः संत्रासिता विनाशितप्रियजना ···· छत्रछायायां भर्तृदारिकाया जीवनहतकमवशिष्टं याप"···· व्यरमत च मध्येवाक्यमेवावलोक्य स्वामिनी विवर्णमुखमुद्रां सहसा समुत्थाय मंत्रणाकक्षात् प्रवृत्तां निर्गन्तुम्। अपजगाम च विस्मितोऽस्वस्थोऽन्तर्हितायां तस्यां प्रासादात् सहान्याभ्यां राजपुरुषाभ्याम्। न्यवर्तत च स्वं गृहं संकल्पयन्नात्मनैव किमपि।

न त्वलभतावसरं चेष्टितुं यथाऽसंकल्पम्।

# पंचदशः परिच्छेदः

अपरेद्युरेव ह्यचिरोदिते भगवति दिनकरे प्रारभन्त समापतितुमेकैकशः सर्वाभ्य आशाभ्यः सैनिका द्रुताः समुत्तेजिताः, सूचयितुं च प्रतिप्रहरं – समीपतरं समुपसर्पणं दिगन्तप्रसृतस्यातिनिबिडस्य समुल्लसत्कुंतकांतारकंटकितस्य, सस्यसंपन्नानि योजनदीर्घाणि क्षेत्राणि कृषीवलशून्यानि – पश्यतामेव भयमूकानां पतत्रिणां – विनाशयतः गृहनिलीनपरिवारा ग्रामटिकाः नगरीश्च विध्वंसयतः, प्रलयक्षुभितपयोनिधिपयोराशेरिव दुष्प्रसहवेगस्य यवनबलस्य । प्रावर्तयन्त च राजदारिकां धीसचिवं नगररक्षाधिकृतमुच्चावचमधिकारिगणं – किं बहुना – संपूर्णमेव महादुर्गमात्मरक्षार्थमुपायान् विविधान् प्रयोक्तुम् ।

प्रागेव च मध्याह्नात् स महादुर्गः, कूर्म इवाऽऽत्मरिरक्षिषयाऽन्तर्धापितसर्वांगः, पिहितसर्वद्वारवातायनः प्रारभत प्रतिपालयितुं द्विपद्‌बलम् ।

अलोकत च तत् समरस्यातिमस्य प्रारंभं द्रष्टुमनुत्सुके दुर्जेययवनसेनापतिन्यक्कृतप्रतापे दिनकरेऽसमय एव निमज्जयितुमात्मानं पश्चिमपयोनिधौ गगनमध्यादवतीर्णे, 'अस्मन्मुखकमलान्यहर्निशं सास्रं ध्यायन्त्या अपि सिंधुराजकन्याया मूका प्रार्थनाऽस्माभिः

नापूर्यंत प्रत्यावर्त्य तस्या एकमात्रमवष्टंभं भ्रातरम्' इति साक्षात्कृत्य निर्विण्णानामाशावधूनां मंडले मालिन्यमुपगते, 'देशद्रोहिणां मूकादीनां संस्पर्शेन दूषितोऽहं कथमिव ब्रह्मदत्तसदृशान् देशभक्तान् स्पृशेयम्' – इति लज्जित इवागतिकतामुपगते सदागतौ, चतुर्दिगंतेषु प्रलयपयोद-पंक्तिरेखेव युगपदाविर्भवत्, सैंधवानामन्तिमस्य तस्य प्रतीकारस्थानस्य जिगरियया दुर्दमनीयया प्रतिक्षणं समुपसर्पत्, ···· 'अल्लाहो अकबर ! ···· अल्लाहो अकबर !' इति रणगर्जनैर्गगनवितानमिव विदारयत्, तीव्रैः खुराघातैः धरातलमिव खनत्, दुःसहेन स्वभारेण भूमंडलमिव चालयत्, तीव्रेण प्रस्वेदगंधेन गंधवहमिव श्लथीकुर्वत्, अनवरत-निपतदश्वफेनमालाभिः महीतलं धवलीकुर्वत् ।

अभवच्च संनद्धः प्रतिरोद्धुं तस्याऽऽदिमं प्रबलतममाघातम् ।

व्यर्थमेव ।

नियंत्रितमिव हि केनाऽपि दुष्प्रसहप्रभावेण मंत्रेण – दुर्गात् किंचिद्दूर एव सहसा व्यरमत् तत् । अभजच्च कादाचित्कहेषारव-भंगुरां क्वाचित्ककरवालखणत्कारबधुरां निःशब्दताम् ।

"किमिव विरतम् ···· एतत् ?" – मंद्रस्वरमपृच्छत् सैंधव-सैनिकानामन्यतमः, प्राकारशिरसि राजदारिकाया अनतिदूर एवा-वस्थायाधःप्रसृतं दिगंतविस्तृतं रिपुबलवलयं, रोधोपरुद्धं मलीमसं जलमिव लवणोदस्य, ध्यायताम् ।

"नूनं कुंठितम् ···· अवलोक्यास्मद्दुर्गस्य दुर्भेद्यतां ···· संप्रधारयति स्वात्मनैवाऽऽक्रमणव्यूहं" प्रत्यवदत् तस्य सुहृत् ।

"न कुंठितमेतत् । न वा नवव्यूहसंकल्पनव्यग्रम्" – अचिंतयद्राजदारिका प्रत्यर्थिबलनिगडितनयना सविषण्णस्मितं श्रुत्वा स्वसैनिकसंलापं तमस्पष्टप्रायम् । अनेके खलु, दुर्गा एतादृशा

अनेन दिग्विजयिना विजिताः। व्यूहाश्चास्य आक्रमणस्यादित एव सुनिश्चिताः।"

"कुत्र नु खल्वस्याध्यक्षः ? नाहमवलोकयामि दिगंतव्यापारितलोचनोऽपि स्तोकमपि चिह्नं तस्य। ..... अवलोकयामि पंक्तीरेवासंख्या अश्ववाराणां धृतशीर्षण्यानां व्यूढकंकटानां समुद्धृतकुंतानां दुर्गनिबद्धलोचनानाम्। ..... किं नैतन्नीयते रणशिरःसु स्वनायकेन ?" व्यस्मयत मंद्रस्वरमन्यः सैनिकः।

"प्रतिक्षणं नीयते" — अचिंतयद्राजकन्या। "एतास्वेव तुरंगिणां पंक्तिषु चित्रलिखितास्विव निश्चलासु वर्तते स कुत्रचित् — दुर्लक्ष्यविशेषः — नास्माकीन इव समुद्धृतध्वजादिमुलक्ष्यव्यक्तिः।"

"मन्ये — क्षेणितुमस्माकं धृतिं प्रतीक्षया दीर्घदीर्घया यवनः .....इत्थमेवाऽऽदिवसान्तं स्वसेनाबलप्रदर्शनमात्रव्यापृतः, परिश्रांतेष्वस्मासु, निशि, सर्वतःप्रसृतांधतमसगूढचेष्टः सहसाऽऽचिक्रंसते" — मंद्रस्वरमाह तां धीसचिवः समीप एव तस्या अवस्थाय लोकमानो द्विपद्बलम्।

"समीचीनं भणति तातः", प्रत्युवाच सा। "तदस्माभिरपि संभावनां सद्योभाविन आक्रमणस्यानवधीरयद्भिरस्माकं पृतना एकैकशो विश्रामयितव्या, येन ता अस्य नैशस्याऽऽक्रमणस्य प्रतिरोधेऽस्मत्संकल्पितेन प्रकारेण सर्वथा समर्था भवेयुः।"

"यथाऽऽदिशति भवती" — अभणत् ब्रह्मदत्तः। आहूय च प्रधानं सेनाध्यक्षं, प्राकारस्यापरे भागे निरीक्षमाणं प्रतिरक्षाव्यवस्थां, तथा समादिशत्।

एवं क्षणमेकमप्यचलित्वा प्राकारशिरसः निर्निमेषमवलोकयतोर्द्विपद्बलचेष्टितं राजदारिकाधीसचिवयोः, प्राकारे तत्र तत्र

नापूर्यंत प्रत्यावर्त्य तस्या एकमात्रमवष्टंभं भ्रातरम्' इति साक्षात्कृत्य निर्विण्णानामाशावधूनां मंडले मालिन्यमुपगते, 'देशद्रोहिणां मूकादीनां संस्पर्शेन दूषितोऽहं कथमिव ब्रह्मदत्तसदृशान् देशभक्तान् स्पृशेयम्' – इति लज्जित इवागतिकतामुपगते सदागतौ, चतुर्दिगंतेषु प्रलयपयोदपंक्तिरेखेव युगपदाविर्भवत्, सैंधवानामन्तिमस्य तस्य प्रतीकारस्थानस्य जिगरिषया दुर्दमनीयया प्रतिक्षणं समुपसर्पत्, .... 'अल्लाहो अकबर ! .... अल्लाहो अकबर !' इति रणगर्जनैर्गगनवितानमिव विदारयत्, तीव्रैः खुराघातैः धरातलमिव खनत्, दुःसहेन स्वभारेण भूमंडलमिव चालयत्, तीव्रेण प्रस्वेदगंधेन गंधवहमिव श्लथीकुर्वत्, अनवरतनिपतदश्वफेनमालाभिः महीतलं धवलीकुर्वत् ।

अभवच्च संनद्धः प्रतिरोद्धुं तस्याऽऽदिमं प्रबलतममाघातम् ।

व्यर्थमेव ।

नियंत्रितमिव हि केनाऽपि दुष्प्रसहप्रभावेण मंत्रेण – दुर्गात् किंचिद्दूर एव सहसा व्यरमत् तत् । अभजच्च कादाचित्कत्वपारवभंगुरां क्वाचित्ककरवालखणत्कारबंधुरां निःशब्दताम् ।

"किमिव विरतम् .... एतत् ?" – मंद्रस्वरमपृच्छत् सैंधवसैनिकानामन्यतमः, प्राकारशिरसि राजदारिकाया अनतिदूर एवावस्थायाधःप्रसृतं दिगंतविस्तृतं रिपुबलवलयं, रोधोपरुद्धं मलीमसं जलमिव लवणोदस्य, ध्यायताम् ।

"नूनं कुंठितम् .... अवलोक्यास्मद्दुर्गस्य दुर्भेद्यतां .... संप्रधारयति स्वात्मनैवाऽऽक्रमणव्यूहं" प्रत्यवदत् तस्य सुहृत् ।

"न कुंठितमेतत् । न वा नवव्यूहसंकल्पनव्यग्रम्" – अचिंतयद्राजदारिका प्रत्यर्थिबलनिगडितनयना सविषण्णस्मितं श्रुत्वा स्वसैनिकसंलापं तमस्पष्टप्रायम् । अनेके खलु दुर्गा एतादृशा

अनेन दिग्विजयिना विजिताः । व्यूहाश्चास्य आक्रमणस्यादित एव सुनिश्चिताः ।"

"कुत्र नु खलवस्याध्यक्षः ? नाहमवलोकयामि दिगंतव्यापारितलोचनोऽपि स्तोकमपि चिह्नं तस्य । ···· अवलोकयामि पंक्तीरेवासंख्या अश्ववाराणां धृतशीर्षण्यानां व्यूढकंकटानां समुद्धृतकुंतानां दुर्गनिबद्धलोचनानाम् । ···· किं नैतश्नीयते रणशिरःसु स्वनायकेन ?" व्यस्मयत मंद्रस्वरमन्यः सैनिकः ।

"प्रतिक्षणं नीयते" – अचिंतयद्राजकन्या । "एतास्वेव तुरंगिणां पंक्तिषु चित्रलिखितास्विव निश्चलासु वर्तते स कुत्रचित् – दुर्लक्ष्यविशेषः – नास्माकीन इव समुद्धृतध्वजादिसुलक्ष्यव्यक्तिः ।"

"मन्ये – क्षोणितुमस्माकं धृतिं प्रतीक्षया दीर्घदीर्घया यवनः ····इत्यमेवाऽऽदिवसान्तं स्वसेनाबलप्रदर्शनमात्रव्यापृतः, परिश्रांतेष्वस्मासु, निशि, सर्वतःप्रसृतांधतमसगूढचेष्टः सहसाऽऽचिक्रंसते" – मंद्रस्वरमाह तां धीसचिवः समीप एव तस्या अवस्थाय लोकमानो द्विपद्‌बलम् ।

"समीचीनं भणति तातः", प्रत्युवाच सा । "तदस्माभिरपि संभावनां सद्योभाविन आक्रमणस्यानवधीरयद्भिरस्माकं पृतना एकैकशो विश्रामयितव्या, येन ता अस्य नैशस्याऽऽक्रमणस्य प्रतिरोधेऽस्मत्संकल्पितेन प्रकारेण सर्वथा समर्था भवेयुः ।"

"यथाऽऽदिशति भवती" – अभणत् ब्रह्मदत्तः । आहूय च प्रधानं सेनाध्यक्षं, प्राकारस्यापरे भागे निरीक्षमाणं प्रतिरक्षाव्यवस्थां, तथा तमादिशत् ।

एवं क्षणमेकमप्यचलित्वा प्राकारशिरसः निर्निमेषमवलोकयतोर्द्विपद्‌बलचेष्टितं राजदारिकाधीसचिवयोः, प्राकारे तत्र तत्र

यथादेशं संस्थापितास्तास्ताः पृतना एकैकशः निभृतमपकृष्य नवीनीकृत्य ताः क्षुत्पिपासापनोदनादिभिः पुनः प्राकारसंरक्षणे योजयतः नैशप्रतीकारसामग्रीरायोजयतः प्रधानस्य सेनाध्यक्षस्य, साक्षात्कृत्य गांभीर्यं परिस्थितेः निःशब्दानां पणीकृत्य प्राणान् दुर्गपरिरक्षणाय कृतनिश्चयानां सैनिकानां च — स वासरो युगदीर्घ इव व्यतीयाय ।

आरभत प्रसर्तुं शनैः शनैः, पापसंघात इव देशद्रोहिणां सैंधवानां काकादीनां, नैशोऽधकारो, विलोपयन् दिक्चक्रवालं, विलालयन् गगनं, स्थापयामास चाचिरादेव स्वमाधिपत्यं सर्वत्र ।

यदा तु वासर इव निशाऽपि सा प्राक्रमत क्षणशो व्यत्येतुं दीर्घदीर्घा, प्राविशच्चान्तिमे प्रहरे, तदा प्रधानः सेनाध्यक्षः समुपासरत् चित्रलिखितामिव स्तब्धां, पुरःप्रसृते तमःसागरे निमग्नलोचनां राजदारिकाम् । प्रारभत इव च किंचिन्निवेदयितुम् ।

तत्क्षण एव निषिद्धः स्वामिन्या, तर्जन्या समादिष्टोऽवलोकयितुं पुरतः .... अद्राक्षीत् .... अन्वभवद्वा .... मसीसागरमहाकल्लोलमिव निःशब्दं दुर्गमुपसर्पन्तम् । प्रवृत्त एव च प्रष्टुं किमपि, तत्स्वरूपमजानात् नभःपटलं विदीर्य सहसा श्रुतिपथे समापतितेन हूंपारवेण । निभृतमपसृत्य ततः, संदिश्य तत्र तत्र नियुक्तान् उपप्रधानान्, प्रतिपालयन् योग्यमवसरं, तस्थौ, प्राक्तननिर्देशं स्वामिन्या अनुसरन् .... दुर्गमूलनिगडितनयनः ।

विनिश्चित्य चानुकूलतममवसरं समुपस्थितं सहसा ताडयामास रणपटहम् ।

नीरवे नैशे गगने तथाऽकस्मादुद्भूतं, निमेषमात्रे सर्वतः प्रसृतं तं गंभीरध्वनिं समाकर्ण्य विस्मिता यवनसैनिका यावत् पारयन्ति परिकलयितुं तद्ध्वनितमभिप्रायं तावत् तेऽन्वभवन् स्वात्मनः मस्तकेषु हस्तेषु जंघासु पादेषु तुरगाणां शिरःसु निगालेषु ग्रीवेषु लांगूलेषु सहसाऽनवरतधारं निपततीरंधकारवशाददृश्यरूपास्तप्ततैलधाराः ।

व्यूढकंकटत्वान्न तथा स्वयमन्वभवन् तद्वाहं यथा तेषामश्वाः। ते तु – अकल्पितपतिताभिररुंतुदाभिस्ताभिः दग्धत्वचो, वेदनातिशयवशादुन्मादा, विस्मृत्यानुशासनमा कैशोर्यादधीतं, तीव्रया दुर्ज्ञेयसंकटपरिजिहीर्षयैव केवलया नुद्यमानाः, परावृत्य मुखानि ततः पलायितुं प्रायतन्त। असमर्थाश्च तथा कर्तुमतिसांद्राभिस्तुरगपंक्तिभिः समानवृत्तांताभिरुपरुद्धपार्ष्णयः ···· प्रारभन्त ···· हिंस्रं केशाकेशि कलहं तीव्रह्रेषारवं परस्परजिघत्सव इव।

शासितुमिव तान् पलायनमार्गमथाऽऽरभत प्रज्वलदलातवृष्टिः प्राकारशिरसः भीषणा लोमसंहर्षणा धूमला। प्रावर्तत च प्रज्वलयितुं तान् वराकान् केसरेषु निगालेषु लांगूलेषु च तैलार्द्रितेषु च। गंडानामुपरि पिटकान् संवृत्ताननुभूय तेषां व्याकुलता परां काष्ठां समपद्यत।

यवनसैनिकानां च, संभ्रान्तानामपि तावत्कालपर्यन्तमक्षतानां, नियमन एवाश्वानां व्यापृतानाम्। अकस्माद्धि त आत्मानमपश्यन् प्रखरज्वालं ज्वलदभिरुत्पतद्भिरधःपतद्भिर्मुखानि भयातिरेकविस्फारितनयनानि समुत्क्षिपद्भिः खुरैः समुत्थापितैरन्योन्यं ताडयद्भिर्वेदनातिशयकर्कशैः ह्रेषारवैर्गगनवितानं विदारयद्भिः प्रशमयितुं सर्वांगदाहविदारकं दहनं भूमौ लोटितुमिच्छद्भिरलब्ध्वा तावन्तमवकाशमधिकतरमेव क्षुभ्यद्भिस्तुरंगमैः परिचितैरप्यवशंवदैः संमर्दे तस्मिन् अधःपात्यमानं खुरैर्दल्यमानं पादैस्ताड्यमानं दंष्ट्राभिर्दंश्यमानम्।

अधावंश्च परावर्तितमुखा, समुत्तारिता इव विपत्सागरादाशया कयाचित्तस्मिन्नप्याकुलाकुले कोलाहले चिरात् खलु श्रुतिपथे समापतितया तीव्रयाऽपीपदप्यनुत्तेजितयाऽमृतधारा इव धर्पन्त्या, विरम्य निमेषमात्र एव प्राकारारोहणदुःसाहसादनारब्धात्, परित्यज्य प्राणप्रियानपि स्वतुरंगमान् पीडातिरेकोन्मत्तान् तत्रैव।

तानन् च लब्धावसराः प्रदग्धशेषास्तुरंगमाः।

अचिरादेव चाकुर्वन् तां धारिणीं प्राकारकुंडलिनीं प्रदग्ध-प्रमीततुरगतुरगसादिशवमात्रधारिणीम् ।

राजदारिका तु, निभृतं निरीक्ष्य प्राकारशिखरादप्रत्याशितं साफल्यं कपटपटुप्रतीकारस्य तुष्टाऽपि स्मृत्वा तत्कल्पकस्य भ्रातुः प्रोषितस्य रणरणकखिद्यमानमानसा, साक्षात्कृत्य प्रत्यर्थिनः प्रथमं प्रहारमेवं विफलं समाश्वस्ताऽपि 'निष्फलप्रहारोऽपि यवनो वैफल्येनानेनाहताश प्रत्युत संधुक्षितजिगीषोऽचिरादेवाऽऽक्रमेत सहाऽपारेण बलेन प्रयुंजीत च स्वयमपि कपटकुटिलमाक्रमणव्यूहम्' – इति विचिंत्याकृतकृत्यमन्या देवलपत्तनरोधस्यापातलब्धेन विजयेन मत्ताया अनवहितायाः सैंधवसेनायाः परिणतिं स्मारं स्मारं सावधाना, संधुक्ष्य सैनिकानां परिपंथिप्रद्रावप्रहृष्टानामुत्साहं यथोचितेन साधुवादेन, समादिश्य दुर्गपालं निरीक्षितुं द्विपच्चेष्टितं प्रतिक्षणं प्रबोधयितुं च तामुपलभ्यैव किंचिदपि दुश्चिह्नं ---- न्यवर्तत विश्रामकक्षं कथंचिदपनीतक्षुधा ---- परिश्रांताऽऽरक्तलोचना । अविन्दत च निद्रासुखं निर्व्यवधानम् ।

अननुभूतपूर्वसदृशेनाश्रुतचरेण – किं बहुनाऽकल्पितप्रकारेण तेन शत्रोः नैशेन प्रतीकारेण विस्मिता किंकर्तव्यविमूढा विलीनाहंभावा यवनसेनाऽहर्मुखादारभ्य तच्छेषपर्यन्तं हतावशिष्टानां तुरगाणां दग्धावशिष्टानां तुरगिणां च शुश्रूषायां, दिनकरेऽल्पोदिते भाविकार्यपद्धतिविचारणायां गगनमध्यमध्यारूढे सुदूरदिगन्तव्यापिस्कंधावारप्रकल्पनायां च व्यापृताऽदृश्यतां याते प्रभाकरे निमज्ज्य पश्चिमांबुनिधौ निद्रावशं याता – एवं हि व्यलोक्यत दुर्गपालेन ।

सर्वतःप्रसृतसंतमसावृता च निद्रिता गाढम्----आ निशम् ।

अनुत्तीर्णेव विस्मयसागरादसमर्थेव पुनरुज्जीवयितुमुत्साहं मृतप्रायं, भीतेव दुर्गात्, सा नापरेद्युरपि दधर्ष समुपसर्तुं तां दुर्गप्राकारभित्तिम् । यापयामास च कतिपयानि दिनानि परित्यज्येव तद्विजयसंकल्पं – विस्मृत्येव तदस्तित्वम् ।

यथा यथा च व्यतीयुर्वासरा उपद्रवशून्यास्तथा तथा बभूवुः सैनिकाः राजदारिकाया आतुरा विनिर्गत्य दुर्गात् समाक्रमितुं द्विपद्-बलम् । अप्रत्याशितेन विजयेन धन्यंमन्याः, स्वां स्वां शौर्यगाथां परस्परं श्रावयन्तः, संभ्रममाकुलाकुलं यवनसैनिकानां साट्टहासमति-वर्णयतां, शौर्यं दिगन्तविख्यातं तेषामवमानयन्तस्ते स्वप्रमुखमुखेना-सकृन्निवेदयामासुः स्वामिन्यै स्वाभिलषितम् । न त्वधिजग्मुस्तस्या अनुज्ञाम् । दृढं हि सा विशश्वास यत् संतीर्य योजनशतदीर्घं महासागरं सर्वथाऽपरिचिते प्रदेशे कृतपदं, विजित्याधिकतमं मार्गं तस्य दुष्प्रसहेन वेगेन दृढबद्धमूलमतिवाहितापरिचितप्रावृट्कालं, मातृभूमेः सद्योऽधिगतैर्बलैरुपबृंहितबलं, यवनबलं, कल्पनातीततया प्रतीकारविधया विस्मितमपि न त्यजेत् स्वसंकल्पं विजयस्यैकमात्रावशिष्टस्य द्विपत्प्रतीकारस्थानस्य । आरभेत च पुनः नातिचिरादेव स्वं प्रयत्नं तीव्रतरम् ।

"यदि नाम जयः .... परिवर्द्धितबलः सेनया प्रदत्तयोदीच्यै-र्भारतीयनृपैः .... सैन्यमेतद्यावनं प्रभंजनवेगैस्तडिन्निभैराक्रमणैः पार्ष्णी पार्श्वयोश्चाहर्निशं पीडयेत् .... तर्ह्येव सैनिकानामास्माकीनानां साहसमेतदनुमोदनीयं भवेत्" – साऽवदत् ।

"समीचीनं वदति भर्तृदारिका" – मंद्रस्वरमाह धीसचिवः । "वस्तुत एवमेव संकल्पितमासीद्युवराजेनेतः प्रस्थानात् प्राक् ।"

"परंतु – अर्धमेव परिणतं संकल्पस्य" – स्वगतमिवाऽऽह राजकन्या ।

"अधिगता काचिद्वार्ता जयस्य ?"–अपृच्छच्च धीसचिवम् ।

"न" – प्रत्यवदत् स वृद्धोऽधोदृष्टिः ।

"दुरधिगमा च – सत्यस्मिन् महाजगर इव भयंकरे यवनबले कुंडलीकृत्येमं दुर्गं निरुच्छ्वासं प्रसृते" – प्रोवाच सा ।

"निशम्य वृत्तान्तमत्रत्यं कदाचिद्युवराजोऽवष्टंभयितुमस्माकं मनोबलं प्रेषयेदपि कमपि समाचारं विहंगममाध्यममवलंव्य" – अस्फुटमाह सेनाध्यक्षः।

स्मारितश्च सहसा तस्य दूतपारापतस्य, राजकुमारेण वज्रबाहुना परिवेष्टितमवलोक्य स्वदुर्गं यवनबलेन तस्मिन् निशीथे प्रेषितस्य, वृद्धो श्रद्धदत्तोऽक्षिपत् खिन्नां दृष्टिं स्वामिन्या दृशि। व्यावर्तयामास च तां क्षणाभ्यन्तर एवावलोक्य तां नितांतक्लान्ताम्।

"जयतु जयतु ···· भर्तृदारिका।" प्रविश्याऽऽह द्वारपालिका। "निरीक्षणस्तंभादहर्निशं प्रतिप्रहरं प्रतिक्षणं गतागतानि द्विषतः निरीक्षमाणानां गृध्रदृष्टीनां सैनिकप्रहरिणामन्यतमः निवेदयितुं किंचिद्भर्तृदारिकाया दर्शनमविलंबमेव कांक्षति।"

'प्रवेशय तं" – समादिशद्राजकन्या।

"दृश्यते ···· स्वामिनि ! ···· पार्ष्णिभागः पाश्चात्यो द्विषत्सेनाया व्यापृत इव समानयने दिगन्तादसंख्यानां यंत्राणां"–न्यवेदयद्बद्धांजलिः कृतप्रवेश एव सः।

श्रुत्वैव तं समाचारं, 'उद्यतो नूनं यवनः पुनः प्रहर्तुम्' इति संचिंत्य तत्क्षण एव सावधाना, धीसचिवेन सेनाप्रमुखेन च सह विनिर्गता मंत्रणाकक्षात्, समारुरोह दुर्गचत्वरमध्यवर्तिनमभ्रंकषशिखरं निरीक्षणस्तंभम्। व्यापारयामास लोचने सैनिकप्रहरिभिर्विनिर्दिश्यमानायां दिशायाम्। अवलोकयामास वियन्मध्यादनवगलितेन प्रदर्शयितुं परिपन्थिप्रयत्नं प्रखरतरप्रभेण प्रभाकरेण प्रकाश्यमानं पार्ष्णिभागं पाश्चात्याया यवनसेनायाः। ददर्श च दीर्घदीर्घाः पंक्तीः विप्रकर्षात् पिपीलिकामात्राणामिव भासमानानां यवनानां कानिचित् यंत्राणीव समाकर्षताम्।

"अश्मप्रक्षेपकानि यंत्राणि नूनमेतानि" – जगाद च क्षणमात्रानन्तरम् । "आक्रमणोद्यता अपि, प्रतीकारसंनद्धेषु सत्सु दुर्ग-सैनिकेषु समुपसर्तुमनुत्सुकाः, नूनमेते समीहन्ते क्रूरवोपलवर्षा घोरा-मुपरोद्धुमस्मान् गृहाभ्यन्तरेषु ततश्चाऽऽक्रमितुम् ।"

"सुष्ठु खलु तर्कितं भर्तृदारिकया" – प्राह धीसचिवः ।

"एवं तर्हि" – जगाद राजकन्या सेनाप्रमुखं – "व्याख्याय व्यूहमिमं द्विषतः सर्वेभ्यः सैनिकेभ्य .... आदिशतु भवान् तान् प्रवृत्तायामुपलवर्षायां गूहितुमात्मानं प्राकारशिरस्येव तत्र तत्र क्लृप्तेषु वर्षात्राणेषु स्थानेषु .... अभिवीक्षितुं यवनबलं .... व्यद्धुं च तत् समीपागतं सायकसंदोहेन ।"

"मन्ये, यवनः स्वमाक्रमणमनवसित एव दिनकरे प्रारप्स्यते" – स्वगतमिवागदद्ब्रह्मदत्तः ।

"यथाऽऽह तातः" प्रत्यवदद्राजदारिका । "अनुभूय तादृशीं तप्ततैलवर्षां स नूनं न घृष्णुयादाक्रमितुमस्मान् घनतिमिर .... इतः परम् ।"

"अपरं च", उवाच सा प्रस्थानोद्यतं सेनाध्यक्षम् । "आदि-शतु भवान् प्राकारस्यान्येषु भागेषु नियुक्तान् सैनिकानवधीर्य दृषद्-वर्षामिहत्यामवस्थाय गूढं स्वे स्वे नियते स्थले प्रतिकर्तुमनपेक्षितं द्विपदाक्रमणं तीव्रया नाराचवर्षया ।"

"किं .... समाकृष्यावधानमस्माकमस्मिन् भाग आक्र-मिष्यति भागानपरानेव दुर्गस्य द्वेषणः ?" — अपृच्छच्चकितः सेनाध्यक्षः ।

"शृगालचतुरः प्रयतिष्यते येन केनाप्युपायेन जेतुमेतदन्तिमं नः प्रतीकारस्थानम्" – अवदद्राजकन्या ।

अवितथीकर्तुं तद्वचनं समुत्सुक इवाचिरादेवाऽऽरभतारिः प्रभंजनवेगामन्तर्धापितगगनवितानामुपलवर्षाम् । अनवसितायामेव च तस्यां प्राक्रमत शनैः शनैरुपसर्तुं दुर्गं निर्मनुष्यमिव निष्प्रतिरोधम् ।

"कथं !···· परित्यज्य वाहनमभ्यस्तमा जन्मनः ···· पादातिकमेव बलं प्रयुक्ते परिपन्थी ?" – साश्चर्यमाह धीसचिवः लोकमालः शनैः शनैरुपसर्पत् सैन्यं गवाक्षात् ।

"मन्ये, तस्याऽऽश्वं ···· दग्धावशिष्टं ···· नोत्सहते पदमेकमपि प्रक्षेप्तुं समुद्दिश्य दुर्गं" – प्रत्यवदद्राजकन्या ।

विनिश्चित्य च विपक्षिबलं पर्याप्तं संनिकृष्टं समादिशत् स्वं धानुष्कबलं व्यद्धुं तत् ।

अवधीर्य निरंतरामुपलवर्षामकस्मात् समुद्भूतां, समुपेक्ष्यांगानि वर्मितानि तत्तत्संधिस्थानेषु नितांतमरक्षितेषु लक्ष्यमाणां, प्राकारभित्त्यन्तर्हिततया तदुद्गमस्याप्रतिविधेयां, नाराचवर्षामनुभूय पदाता यवनसैनिकास्तु – पश्यतोरेव राजकन्याधीसचिवयोः आरभन्त वेदितुं दयनीयामवस्थां स्वदेशबांधवानामश्वारोहाणां ···· त्रातुं च कांदिशीकाः ।

"मन्ये", जगाद राजदारिकाऽवलोक्य तदपयानं सोच्छ्वासाऽपि, "आक्रमणेऽस्मिन् यवनस्य न तादृशोऽभिनिवेशो ···· यादृश आदिमे । ···· सैनिका एते तेन पंचसहस्रानधिका एव रणरंगेऽवतारिताः । न च प्रुषिताः समादिश्यान्याः पृतना आक्रमितुमपरान् भागान् दुर्गस्य । आक्रामका एते सैनिका अपि रणे भंगं निष्प्रतिरोधं स्वीकुर्वाणा इव दृश्यन्ते । ···· न खल्वेतत् पूर्वं श्रुतमनुभूतं वा । ···· तत किमिव नामाभिमतं स्याद्यवनस्य ?"

"क्षेपणनं तितिक्षाया अस्माकं" – शनैः शनैरवदत् विचारमग्नो धीसचिवः ।

# षोडशः परिच्छेदः

अयं तयोर्विषादः, 'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः', प्रावर्द्धत एव प्रतिदिनम्। प्रतिदिनमेव हि प्रारभतारिः समाक्रमितुं तांस्तान् भागान् दुर्गस्य, ···· युद्ध्वा च कंचित् कालं व्यपवर्तितुं रणांगणात् ....परिहरन् स्वहानि यावच्छक्यम्। साधारणा दुर्गसैनिका, दैनिकान् तान् विजयान् प्रारंभे बहुमन्यमाना अपि, अचिरादेवानुमाय प्रत्यर्थिनोऽभिप्रायं, समीक्ष्य संक्षयं रणसामग्र्याः प्रतिदिनं व्याकुला बभूवुः। आतुराश्च निर्गत्य सहसा दुर्गाद्दुष्प्रसहवेगमाक्रमितुं रिपुबलं, प्रापयितुं तत् – स्वात्मानमेव वा – शलभगतिं समरदावानले। नागरिकाश्च पाषाणवर्षासदृशानि कष्टानि सर्वाणि सधैर्यं सहमाना अपि संक्षेपणं खाद्यसामग्र्याः प्रत्यहं लोकमाना अपि, राजकन्या-स्नेहवशादाक्रोशशब्दमेकमप्यब्रुवाणा अचिरादेव, वितर्क्य परिणामं युद्धस्यावश्यंभाविनं, खिन्नाः।

"प्रतिदिनं क्षयति मार्गणभाण्डारमस्माकम्। पूरयितुं च तदसमर्था वयं सर्वतः निरुच्छ्वासमुपरुद्धाः। अस्माकं धान्यसंग्रहोऽपि, पुण्योपचय इवाकर्मठस्य, ह्रसति निरन्तरम्। कियन्ति खलु दिनानि सहेत वराको भारमुदरभरणस्य सर्वेषां सैनिकानां नागरिकाणां शरणागतानां च? निरवशेषं क्षीणे च तस्मिन् क्षुधाक्लांताः कथमिव समर्था भवेम प्रतिरोद्धुमाक्रमणानि द्विषतः? चेष्टितानि वा तस्य

समवलोक्यास्माकं दुर्वलं प्रतिरोधमनुमाय च नो दयनीयामवस्थां प्रवृद्धोत्साहस्य दुर्गप्रवेशार्थं वद्धपरिकरस्याऽन्वाहिकानि ?···· नूनम् ···· एवमेव यदि नाम वयं प्रतिदिनं द्विपत आक्रमणान्युपद्रवमात्रकारीणि प्रतिरुन्धानास्तावन्मात्रेण संतुष्टाश्च कालमितः परं यापयेम ···· तर्ह्यचिरादेव भवेम तस्य कृते – विनैव खड्गोत्क्षेपं जय्याः ।"

"तर्हि किं यावदस्माकं सैनिका अक्षीणसामर्थ्या युयुत्सवश्च तावन्निर्गत्य निभृतं दुर्गाद्दुष्प्रसहवेगमाक्रमितव्योऽरातिः? ···· अप्यस्माकं सैनिकाः पराजेतुं तं शक्ष्यन्ति ? ···· न । ···· अपरिमितबलः सः क्व, क्व चाऽस्माकं पणीकृत्य प्राणान् युद्ध्यमाना अपि संख्ययाऽस्वल्पा योद्धारः ?"

"अपि वयं, तडित्प्रहारं प्रहरन्तः, प्रभंजनवेगेनाग्रे सरन्तः, निर्भिद्य रिपुसेनां दुर्गमभितः कृतकुंडलनां शक्ष्यामो वहिर्गन्तुम् । ···· शक्ष्यामः कदाचित् । ···· परंतु ···· वहिः ···· कुत्र ···· गन्तुम् ? ···· यवनेन पादाक्रांतेऽस्मिन् राज्ये ···· को नाम प्रसहेत दातुं नः शरणम् ? किं न शक्ष्यामः ···· वहिः ···· अस्माद्राज्यादेव वहिः ···· गन्तुम् ? ···· परंतु ···· को नाम भारतीयः नृपः उत्सहेत ···· ?"

—सविषादमचिंतयद्राजकन्या, निपतिता पर्यंके, परिश्रांता, लोकमाना च निद्रावशादर्धमीलिताभ्यां नयनाभ्यां क्लांताभ्यां रत्नदीपं विश्रामकक्षैकदेशे निष्कंपं ज्वलन्तं, शनैः शनैः जीर्णतामुपयाते निशामुखे, व्यपगते चिंताभारभुग्ने धीसचिवे, कृत्वा दैनिकीं मंत्रणां, व्यतीत एवंप्रायेणोदन्तेनैकस्मिन् पक्षे ।

"अथवा ···· अथवा ···· किमिति न वहिर्निर्गत्य, दिशामुदीचीनां परिगृह्य, सीमावर्तिनि कश्मीरराज्ये प्रविश्य, हिमवदुपत्यकासु जय एव न मार्गणीयः ?" – सस्मितमचिन्तयत् सा तंद्रापरवशमानसा । "न यवनः नूनं धर्षिष्यति सद्य एवाऽऽक्रमितुं तद्राज्यमपि ! ···· जयः

.... तातः .... अहं .... सर्वं एव वयं लब्धाश्वासा अनवरतं प्रयत्य जागरयिष्यामस्तांस्तान् भारतीयान् नृपान् । सह च महत्या सेनयाऽऽक्रमिष्यामः सिंधुराज्यम् । मोचयिष्यामश्चैतद्यवनतुंडात् । .... कियान् खलु हृष्टः स्याज्जयो .... मृत्युमुखादिव विनिर्गतौ समवलोक्याऽऽवाम् । .... कियता चोत्साहेन .... " ।

विचिन्तयन्ती चैवमेव किमपि किमपि .... हृष्यत्स्वांता निद्रांकेऽलीयत ।

लीनैव च ददर्श इव .... वेत्रवती ससंभ्रमं तस्याः शयनकक्षे प्रविशन्तीं निवेदयन्तीं च तस्यै किमपि, स्वात्मानं च सहसा समुत्तिष्ठन्तं शय्याया, विस्मृत्य सर्वं खेदं तामनु धावन्तं आरोहन्तं निरीक्षणस्तंभसोपानावलिं, प्रविशन्तं निरीक्षणकक्षमाकुलाकुलं हर्षमूकेन साश्रुनयनेन धीसचिवेनाऽऽवेशमुखरेण सेनाध्यक्षेण निरीक्षकसैनिकैश्चावधीर्य योग्यायोग्यविवेकमुच्चैर्हसद्भिराहोपुरुषिकावाचालैः, व्यापारयन्तं लोचने सर्वैः युगपदेव तर्जनीभिर्विनिर्दिश्यमानायां दिशायां, समवलोकयन्तं क्षितिज उदीचीने प्रतिक्षणं स्पष्टतरीभवदन्यमपारं बलं, पश्यन्तं कुंडलीकृत्य दुर्गं सर्वतः प्रसृतं निश्चितं यवनसेनासागरं सहसा व्याकुलीभवन्तं, लोकमानं जिज्ञासयेवाऽऽतुरातुरया धीसचिवस्याऽऽननं प्रस्फुरदधरोष्ठं, अनुभवन्तं सरभसमागताया हर्षातिरेकविह्वलाया विलुलितकेशपाशाया संमदातिशयरोमांचितगात्र्याः प्रमोदोत्सेकवेपमानदेहलताया भगिन्याः कनीयस्या मुखकमलं प्रवहदानंदाश्रुविलग्नं तस्या उरसि समुच्छ्वसदुरोजकुड्मले लगत् संबोधयच्च तामस्फुटाक्षरम् .... 'अंब ! .... अंब .... ' इति ।

प्रसह्य च प्रबोधिताऽरुंतुदेन केनचित् स्पर्शेन भुजलतायां, ददर्श स्वात्मानं सत्यमेवानुभवन्तं 'अंब ! ....अंब....' इति तामस्फुटाक्षरं संबोधयत्, तस्या उरसि समुच्छ्वसदुरोजकुड्मले लगत्, अश्रुक्लिन्नं मुखकमलं भगिन्याः कनीयस्या भयोत्सेकवेपमानदेहलताया भीत्यतिशयरोमांचितगात्र्या विलुलितकेशपाशाया खेदातिरेकविह्वलायाः –

लोकमानं चाऽऽनमितं तयोरेवोपरि, क्षीणतररत्नदीपप्रभाप्रकाशित-वामभागं, कृष्णवर्णं, खल्वाटप्रायमुच्छूननाडीकलंकितललाटमाकुंचित-भ्रूलतमेकाग्रया तीक्ष्णया मर्माणीव दहन्त्याऽङ्गानीव तस्या दशन्त्या रोमाणीव तस्या उत्पाटयन्त्या आरक्तया पिंगलतारकया दृशा तामेव निरीक्षमाणं ह्रस्वनासं प्रस्फुरन्नासापुटमुत्फुल्लकपोलं विवृतमुखबिल-मीषल्लक्ष्यपीतदन्तं ···· तुण्डं ···· काकस्य !

असमर्था च लोकितुं तत् क्षणमात्रमप्यधिकतरं, व्यावर्तया-मास ततो दृष्टिम् । प्रेरयामास च तां – निपतितैव शयने – शयन-कक्षमभितः । अवलोकयामास सं संकुलं महाप्रमाणैः लोहशीर्षण्यैर्व्यूढ-कंकटैः रक्ताऽऽरक्तकृपाणैः निःशब्दैः निश्चलैरेकाग्रया दृष्ट्या तामेव सकौतूहलमिव सादरमिव ध्यायद्भिरुग्रगंधैरंशावतारैरिव कृतांतस्य सैनिकैर्यवनैः ।

निमिषेण च तां तत्क्षण एव विलीनयितुं तद्दुःस्वप्नम् ।

"जयतु ···· जयतु···· भर्तृदारिका !"– शुश्राव च क्षणान्तर एवानुमाय तत्प्रयासमुपहसतः कद्वदस्य तस्य नराधमस्यास्वरं स्वरम् ।

"मृष्यतु भर्तृदारिका । ···· परंतु ···· नायं स्वप्नः । ···· सत्यमेव ···· राजकन्या ····" आरभत स शठः । व्यरमच्च सहसाऽ नुभूय चपेटप्रहारं तीव्रं कपोले, अवलोक्य च तस्मिन्नेव क्षणे दूरीकुर्वतीं भगिनी, समुत्तिष्ठन्तीं शयनात्, प्रधावन्तीं च समुद्दिश्य नातिदूर एव कक्षकोणे तिमिराच्छन्नप्राय आसनायामेकस्यां विराजमानां विकोशां खड्गलताम् ।

"अहो ! ···· पुरुषायते चिरंटीयम् !" परामृशन् पीडाविह्वलं स्वं कपोलमवलोकयंश्च हिंस्रया लोलुभया दृशा तां, सहसा पुरः समुपसृतैः सैनिकैर्बलवद्भिर्विधृतां विफलप्रयत्नां समुच्छ्वसत्स्तन-मंडलां ज्वलन्नयनामारक्तमुखमुद्रां, जगाद स एवमपध्वस्तः ।

"यदि हि यवनः सः प्रत्यवायः नाभविष्यत्तर्हि .... अहं .... इमां .... पांसुलां ......" पुनरारभत स दुर्मुखः। अग्रे सरंश्च .... सहसा व्यरमत् दृष्टैकतमं यवनसैनिकं तमुद्दिश्यैव चलितम्।

"नयत .... इमाम्!" – आदिदेशास्फुटाक्षरं सः, कथमपि संनियम्याऽऽत्मानं, तृणमिव तां विपाक्तया दृष्ट्या। "इमां च" – क्षणमात्रं व्यावर्त्य तां "नग्निकाम्। नयत। अर्पयत च महाप्रतापिन ऊर्जस्विनः श्रीमुहम्मदस्य सेवा ...."

"बध्नीत .... बध्नीत .... एतयोः (सहासं) नलिनीनाभ-निभं भुजयुगलं निगडाभ्यां" – ससंभ्रममाह स नीचः .... समवलोक्य देवलदेव्या दक्षिणं हस्तं निभृतं समुपसर्पन्तं तच्चोलं समुद्दिश्य। "निगूहतानयोः कनकाभे देहलतिके कृष्णाभ्यामाभ्यामाप्रपदीनाभ्यां कंचुकाभ्याम्। पिधत्त लोचनान्येतयोः कृष्णपट्टिकाभ्यामाभ्याम्। पूरयत चानयोर्मुखबिले वस्त्राभ्याम्। .... अन्यथा – मध्यैमार्गमेवैते सहसाऽऽक्रुश्य विफलीकरिष्यतोऽस्माकं सफलमिममभियानम्। .... न जानीथ यूयमधन्याः पितामहमनयोः .... परमस्वामिभक्तं छद्म्।.... तस्यैवेमे वंशजे। स्वभावपारंगते खल्विमे विश्वासघातकलायाम्।.... एवम्। .... एवम् प्रतिष्ठामहे तावदधुना। .... (अभितो विलोक्य) .... कुत्र खलु सा .... सा .... जरती? .... सा वृद्धा .... याऽस्मान् गुप्तेन भूमार्गेणाऽऽनीतवतीह? .... (साश्चर्यम्) अपि सा विलीना.... परिकलय्य ब्राह्मं मुहूर्तं समासन्नप्रायम्? .... (कुंठितमतिरिव किंचिद्विचार्य) .... भवतु। .... विनैव तया शक्ष्यामः प्रतिनिर्वर्तितुम्!"

उक्त्वा चैवं .... निरगच्छत्तस्मात् कक्षात्। अतिक्रम्य च कानिचित् कक्षान्तराणि मंदप्रकाशानि शून्यशून्यानि कांचित् सोपाना-मलिमवरोढुमारभत। प्रविश्य च तमोबहुलं भूगृहमेकमुदघाटयत्तदेक-देशवर्ति गूढं द्वारमेकम्।

प्रविष्टश्च तदन्तः प्राक्रमताऽऽक्रमितुं योजनदीर्घमुग्रगंधि विषमं भूमार्गं वहिर्यायिनं ---- विकर्षन् सशस्त्रसैनिकपरिवृतां निगडितभुजयुगलां कृष्णवस्त्रावगुंठितां पूरितमुखां, भगिन्या समानवृत्तान्तयाऽनुगम्यमानां, पिहितनेत्रकमलतयाऽनभिज्ञां कक्षान्तरे निपतितस्य परशवधप्रहारछिन्नग्रीवस्य रुधिरक्लिन्नस्य धीसचिवस्य शवस्य ।

# सप्तदशः परिच्छेदः

कुसुमकोमलतया ललनास्वभावस्याऽनुभूय सर्वथाऽनपेक्षितं विपत्प्रहारं प्रथमे क्षणे सन्नाया अपि तेजस्वितया प्रकृतेरन्यस्मिन्नेव सापराधं नराधमं दंडयितुं प्रवृत्ताया, वैपरीत्याद्भागधेयस्य विफलप्रयासाया अपि महासत्त्वतयाऽऽत्मन ईषदप्यविहस्तायाः, कलयित्वाऽऽत्मानं रिपुणा निगृहीतमात्मरक्षाविरताया अपि प्रत्यर्थिप्रतीकारनिश्चयादणुमात्रमप्यविचलितायाः, क्षालयित्वेव स्मृतिमाप्तजनस्य दिवंगतस्य मार्जित्वेव विचारणां द्विपत्कपटव्यूहस्य सफलीभूतस्य मनःपटलादनागतचिंतायामेव समाहितप्रेक्षाया, 'धूर्तो द्वेपणः नूनं प्रयोक्ष्यते नौ विजेतुं महादुर्गं स्व एव' इति सम्यक् जानत्या, 'विलोक्याऽऽवां यक्षेणैव केनचिद्दुष्टेन रिपुहस्तसमर्पितौ विस्मयमूढः सेनाध्यक्षोऽंगीकृत्य विजयं रिपोः महादुर्गं तस्मै समर्पयिष्यति' इति तर्कयन्त्या अपि, 'किं करिष्यति तदा तातो ब्रह्मदत्त'– इति विनिश्चेतुमपारयन्त्याः, 'किं निश्चेष्यति यवनो विजितेऽन्तिम एतस्मिन् प्रतीकारस्थाने ?···· प्रवर्तेत कच्चिद्दुराचारेण कलंकयितुमात्मनो दिगन्तप्रसृतां कीर्तिम् ?···· न खलु प्रवर्तेत। श्रुतो हि स मया ···· धीरोदारसत्त्वस्तथैव स्वात्मनः प्रभवति यथाऽन्यस्य ! ···· प्रवृत्तेऽपि का चिंता ? विद्यत एव मम समीपे मम शस्त्रममोघं तातेन प्रदत्तम्। तेनाहं शीलनिधिमावयोः रक्षितुं प्रभवेयमेव' इति विचिंतयन्त्या,

'लब्धसाहाय्यो जय आक्रामेत् कदाचिद्यवनं, जित्वा च तं मोचयेन्नौ तद्बंधनादिति तु दुराशामात्रम्.... आक्रामितोऽपि हि यवनः– समुद्भूतायामेव क्षीणायामपि स्वपराजयसंभावनायां– नूनमपहरिष्य-त्यावयोः प्राणान्.... । तत् पर्यवस्याप्याऽऽत्मानं, मया, रक्षन्त्या शीलनिधिं प्रतिनिमेषं, द्विपन्निगडनिगडितयाऽपि,.... आ प्रलयं तथा प्रयतनीयं यथा भ्राता मम.... वराक.... एकाक्येव परचक्रप्रतीकाराय प्रयतमान उपकृतः स्यात्.... । शरणीकरणीयश्च यमुनाभ्राता समुपस्थित एव शीलसंकटे'इति निर्धारयन्त्या, विचारव्यापृततया दीर्घदीर्घमपि निम्नोन्नतमपि विषजंतुबहुलमपि निर्वातमपि भूमार्गं विमनस्कतयैवाऽऽक्रामन्त्या, अंधकारसागर इव चलन्त्यास्तस्या राजदारिकाया मानसं सहसा समाकृष्यत एकया शीतलया प्रोच्छ्व-सद्दूर्वाकुरवासवासितया निशांतसमीरलहर्या, असूच्यत च सामीप्यं वहिर्निर्गमद्वारस्य ।

तत्क्षण एव सावधानं च तद्विनिवृत्याऽनागतचिंताया, आरभताऽऽगतमेवैकाग्रतया ग्रहीतुं निवेदयितुं च तत् सविस्तरं स्वस्वामिन्यै ।

आरभत निवेदयितुं– भूमार्गमुखद्वारसमुपसर्पणं, कतिपय-सोपानाऽऽरोहणं, कस्मिंश्चिद्दृषन्मयभूतले प्रसरद्धूपधूपायिते गर्भगृह इव कस्यचिद्देवालयस्य भासमाने कक्षे प्रवेशनं, अनुसरद्यवनसैनिको-पानन्निनादितात्तस्मादनुदिततया प्रभाकरस्यावतमसाच्छन्ने प्रचलन्मंद-शीतलसमीरवीजिते समुत्पतत्पतत्रिपत्रनिनादितगगनांगणे सिकतिले समतले भूप्रदेशे निःसरणं, समर्पयितुं शत्रोरनर्घं निधिं स्वसेनापते-श्चरणयोरुत्सुकोत्सुकोत्सुकैर्नातिदूरावस्थितात् प्राकारात् संभवनीयं निरीक्षणं परिहर्तुमातुरैर्वा त्वरितगमनैर्यवनसैनिकैर्नुद्यमानायाः' शीघ्रतरं मार्गाऽऽक्रमणं, आदौ नातिस्पष्टं ततश्च प्रतिपदक्षेपं विस्पष्टं श्रुतिपथमवतरद्भिस्तुरङ्गमाणां सुप्तोत्थितानां ह्रेषारवैः नासाविषयतामुपगच्छद्भिस्तेषां मलमूत्रदेहगंधैश्च व्यज्यमान-संनिवेशस्य द्विपत्स्कंधावारस्य समीपे समुपसर्पणं, सहसा तद-

वरोधनं, कैश्चित् खड्गभीषणैः जागरणाऽऽरक्तलोचनैः श्मश्रुलाऽऽताम्रमुखैर्महाप्रमाणैर्व्यूढकङ्कटैर्यवनैः स्कंधावाररक्षाधिकृतैरिव संलप्याग्रसरेण मूकेन सह दूरे कृत्वाऽऽप्रपदीनमवगुंठनं तत्परीक्षणम्, आश्चर्यस्तिमितनयनैर्झटिति तत्प्रवेशानुमोदनं, सह वंधकैः पुरश्चलनं, समतिक्रम्य क्रोशदीर्घमध्वानं श्रूयमाणम्लेच्छसंलापसंसूच्यमानसैनिकपटकुटीरपंक्तिवद्धोभयपार्श्वं सहसा यथानिर्देशं प्रवासाद्विरमणम्, अनुवृत्य कांचिदाज्ञां म्लेच्छस्य कुतोऽप्यानीताया-मासन्द्यां सह भगिन्या समुपवेशनं,– प्रतीक्षणं च निरुद्धश्वासमुच्छुष्कमुखं परीक्षाक्षणस्य ।

अथाऽऽरुरोह भगवान् मित्र उदयाद्रिशिखरं, समादिष्ट इव विधात्रा साक्षात्कर्तुं परीक्षाक्षणं तस्या, एवं प्रतिपालयन्त्या आगमनं यवनसेनापतेः, संवत्सरात् प्राक् सांयात्रिकस्य कस्यचिदपहरणं निमित्तीकृत्य हठात् समुद्भूतस्य कृत्वाऽभूतपूर्वं संनाहं समुल्लंघ्य सिंधुसागरसीमां सहसा सिंधुदेशे प्रविष्टस्य विजित्य दुर्गान् वशीकृत्य जनपदान् पराजित्य सैंधववीरान् दुष्प्रसहवेगं समस्तं देशमभिभूतवतोऽतिमां प्रतीकारज्वालामपि शमयितुं प्रवृत्तस्याऽऽक्रमणप्रलयपयोघनस्य प्रचंडस्य प्राणभूतस्य, वयसाऽनधिकस्यापि चातुर्येणाप्रतिमेन बलेनाद्वितीयेनोत्साहेनापारेणानन्यादृशवलाध्यक्षपदेऽभिषिक्तस्य, दिगंतविख्यातस्य ।

आरभत चाचिरादेव सानुकंपमिव सस्नेहमिव परामष्टुं तां सुखदैः करैः ।

प्राक्रमत वातुं सदागतिः कथयितुमिव तामसाहाय्यां भ्रातुस्तस्या दिवंगतस्य वज्रवाहोः संदेशं कमपि त्वरितगतिः ।

विनिवेदयितुमिव च तस्यै निर्विण्णायै मनोगतं तज्जन्मभूमेः रवितुं कश्चिद्विहंगमः निलीनः नातिदूरवर्तिनः कस्यचिन्महावृक्षस्य शाखासंभारे ।

सहसाऽन्वभवत् सा तमेवाऽरुंतुदं स्पर्शं स्वपार्श्वे। अशृणोच्च पापस्य काकस्य शब्दमाकुलाकुलं समादिशन्तं तां समुत्थातुम्।

अवधीर्य तद्वच आसीनैव यथापूर्वं, समाकर्णयत् कांचित् म्लेच्छोदीरितामप्यम्लेच्छितामविदितामिप्रायामपि स्पष्टप्रभावामनतिक्रमणीमामप्यनुद्धतां स्तनितगंभीरां वाचम्।

समवेच्च स्वात्मानं स्नान्तमिवानात्मीयेऽप्यनाविले मर्मपारगेऽप्यमर्मंच्ने प्रसरेऽपि प्रशांते कस्यचिद्दृक्प्रवाहे।

तामेव वाचमनुसृत्य केनापि दूरीकृतावगुंठनाऽपनीतनयनपट्टिका चाऽपश्यत् स्वपुरतः स्थितमभिभूततया दृक्शपतेः सूर्यप्रकाशेन सहसा तद्विषयतामुपगतेनानतिस्पष्टविशेषमपि सुलक्ष्यपुरुषाधिकप्रमाणं, स्पृशन्तमिवाभिमानोन्नतेनानुपहितशिरस्त्रेण मंदसमीरदोधूयमानभंगुरचिकुरकलापेन मस्तकेन गगनवितानं, कर्णान्तविश्रांतनिर्मललोचनमारक्तगौरवर्णमतिविशालभालफलकमाकुंचितघनभ्रूलतं दीर्घसरलनासमाबद्धारक्तौष्ठपुटमीषदुन्नतचिबुकं सुकोमलश्मश्रुलकपोलं वृषस्कंधं लोहकवचपिनद्धविशालवक्षःकपाटमाजानुबाहुं कृशमध्यं त्राणाऽऽवृतदीर्घजंघमेकं .... सुलक्षणं सुरूपं तरुणं .... म्लेच्छम्।

अश्रद्दधानेव च तस्य तत्त्वे,.... न्यमज्जयत्- प्रायतत वा निमज्जयितुं- स्वां तीव्रां मर्मग्राहिकां दृशं तद्दृशि।

क्षणमात्रानन्तरं हि साऽपातयत्ताम्- असमर्थेव सोढुं कमप्यतिशयं तस्या, अर्धनिमीलितत्वात् लोचनाभ्यां पक्ष्मलाभ्यां नातिसुलक्ष्याया अप्यप्रत्याख्येयविशेषाया, आनीलाक्षिकूटकायाः, स्वभावोदग्रतारकायास्त्रैलोक्यमिवाभिभवंत्या, अलौकिकत्वमिवाऽऽत्मनः प्रकाशयन्त्या, आत्मविश्वासमिवापारमुद्वमन्त्याः, स्वशक्त्यति-

शयप्रसादमिव समुदगिरन्त्या, गभीराया, दुरवगाह्यायाः, प्रसन्नायाः, निर्निमेषं सकौतूहलमिव सानुकंपमिव सादरमिव तामेव ध्यायन्त्याः ।

आरभत च···· अवशेयाऽऽत्मनः···· समनुभवितुमात्मानं सुकुमारकुमारिकाऽनधिकविशेषम् ।

अश्रुणोच्च चिरादिव तामेव स्तनितगंभीरां वाचं समादिशन्तीमिव काकम् ।

अपश्यद्- अपांगविलोकनेन तं नराधमं नात्युत्सुकमिव पालयितु तदादेशं, सहसा समुपजातकंपं तद्दृष्टिक्षेपमात्रेण, प्रवृत्तं तन्नियोगमनुष्ठातुं, शुष्कस्वरं च वदन्तं तामुद्दिश्य···· "उदारधीः सेनानीरस्माकं समाज्ञापयति- त्वत्तुल्या···· वीरा···· रमणी न तेन स्वे देशे वीरबहुले विजितेष्वसंख्येषु देशेषु वा दृष्टचरा । (अस्फुटाक्षरं)···· स आदिशति- यदि नाम तस्य मातृभूमिस्त्वत्तुल्यामेकामपि कन्यकां जनयितुं प्राभविष्यत्तर्हि सा स्वात्मानं धन्यममंस्यत । (सविलक्षस्मितं) शास्ति च- स त्वामद्य एव स्वमातृभुवः परमोच्चस्य स्वनामधन्यस्य धर्मगुरोश्चरणयोः संनिधौ प्रेषयिष्यति- अवलोकयन्तु सर्वे तद्देशबांधवा अनुपमं स्त्रीरत्नं···· कृपणेऽस्मिन् देशे···· सिंधुनद्या रोधसि···· विकसितमिति ।"

विरत एव तस्मिन् किंचिदुन्नमितदृष्टिः प्रायतत किंचिन्निवेदयितुमिव । न तु शशाक···· असमर्था विजेतुं साध्वसम् । तस्थौ च यथापूर्वं मूर्तिरिव निश्चला हतभाग्या ।

ददर्श तमधोदृष्टिरेव···· प्रतीक्ष्येव तस्याः कामपि प्रतिक्रियां मुहूर्तमात्रं···· विरज्य इवानधिगत्य तां···· सनिःश्वासं तद्विमुखीभवन्तम् । आदिशन्तं च सहसा तैक्ष्णं निरतिशयमुपेतया वाण्या किमपि ।

शुश्राव तमभितः कृतसंमर्दानामपि विनयान्वितानां तदादेशश्रवणसमकालमेव परिवर्तितमुखानां दुर्गध्वजस्तंभविनिगडितलोचनानां समुत्क्षिप्तप्रासादानामसंख्यानां यवनसैनिकानां कंठेभ्यो गगनवितानविदिदरिषयेव दुष्प्रसहया सहसा निःसरन्तं 'अल्लाहो अकबर ! अल्लाहो अकबर ।' इति जयनिर्घोषम् ।

अलोकत, स्वयमपि व्यावर्तितनयना, विहायोदयाचलं गगनांगणे कृतप्रवेशस्य भास्करस्य करैरुद्भास्यमानान्, स्वदुर्गध्वजस्तंभस्याधस्तात् कृतसंघट्टान्, निर्निमेषं सांगुलिनिर्देशं तस्या एव दिशि लोकमानान्, विस्मयमूढानिव निश्चलान्, सेनापतिप्रमुखान् स्वसैनिकान् नागरिकांश्चासंख्यान् ।

अलोचत कतिपयक्षणानन्तरमेव तान् राजध्वजमवतारयतस्तत्स्तंभात् अवतरतः प्राकारशिरसः, समुद्घाटयतो दुर्गमहाद्वारं, समुपसरतश्च तद्दिश्यैवाधोमुखान् पदातान् निःशब्दान् निःश्वासान् ।

आरभताऽऽशासितुं, विजानत्यपि तद्वंध्यत्वं तलेऽन्ततमे स्वहृदः, 'अपि नाम – एते, निगूह्याभिप्रायं स्वमनेन शरणाऽऽगमनप्रदर्शनेन, समीपतममागताः, सहसोत्कृष्टच्छुरिकास्तृणीकृत्य प्राणान् दुष्प्रसहवेगमाक्रमिष्यन्त्येतान् संख्ययाऽत्यधिकानप्यनवहितान्, 'तृणसारा इमे' इति सोपहासमवलोकयतो यवनसैनिकान् । ""मोऽस्य"" ।'

अस्खलच्च सहसाऽऽशाबंधादुद्वेजितेव कयाप्यन्तस्तलमिव तद्हृदो विलोडयन्त्या प्रखरया दृशा निर्निमेषया ।

'कुतः खल्वियम्' इति किंचिच्चकिता च यावद्व्यापारयति स्वां – सहजमिव – दिशि यवनसेनापतेस्तावदाकर्णयामास तं ""तन्मुखविनिगडितलोचनं स्मेरवदनं तस्मिन्नेव क्षणे समादिशन्तं किमपि स्वसैनिकान् तथैव स्तनितगंभीरया किंचिदप्यनुत्तेजितया वाचा ।

ददर्श च तान् यंत्रचालितानिव सहसा समुद्धृतकुंतान् शताधिकान् निःशब्दं परिवृण्वतस्तां सह भगिन्या तस्यामेवाऽऽसंद्यां

तथैवोपविष्टाम् । अवशिष्टांश्च – विभज्याऽऽत्मानं भागेष्वनेकेषु सहस्राधिकपदातेषु सहसा प्रतिगच्छतः सैंधवान् दुर्गवासिनः निष्प्राणमिवाऽऽगच्छतः कुंडलयतश्च तान् निष्प्रतिरोधम् ।

भग्नस्य सैंधवस्य स्वाभिमानस्यावशिष्टानंशान् तान् स्वदेशबांधवान् गोभक्षकेभ्य आत्मानं समर्पयितुं शनैः शनैः समुपसरतः निराशया दृष्ट्याऽवलोकयन्त्यास्तस्या मनसि समुदभवत् सहसा प्रश्नः – *कुत्र नु तातो ब्रह्मदत्त इति* । अशृणोत् तस्मिन्नेव क्षणे तदेवाभिधानं समुच्चारितं यवनसेनापतिसमीपवर्तिना केनचित् सैनिकेनाधिकारिणा जिज्ञासयेव कयाचित् काकमवलोकयता । अपश्यच्च काकमपराधबोधभुग्नमिव तं स्वस्वामिनीसंरक्षणप्रयास एव कृत्तकंठमभिनयेन सूचयन्तम् ।

अधिगत्य तमन्तिममप्याशातंतुं विच्छिन्नं दैवहतकेन, साक्षात्कृत्याऽऽत्मानं सर्वथा पराजितं दर्पणेनानुभूय स्वमेलनमसंभवं जयेन, मंदभाग्या सा राजकन्या तथा न्यमज्जदतले नैराश्यसागरे यथा नाशकत् तदनंतरं वेत्तुं – म्लानमुखानां क्षामाणां दीनानामंशावताराणामिव पराभवस्य स्वसैनिकानां यवनसेनापतिसमीपे समुपसर्पणं, तत्समक्षं जानुभ्यां भूमौ गमनं, यवनसेनाध्यक्षस्य तेभ्यः निःशब्दं प्राणदानं, तेषां यवनसैनिकैर्बंदीकरणं, ततोऽपनयनं, विजयमत्तानां यवनसैनिकानां दुर्गमुद्दिश्य सजयघोषं ततः प्रस्थानं, मृतस्य इव व्यात्तमहाद्वारमुखे तस्य प्रवेशनं, तस्याधिग्रहणं, निक्षिप्यैकां गूढभावां दृष्टिं तन्मुखारविंदे समवलोक्य तां स्फटिकमूर्तिमिव निश्चलमुपविष्टां तां किंचिद्वक्तुमिव प्रवृत्तस्य विचिन्त्येव किमपि सहसा संयम्येव स्वात्मानं क्षणमात्रानन्तरं दीर्घमिव निःश्वस्य व्यावर्त्य दृष्टिमन्यत्र धीरगंभीरयाऽपि मंदयेव गत्या यवनसेनापतेस्ततोऽपसरणं, अनुसृत्येव तदादेशं तत्संमुखमुपस्थितस्य विनयावनतस्य सैंधवस्य कस्यचिदभ्यर्थनानुसारं समुत्थानं, विनिगडितमणिबंधाया एव ततः प्रचलनम्, अतिक्रम्य नातिदीर्घं पंथानं यवनस्कंधावारमध्ययायिनमेकस्मिन् नातिविशालेऽपि सर्वविधसुविधोपपन्ने सावधानैरुदग्रैः सखड्गैर्यवन-

सैनिकैः सर्वतः परिवेष्टिते पटगृहे प्रवेशनं, पातनं चाऽऽत्मन एकस्यां सुधाधवलप्रच्छदायां शय्यायाम् ।

शय्यायां तथा निपतितायाः, निमील्य नेत्रे संतप्ते तस्मान्नैराश्यादतलादात्मानं समुद्धर्तुमनवरतं प्रयतमानाया, भगिन्या अपि विपदि घोरायां तामेवावलंबमानाया, अनभिज्ञाया, विचारवात्याचक्रेण दोधूयमानं कथंचित् स्थिरीकृत्याऽऽत्मानं प्राप्तायां परिस्थितौ कर्तव्यं स्वं विनिश्चेतुं प्रयस्यन्त्या एव तस्याः निराहाराया .... अन्तं दुरन्तमियाय स दिवसः । अनुशोच्य मुहुर्मुहुः यत्किंचनकारित्वं विधातुर्म्लान इव पश्चिमांबुनिधौ स्वात्मानं न्यपातयद् भगवान् दिनकरः । असंमाय तद्हृदि वहिरुद्वेल्लितः शोक इव सिंधुभूम्याः परिकलय्य भाविनं वियोगमात्यंतिकं विकलायाः, प्राक्रमताऽऽक्रमितुं चराचरं घनांधकारः ।

निपतिता अश्रुबिंदव इव दिनश्रियो, गगनांगणे काशितुमारभन्त ताराः । आलोकयितुं च दिगन्तप्रसृतं यवनस्कंधावारमसंख्या अलाताः सिंधुविजयोल्लासलोला इव प्रखराः ।

# अष्टादशः परिच्छेदः

उपातिष्ठच्च तस्याः समक्षं साक्षाद्यमदूत इव एकः सैनिकः करवालकरालः कज्जलकृष्णकायो महाप्रमाणो व्यूढकंकट आरक्तलोचनो भंगुरकेशः स्थूलाधरोष्ठः। अगदत्तामसंस्कृतायां म्लेच्छभाषायां किंचिद्घर्घराक्षरम्। अवलोक्य च शयननिपतितां तामवधीरयन्तीमिव तद्वचः निगडश्रृंखलयाऽकर्षत्।

दैवोपहता राजदारिका त्वनुभूय तं कष्टकरं कर्षं हस्तयोर्भग्नतंद्रा, किंचिदुन्नमितम्लानमुखकमला, समवलोक्य तं यवनं मारमिव प्रादुर्भूतं सर्वतः प्रसृतस्य घनांधकारस्य, विज्ञाय च स्वप्रस्थानकालं समुपस्थितं, यंत्रचालितेवोदतिष्ठत् शय्यायाः। गृहीत्वा च हस्तेन श्रृंखलाजडेन हस्तं भगिन्याः संरक्षणार्थमिव स्वसमीपमुपसृताया, आरभतानुगन्तुं विलुलितकेशपाशोच्छुष्कवदना निःशब्दा विभ्रांतकल्पा। अनुसृत्य तदिशं, प्रवेशद्वार एव तस्य पटगृहस्याऽदित एव संनिधापितमेकं कृष्णवर्णं पारसीकं सह भगिन्याऽऽरुरोह। निःससार च स्कंधावारादनभिज्ञा कुंडलीकृत्य तां सहचलितानां शस्त्रभीषणानां यवनतुरगारोहाणाम्,– अनभिज्ञाऽभितः कृतसंमर्दानां तामेवैकाग्रया दृष्ट्या पश्यताम्,– अनभिज्ञा दूरेऽवस्थाय तामेव निर्निमेषमवलोकयत एकाकिनः प्रज्वलदलातप्रकाश्यमानस्य निश्चलस्य यवनसेनाध्यक्षस्य, अनभिज्ञा दीर्घदीर्घस्य सिंधुभू-

नि:श्वासस्येव मंदगतेः सदागतेः–अनभिज्ञा च निश्चेतनवत् निपतितस्य तिमिरपटलेन सांद्रेणाऽऽवृतस्य ब्राह्मणावासस्य पैतामहस्य ।

आरभत चानभिज्ञैव वृद्धाया एकस्याः सैंधव्या दास्या, आरुह्याश्वमेकतमं यवनस्कंधावारात् तयैव सह नि:सृताया, अनुकंपयाऽतितीव्रया छाययेव तामनुसरन्त्या, आश्वासयितुमिव तां स्वसाहचर्यसंसूचनेनोत्सुकोत्सुकाया अपि खेदजडां तंद्रां तस्या भंक्तुमपारयन्त्यास्तत्सेवायां जीवितमवशिष्टं व्ययीकर्तुं यवनसेनाध्यक्षेणानुरुद्धेन विचार्य किंचिदनुमताया, आक्रमितुमचिरादेव निम्नोन्नतं शून्यशून्यमंधकारावृतमुह्यमानैकमात्रालातप्रकाश्यमानं कदध्वम् ।

उदग्रैर्वेलिप्ठैः समुद्धतैर्यवनैस्तैरश्ववारैः परिवृत्य प्रसह्य नीयमाना, पुरःसरदुल्मुकदीप्यमानकृष्णावगुंठना सा–, पुरुरूपेणासुरेण सामर्थ्येनापनीयमानायाः कमलाया, धृतानेकविग्रहेणानार्येण पराक्रमेणापह्रियमाणाया आर्यसंस्कृत्याः, परिगृहीतबहुवपुषा पापसंचयेन भारतीयानामपनीयमानाया भारतभाग्यलक्ष्म्याश्च शोभामनुकुर्वाणा–, व्यलोक्यत नि:स्पंदैः गगनांगणे कृतसंमर्दैः नक्षत्रैरेव, अन्वशोच्यत मार्गपतितानां महीरुहाणां पर्णसंभारेषु निलीनैः समवलोक्यालातप्रकाशं निशम्य च तुरगरवं खंडितनिद्रैः संत्रस्तं विरुवद्भिर्विहंगमैरेव, अन्वकम्प्यत दुःखभारजडेनेव मंदं मंदं वहता मरुता एव····· आनिशम् ।

अथ, द्रष्टुं तदपहरणं सिंधुकन्याया अनिच्छुकाऽपि विधिनिर्दिष्टं स्वं कर्तव्यमुपेक्षितुमसमर्था म्लानप्रभा उषाऽऽविर्बभूव प्राच्यंगणे । पुरतश्च राजदारिकाया, मार्गपतितस्य नात्युन्नतस्य कस्यचित् शिखरिणः शिखरमारूढाया, आ उदीचीनाद् दिगन्ताद् दाक्षिणं दिगन्तं यावत् प्रवहद्राजतप्रवाहा धौतधवलपरिधानपट्टिकेव भारतमातुः शोभमाना, प्रशांतपावनसलिला महानदी सिंधुः ।

अवलोक्यैव तां, तस्याः शोकावेगो, विभिद्य घनं नैराश्यभरं तदवरोधकं, सहसा पुस्फोट। साक्षात्कृत्येव प्रथमतो वास्तविकं स्वरूपं विपदस्तस्या हृदयमाक्रोष्टुमारभत नोत्तुं च तामुत्संग एव सिंधुमातुर्वत्सलायाः परमसहनायाः प्राणान् स्वान् विस्रष्टुम्। असमर्थ इवावधीरयितुं तदनुरोधमधिकतरं, तस्या वामो भुज, आतुर इव पूरयितुं तस्येप्सितं, – सत्यामेव तत्प्रज्ञायामन्तर्द्वंद्व-व्याकुलायामवधारणासमर्थायां,– प्राक्रमत निगडबद्धोऽपि कथमपि प्रवेष्टुं तच्चोलान्तः निष्क्रष्टुं च तदन्तर्गूढममोघं साधनं मुक्तेः। व्यरमत्तु सहसाऽवरुद्धस्तत्प्रज्ञया तस्मिन्नेव क्षणे दाक्ष्यमुपेतया– 'त्यक्तेषु प्राणेषु मातुरस्या उत्संगे प्राप्स्यथः नूनं युवां मुक्तिमेतद्-वियोगदुःखात्। कथं तु प्रभविष्यथ उपकर्तुं तं वराकं भ्रातरं जयसिंह-मेकाकिनमेव प्रयतमानं प्रतिरोद्धुमेतेषां पापानां म्लेच्छानामा-क्रमणम्? अकृत्वैव च तस्य साहाय्यमामरणमितो भुक्तेऽपि शांति-मात्यंतिकीं किमवाप्स्यथ' इति पृच्छन्त्या, असमर्थश्च प्रतिवक्तुं किमपि।

पर्यवस्थापितेत्थं प्रगल्भया प्रज्ञया नीरक्षीरविवेकनिपुणया सा सिंधुकन्या प्रारभत शनैः शनैरवाचीनेन मार्गेणोपसर्तुं महानदी-कूलम्। प्राप्य च तदवततार तुरङ्गमात्। नमस्कृत्य मातरमारुरोह निगडितभुजद्वयैव तत्र संनिधापितां सशस्त्रनौसैनिकपरिरक्ष्यमाणा-मेकशृङ्गिणीमग्रमंदिरामेकां नौकाम्। प्रारभत च द्वितीयं पादमंतिमयात्रायाः।

परिकलय्य मातुस्तत्सान्निध्यमंतिमं, सा खल्वियेष भोक्तुं प्रत्येकं तत्क्षणं निषद्य नौकाकूपकस्याधस्तात्। निबद्ध्य च दृष्टि-मनिमेषां पावने प्रतिक्षणमनोरम आ बाल्यात् परिचिते तस्या जल-विग्रहे। न त्वविदतानुज्ञां नौसैनिकप्रमुखस्य, समनुसृत्य स्वसेना-पतेरादेशं परिहृत्य संघवजनसामान्यसंपर्कं तां निभृतमेव सिंधुसागरं प्रवेशयितुमातुरस्य।

प्राक्रमत चातो वराकी, समुपविश्याऽऽसंद्यामग्रमंदिर-वातायनस्यैकमात्रस्य कृष्णसुचेलकाऽऽच्छादितस्य समीपेऽवस्थितायां, प्रशमयितुं स्वां तीव्रां पिपासामावद्ध्य दृष्टिं भावतीव्रां सरित्प्रवाहे किंचिन्मात्रलक्ष्ये।

विहायोदयाचलं गगनाङ्गणे कृतपदक्षेपस्य दिनकरस्य करैस्तीरवर्तिमहावृक्षपर्णसंभारान्तरालनिपतद्भिः सस्नेहमिव संस्पृश्यमानायाः, प्रातःपवनांदोलितशिखरैः कूजत्पतत्रिकुलनिनादितैः कूलद्रुमैः नमयित्वेव शिरांसि भक्त्यतिरेकेण स्तूयमानायाश्चिक्षालयिषया तीव्रयांऽगानां चेतसां च पयःप्रविष्टैः, प्रक्षाल्य बाह्यमाभ्यन्तरं च मालिन्यं प्रसादं परममुपेतैः, कटिदघ्ने जलेऽवस्थाय मुकुलीकृत्य करद्वयं परमपावनानि विविधानि सूक्तानि पठद्भिर्द्विजवरैराकुलितकूलप्रदेशायाः, मध्यं गगनस्यालंकुर्वाणेन चंडतरप्रभेण प्रभाकरेणोद्भास्यमानविशालपात्रायाः, रजतपट्टिकाया विशालाया दीर्घदीर्घाया अवतारार्थं पुष्पकस्य विश्वकर्मणा विश्वकर्मणा भूमौ निर्मितायाः शोभामपहरन्त्याः, 'निष्कूजस्तिमितैः' निष्कंपदलैर्विचारमग्नैरिव महीरुहैरावद्धोभयप्रतीरायाः, अस्ताचलशिखरे निपतितस्य चक्रनेमिक्रमेण मंदतापस्य तपनस्याऽऽरक्तैः करैरारक्तप्रवाहायाः, जलबिभरिषया नातिदूराभ्यो ग्रामटिकाभ्य आगताभिर्विविधवेषभूषाभिः परिहासमुखराभिर्ग्रामवधूभिः संमर्दितावतारायाः महानद्यास्तस्या दर्शनेनाविच्छिन्नेन स्वान्तमपुनर्दर्शनाशंकातुरं परितर्पयन्त्यास्तस्या अविदितगतयाम एव व्यतीयाय वासरः।

उदियाय च घनतमिस्रा तमिस्रा।

अथांधतमसाच्छन्नतया दुर्लक्ष्यप्रायतटीप्रदेशाया अपि संमिल्य प्रियसखीभिस्तारकाभिः सह तत्प्रतिबिंबमाध्यमेन हृष्यन्तीभिरिवानवरतं नृत्यंतीभिरूर्मीभिरेव केवलाभिः संसूच्यमानाया अपि सिंधुसरितो दिदृक्षां यन्तुमपारयन्त्यास्तस्याः समीपमुपासरत् सा सैंधवी वृद्धा दासी। न्यवेदयदनुज्ञां समवलोक्य तस्या अवस्थां

किंचिद्द्रवितान्तःकरणस्य नौकाध्यक्षस्य तस्य यवनस्यातिवाहयितुं यामिनीमुपविश्य यथाभिलाषं गुणवृक्षकस्याधस्तात्। अनयद्बहिः। उपावेशयत्तां भगिन्या सहितां तदभिलषिते स्थाने। उपस्थाप्य च तदग्रे पचेलिमानि कदलीफलानि पक्वानि खर्जूरीफलानि जलं च महानद्याः। व्यजिज्ञपत् सास्रं तां सह भगिन्या पूरयितुं दैहिकीराकांक्षाः स्वाश्चिरात् खलु समुपेक्षिताः।

राजदारिका तु समवलोक्य तां समुपस्थितां तत्परिचरणार्थं तस्यां कारानौकायां किंचिच्चकिता, समीक्ष्य तामपरिचितामपि विश्वसनीयाऽऽकृतिं किंचित्समाश्वस्ता, समुपलभ्य मातुः सिंधुसरितः सांनिध्यसुखं (भंगुरमपि) तन्माध्यमेनोपकृतमिवाऽऽत्मानं तया मन्यमाना, स्वीचकार तदभ्यर्थनाम्। बहुमानयत् तत्प्रणयं कतिपयग्रासभक्षणेनाऽऽबंदीभवनान्निराहाराप्यबुभुक्षिता। अपिबच्च चिरतृषितेव पयो मातुः।

उपलभ्य तद्यथापूर्वमेव मधुरं शीतलं च···· परं व्यस्मयत। अश्रद्दधानेवोपलंभे रसज्ञायाः स्वरसज्ञायास्तत् पुनः पुनराचचाम।

विलीनभ्रांतिरिव च···· अन्ते···· चिरं तूष्णींभावमभजत···· निबद्धशून्यदृष्टिः पात्रे सिंधुमातुः प्रशांते।

'अहो! ····यथापूर्वमेव मधुरं शीतलं च पयोऽस्याः', आरभत च चिंतयितुं खिन्ना। 'न खल्वेतत् कटु संजातं, ···· संतप्तं वा···· दूष्यमाणमपि निरंतरमा संवत्सरात् पापानां गोभक्षकाणां संसर्गेण!'

'तत्···· किं न जानाति माता विपत्तिमेतां भयानकां···· दूषयन्तीं तस्या अपत्यानां मनांसि, भ्रंशयन्तीं चरित्राणि, समुन्मूलयन्तीं जीवनानि? ····नानुभवति वा वास्तविकं रूपं यवनसैंहिकेयस्य भारतचंद्रं जिग्रसिषोः?'

'कथं नु खल्वेतच्छ्वयम् ? ···· देवतात्मा हि माता सर्वज्ञा···· त्रिकालज्ञेति संस्तुता। तत् किं···· जानत्यपि विपत्तिमनुभवन्त्यपि तद्दुर्वास्तविकं स्वरूपं···· नानुकंपते स्वार्भकान् ? ···· नानुशोचति तद्भाग्यम् ? ताटस्थ्यमेव भजते– अनुभवन्तु नामैते फलानि स्वदुष्कृतानां संचितानां विपाकोन्मुखानामिति ?'

'एवमेवैतत् ।···· एवमेव···· ।'

'न केवलेयं सिंधुमाता, अपि त्वियं भारतभूः···· जननी नः सर्वेषामपि नितांतमुदासीनेव। यदीयं ह्येवं नाभविष्यत् तर्हि मम कपटबंदीकरणवेलायां ध्रुवमियमकंपिष्यत। काकसदृशानां नराधमानां भारेण भग्ना चाभविष्यत्। न केवलेयं सिंधुमाता···· न केवलेयं भारतभूर्वा···· अपि त्वयं समीरः···· अयमाकाशः···· अयं तारागणः···· सर्वे तटस्थाः प्रेक्षका एवास्य करुणभीषणरूपकस्य।'

'न केवला एत एव···· अपि तु मानवा अपि···· भारतीया अप्येते···· सैंधवा अप्येते। कथमन्यथाऽसंपृक्ता इवानया विपदा···· एते निराकुला इव वर्तेरन् ?'

'निशम्याऽऽदौ कृतांतदारुणानां म्लेच्छानामाक्रमणस्य समाचारं भीता अपि समाकर्ण्य तेषां देवलपत्तनदाहस्य देवलदेवी-विग्रहखंडनस्य वार्तां भयमूढा अपि, श्रुत्वा तेषां – तत् प्रमुखस्य वा – पूर्णाभयप्रदानस्य शरणागतेभ्यो वृत्तांतं समुपजाताऽऽश्वासाः, प्रत्यक्षी-कृत्य तस्य परधर्मसहिष्णुतां चकिताः, साक्षात्कृत्य तस्य परपीड-ननिवृत्तिशीलतां विस्मिता हि ···· एते पारदास्यदूषणं भूषणमिव वहन्तो, गोभक्षकाणामाधिपत्यं स्वसौभाग्यफलमिव मन्यमानाः न मनसि कुर्वन्ति विचारं क्षणिकमपि संकल्पं दुर्बलमपि पारतंत्र्योन्मूल-नाय। अपि तु — यापयन्ति स्वानि स्वान्यायूंषि ···· तटस्था इव।

'अवस्थायाऽस्याः जले कटिदघ्नेपवित्राणि सूक्तानि पठन्तो भूदेवाः – नूनं स्वर्देवा इवाविचलिता एव – दृष्टा मयाऽतीते प्रभाते।

जलविभरिपया चास्याः पयस्यवतीर्णा ग्रामयुवतयः परिहासमुखराः नितांतं निराकुला एव सायंसमये । (सहसा समुत्क्षिप्य दृष्टिं निबद्ध्य च तां सरितः पाश्चात्ये तीरेऽस्पष्टं दृश्यमाने, विदूरतयांऽगुष्ठमात्र-परिमाण इव भासमाने, प्रस्फुरदरुणरागोपहतनैशदीपस्तंभसंसूच्यमान-संनिवेशे बुधिलदुर्गे ) दृश्यते चास्मिन् क्षणेऽयं, साक्षात्कृत्याऽपि वज्रस्य मम कपटघातमीपदप्यभग्नहृदयः पाषाणहृदयो बुधिलानां परमस्वामिभक्तानां स्थलदुर्गः ।'

'यदि हि नामैते मम देशबांधवाः, पारतंत्र्यदुःखेनाऽसह्यवेदनं पीड्यमानाः, स्वातंत्र्यमपहृतं यवननक्रेण पुनरप्यधिगन्तुं बद्धपरिकरा अभविष्यन् तर्हि (सविषण्णस्मितं) ते स्वदेशाद्‌बलान्नीयमानायाः स्वभगिन्या विमोचनार्थं– योजनशतदीर्घदीर्घेऽस्मिन् मार्गे– असंख्यान् प्रयत्नानकरिष्यन् ।···· कियन्तः खल्वासन् ते यवनतुरगारोहा···· ये मां ब्राह्मणावासात् सिंधुनदीतीरमनयन् ।! ···· कियन्तो वा एत एव नौसैनिका मां सिंधुमुख आगमनं नः प्रतिपालयन्तं सामुद्रं पोतं प्रापयितुं नियुक्ताः ।'

'यदि हि नाम···· मम वज्रो···· जयो वा···· प्रसारायाऽऽर्य-धर्मस्य बद्धपरिकरो, गृहीत्वा प्रचंडां सेनां, समुल्लंघ्य सागरान्, एतेषांयवनानामेव मातृभूमिमाक्रमिष्यत्, विजित्य च तां, प्रावर्तिष्यत···· अपहर्तुं तेषां प्रमुखस्य कन्यकामेव– विजयपताकामेव– स्वदेशाय···· किं यवना एतेऽसहिष्यन्त तत् ?'

'न स्वप्नेऽपि ।'

'तत किं···· क्षीणवीर्या मम देशबांधवाः ?···· अल्पप्राणाः ? ····स्वाभिमानशून्याः ?···· यद्येवं···· तर्हि व्यर्थमेव नूनमगणितैः सैंधवसैनिकैः प्रतिरोद्धुं यवनपदक्षेपं सिंधुसागररोधसि प्रयतितम् । निष्प्रयोजनैव दत्ता रणकुंडे पूर्णाहुतिः देवलपत्तनस्य । व्यर्थमेव नूनं वज्रेण विनाशयितुं यवनसैन्यं मरुदेशे प्रयस्तम् । निष्प्रयोजनम् एव

दत्त आत्मबलिर्वृंधिलदुर्गे । व्यर्थमेव नूनं कृतसैन्यसंघट्टैरस्माभिर्यवन-सैन्यं तस्मिन् रणाङ्गणे प्रतिरुद्धम् । निष्प्रयोजन एव विसृष्टो देहस्तातेन तस्मिन् निशामुखे । तातसदृशेन च ब्रह्मदत्तेन । व्यर्थमेव·······' ।

विचिंतयन्ती चैवमादि किमपि किमपि विषण्णेन मनसा, नावेद्वराकी स्वात्मानं स्वभगिनिकां च समवलोक्याहरागमं स्वयं तत्राऽऽगतेन नौसेनाध्यक्षेण कक्षान्तर्नायितं, तत्राऽऽसनायां कस्यां-चिदुपवेशितं, मध्यं गगनस्याध्यारूढे दिनकरे दास्या तया भोजितम-स्वस्थामिव शायितं शय्यायां, समवलोकयन्तं च शून्यशून्यया दृशा वातायनजवनिकामवतरद्दिनकरकरैः प्रकाश्यमानामवतरिते च तस्मिन् पश्चिमांबुनिधौ – असमर्थं इव साक्षात्कर्तुं सिंधुकन्यायाः प्रव्रजनं मातृभूमेः पुनर्घनीभूतकृष्णवर्णाम् ।

प्राबोद्ध्यत च हठाद्विचारतंद्राया खेदजडायाः सावेगमिव कक्षं कृतप्रवेशया तया वृद्धया दास्या सस्नेहं स्पृष्ट्वा विलुलितालके भालप्रदेशे मुहुर्मुहुः कातरेण स्वरेणाऽभ्यर्थयन्त्या तामभ्यर्णदेवलदेवी-गिरिदर्शनाय ।

राजकन्या त्वाकर्ण्य तदभ्यर्थनामनुभूय पोतं सिंधुमुख-प्रविशत्सागरकल्लोलदोल्यमानमवघ्राय तीव्रं धीवरजालगंधं मंद-पवनोह्यमानं निशम्य कोलाहलं यवनदेशादागतेभ्यो मध्येसरित्प्रवाहं विश्राम्यद्भ्योऽनेकशृंगिभ्यो महाकायेभ्यः पोतेभ्यः– जलचरेभ्य इवाजस्रं भ्योऽशितुं सायंसमीरं पात्रतलादुदियतेभ्यस्तास्ताः रण-सामग्रीरवतारयतां म्लेच्छनाविकानां सहसा विलीनतंद्राऽसमर्था संयन्तुमिच्छां दर्शनस्य पश्चिमस्य पावनस्य सैंधवतीर्थस्थानस्य नगरस्य च स्वातंत्र्यदेवतारिरक्षिषया समरयज्ञकुंडे हुतात्मनः–, अधावत् सह भगिन्या वातायनस्य समीपे । अपसार्य च सतिरस्कारं तिरस्करिणीमक्षिपद्दृष्टिमातुरां बहिः ।

अपश्यच्च – न खलूपात्तमृदुलशाद्वलपरिधानं धृतधवलपाषाणसोपानततियज्ञोपवीतं, द्विजोत्तममिवानन्यादृशं सिंधुसागररोधसि सुखमुपविष्टमार्याणां परमपूजनीयं देवलगिरिं, न वाऽभ्रंकषकलशशिखरं, मंदसागरसमीरदोधूयमानया पताकया तर्जयन्तमिव गोभक्षकान्, प्रसरत्सायंपूजापटहध्वनिनिनादितदशदिशं देवलदेवीदेवालयम् – अपि तु – विदग्धपुनरुद्भिन्नविवर्णतृणाच्छन्नं विकीर्णमलिनपाषाणखंडसंसूच्यमानविनष्टाऽऽरोहणमार्गं मृदुच्चयं, विखंडितमस्तकं च नीरवं निःसरदसंख्यदिवाभीताऽभद्रदर्शनं शिलोत्सेधं महान्तम् ।

अपश्यच्च – तत्समीप एव नात्युन्नतमपि नातिविशालमप्यनलंकृतमप्यप्रत्याख्येयप्रभावातिशयं सुधाधवलितभित्तिकं समुत्तुंगहरित्पताकासुशोभितं निःसरत्कर्णकर्कशसायंप्रार्थनास्वरप्रकंपितदिङ्मंडलमाराधनास्थानं म्लेच्छानाम् ।

असमर्थेव च द्रष्टुं तद्हृदयविदारकं दृश्यं, तस्मिन्नेव क्षणे व्यावर्तयामास स्वां दृष्टिं ततः । व्यापारयामास च तां रोधसि पाश्चात्ये महानद्याः प्रसृतायां देवलनगर्याम् । न त्वशकद्द्रष्टुं ताम् । अद्राक्षीत् तु तस्याः समुत्तुंगानामट्टालिकानां स्थाने धूमधूमलानां महतां शिलाखंडानां दग्धावशिष्टानां महाद्वाराणां चोच्छ्रयान् समुद्भूततृणांकुरान्, असंख्यदीपदीपितानां लंबमानकुसुममालासुशोभितानां प्रसरद्धूपवल्लरीसुवासितानां विक्रेयताटंककुंडललंबनकेयूरादिमंडनमनोरमाणां पण्यवीथिकानां स्थाने प्रदीर्घास्तृणनिर्मिता मलमूत्रगंधास्तुरगशाला, दिगंतप्रसृतानां नागरिकाऽऽवासपंक्तीनां नानाप्रकारकाणां विविधवृत्तान्तानां स्थाने सैनिकविश्रांतिशाला मृण्मया एकप्रकारका: ।

असमर्थेव च द्रष्टुं तदप्यरुंतुदं दृश्यं, तस्मिन्नेव क्षण आजहार स्वां दृष्टिं ततः । अयुंक्त च तां प्रतिक्षणं समीपतरं समुपसर्पंति सिंधुसागरतीरे सिकतिलेऽवलोकयितुं सायंसमये

पितुरुत्संग इव तत्र तत्र विश्राम्यतः पौरान्, विहरतीः पुरंध्रीः, क्रीडतश्च बालकान्। अपश्यत्तु तत्स्थानेऽगणितान् सैनिकान् यवनदेशात् सद्य आगतान्, प्रतिपालयतश्च प्रचलनाऽऽदेशान् स्वाधिकारिणाम्।

नितांतमपरिचितमिव भासमानं तद्दृश्यं, समवलोक्य तस्या अवस्थां करुणार्द्रचेतसा विधात्रा जुगुक्षयेवांधकारपटलेन सरभसमाव्रियमाणं, विस्मयमूढया विस्फारितया दृशा निर्निमेषं लोकमाना च नावेन्नौसैनिकाध्यक्षं निःशब्दमुपस्थितमापातकठोरेण स्वरेण समादिशन्तं तस्याः समीप एवावस्थाय वातायनाद्बहिर्लोकमानां वृद्धां दासीं किमपि, तां दीर्घं निःश्वस्य तदभिमुखीभवन्तीमारभमानं च तद्गृहीतवामभुजं कृष्णवस्त्रेणाऽऽप्रपदीनेनाऽऽवृतसर्वांगं विनिगडितमणिबंधं कक्षात्तस्मात् सह भगिन्या बहिर्नीयमानमर्यमाणं निःशब्दमेकस्मिन् विशाले महार्हाऽऽस्तरणाऽऽच्छादितदार्वतले मंदप्रकाशे निर्वातायने राजतधूपपात्रसमुद्गच्छद्धूपवल्लरीसुवासिताऽऽभ्यंतरे सौवर्णपानपात्रभूषिते पर्यंकद्वयालंकृतमध्यभागे कक्ष एकस्य समीप एवावस्थितस्य महाकायस्य कृष्णवर्णस्यानेकधवलशृंगिणो – महामत्स्यस्येव विलक्षणस्य तलात् पयोनिधेरुत्थितस्य भयानकस्य – सामुद्रिकस्य पोतस्य निःश्रेण्या नौकैकदेश आदित एवोत्थापितया नौसैनिकैरुपविश्यमानं चैकस्यां पर्यंकसमीपवर्तिन्यामासनायाम्।

चिरादिव चाजागरत्तस्यास्तंद्रायाः खेदजडाया, आकर्ण्य सहसा समुद्भूतं नीरवे तस्मिन् नैशे समये दशदिक्षु प्रसरन्तं तीक्ष्णं स्वरं कस्यचित् म्लेच्छस्याऽऽदिशन्तमिव किंचिदनुभूय कक्षं दोलायमानं पुर इव सरन्तं, निशम्य कमपि सरभसं प्रविश्य कक्षे निधाय, कंपमानं हस्तं तत्स्कंधे कथयन्तं – भर्तृदारिके! प्रस्थितः पोतः ···· प्रस्थितः ....' इति।

स्पृष्टेव च विद्युल्लतया व्याकुला तत्क्षणमेव सह भगिन्या बहिः कक्षादधावत्। अतिष्ठच्च धृत्वाऽपनीतनिगडेन दक्षिणेन भुजेनान्यतमं

समीपस्थं शृंगस्तंभमनभिज्ञा तमसाऽऽवृततयाऽलक्ष्यप्रायस्य नातिदूरवर्तिनो यवनसैनिकस्य खड्गधरस्य समवलोक्य तां तथा कक्षान्निःसरन्तीं धावन्तीं च सहसा सावधानस्यानुसर्तुमिव तां प्रवृत्तस्य विलोक्य तां तथा निश्चलतामुपेता विरतस्य निर्निमेषया तु दृष्ट्या चेष्टास्तस्याः निश्शब्दं निरीक्षमाणस्य, समालिखन्तीव स्वमनःपटले दृक्तूलिकया दृश्यं प्राणेभ्योऽपि प्रियतराया भारतभूमेर्घनांधकाराच्छन्नायाः प्रज्वलद्भिः कतिपयैर्यवनस्कंधावारदीपैः संसूच्यमाननिवेशायाः परिजिहीर्षयेव स्पर्शस्य तस्याः पराक्रमणप्रतिरोधे निष्फलप्रयासायाः प्रतिक्षणं दूरतरमपसरन्त्याः।

अन्वभवच्च शोकमपारं समुद्वेल्लन्तं मनसि कन्यकाया अवशाया बलादपह्रियमाणायास्तज्जनन्या उत्संगात्।

अजानाद्धि सा ध्रुवं यल्लब्ध्वाऽपि साफल्यं (असंभवप्रायं) जीवितहृतकस्य प्रयोगेन परचक्रप्रतिरोधने .... सा नैव शक्ष्यति द्रष्टुं स्वां मातृभूमिं पुनः .... मातृभूमिं दिगन्तविश्रुतकीर्तिं प्राचीनतमसंस्कृतिजन्मभूमिमुपदेशभूमिं सनातनस्याऽऽर्यधर्मस्योत्पत्तिभूमिं बौद्धजैनसदृशानां प्राणिमात्रहितैषिणां धर्माणां .... भूमिं नयनाह्लादिनीं हिमवत्किरीटिनीं गंगायमुनाद्युत्तरासंगिनीं सिंधुब्रह्मपुत्रकेयूरशोभिनीं नर्मदामेखलिनीं सरित्पतिप्रक्षाल्यमानचरणकमलिनीं प्रतिकृतिमिव पृथिव्याः कनीयसीम्।

'क्षमस्व .... मातः! .... क्षमस्व कन्यकामेतामन्यतमां स्वां हतभागधेयाम्' आरभत च प्रार्थयितुं निःशब्दं ताम्। 'एतया हि त्वयि प्राणाधिकं स्निह्यन्त्या प्रयतितं रक्षणाय तव पावित्र्यस्य। न तु सफलीभूतं .... वैपरीत्याद्वा भागधेयस्य दौर्बल्याद्वा प्रयत्नस्य — न जाने। .... इयं तव कन्यका, .... मातः .... ! .... विनष्टपितृच्छाया प्रभ्रष्टभ्रात्रवलंबाऽसहाया — कमलिनीव समुत्पाटिता प्रक्षिप्ता च कूलंकषे सरित्प्रवाहे गंधगजेन — दूरीकृताऽशरणशरण्यात् त्वदुत्संगान्निक्षिप्यते घटनाप्रवाहे विषमविषमे कालेन।'

'त्वत्सांनिध्यादेवं विप्रकृष्टा तव दुहितेयं दुर्बला न शक्ष्यतीतः परं संवर्द्धयितुं स्वं मनःसामर्थ्यं त्वत्पयःपानेन ···· सामर्थ्यमावश्यकतरमितः परम् । तदनुगृहाण संधुक्ष्य तदसकृत् संप्रेष्य स्वाशिषः निःशब्दाः । विना ताः न नूनं प्रभविष्यामि, मातः, पूरयितुमात्मनश्चरमां कामनाम् । ···· जानासि, मातः, सर्वसाक्षिणी त्वं ···· न किमप्यहं किंचित् कामये । जानासि त्वमा संवत्सरात् ज्वलता गृहदाहेनानेन दग्धाः सर्वा अपि मम कामनाः । ···· न किंचिदपि कामये । ···· कामये तु ···· पितेव ···· मातेव ···· भ्रातेव ···· पितृव्य ···· इव होतुमिदं जीवितं रणयज्ञकुंडे ···· विनशनायास्या यवनरक्षोविभीषिकाया, देवितुं मम जीवितं परिभवाय नियत्या अद्यावधि निरपवादं मां परिभवन्त्या अस्यां द्यूतक्रीडायाम्।'

'अनुगृहाण च, मातः, समुपस्थाय मनसि कन्यकायास्तेऽस्यास्त्वत्तोऽपह्रियमाणायाः, समुपस्थायास्याश्चेतस्यग्निपरीक्षणवेलायां ···· देहावसानवेलायाम् । तवैव प्रभावेण लप्स्ये (– यदि नाम लप्स्ये –) सौख्यमेतदन्तिमे क्षणे । न मम प्रार्थनाबलेन । मम ह्यधन्यायाः प्रार्थितं सर्वं विपरीतमेव संपद्यते ।'

'अक्क ! अनुगृहाण ···· संरक्ष्य मम जयं ···· मम किशोरवयसं जयमसहायमेव प्रयतमानं मोचयितुं स्वामेतस्माद्यवननक्रग्रसनात् । नास्ति कोऽपि तस्याऽऽत्मीयस्त्वां विना । ···· नास्ति कोऽपि संरक्षकः ···· ।'

विचिन्तयन्ती चैवमेव किमपि शोकविह्वलं, स्फटिकमूर्तिरिव निश्चला, नावेत् प्रतिक्षणं वेगेनापसरत् मातृभूमितीरं संतमसेन कज्जलकृष्णेन घनघनेन दृक्पथात् प्रसह्य तिरोधाप्यमानमात्मानं च निबिडध्वांतनिखातनयनं समीपतरमुपसृतया सास्रलोचनया वृद्धया तया दास्या ततः शनैः शनैरपनीयमानं, नीत्वा पर्यंकेऽन्यतरे सुधाधवलप्रच्छदे समुपवेशितं, चिरादिव च तंद्रयांऽके स्वे शायितम् ।

# एकोनविंशः परिच्छेदः

जागरिता चान्येद्युरदर्शनं गते दिनकरे निमज्ज्य पश्चिमे सायंरागलोहिते विदीर्णसर्वसहाहृदयरक्तरक्त इव समुद्रे, महासत्त्वतया विजित्य शोकभरं किंचित् प्रकृतिमापन्ना, मनसि कृत्वाऽवशिष्टं कार्यं संपाद्यं शरीरहृतकेन, स्वीकारयामास फलाहारं स्नेहमुखरया दास्या समुपस्थापितं स्वभगिन्या, स्वीचकार स्वयमपि, समुपाविशच्चापनीत-कृष्णवस्त्रावगुंठना तया सह -समवतीर्णे नभोमंडलात्तमसि घने समीपे तस्यैव शृंगस्तंभस्यावलोकयन्ती लोलतरंगं नृत्यत्प्रतिबिंबिततारकं दिगन्तविस्तृतं सिंधुसागरं ···· चिंतयन्ती च कदाचित् सागरे तस्मिन्नेवादर्शनमात्यंतिकं गताया नौकायाः, नयंत्याः शवं निर्वसनं विशीर्णं हिंस्रमूपकलुंचितस्तनमुग्रगंधि तस्याः केरलकैवर्ततरुण्याः, कदाचित् सागरे तस्मिन्नेवाकस्मादाविर्भूतानां निःशब्दं सिंधुसरिदा-मुखप्रदेशमुपसर्पतां विविधप्रकाराणामसंख्यानां महाकायानां पोतानां यावनानाम् आ निशान्तम् ।

आरभत च यापयितुमहोरात्रमेवमेव ···· तटस्थेन मनसा पर्यालोचयन्ती सांवत्सरिकं घटनाप्रवाहं भीषणम् ।

क्षणमात्रमपि नान्वशोचन्तं निर्णयं यवनानुरोधप्रत्याख्या-पकम् ।

वह्नमानयत्तु यवनसेनापतेस्तस्य कौशलं विप्रलभ्य तान् सप्रयोजनं प्रसारिताभिः किंवदन्तीभिः निभृतं संनाह्यतोऽजस्रं बलमाचिक्रंसया रिपुराज्यस्य तत्कालपर्यन्तं केनाप्यनुल्लंघितयाऽत एव सर्वथा समुपेक्षितया सागरसीमया, रणनीतिचातुर्यं जित्वाऽपि सिंधुसरिदामुखप्रदेशं समनुभूय दुष्प्रसहवेगं प्रत्याक्रमणं रिपुबलस्य निभृतं देवलनगर्यामाविर्भूतस्य भयकांदिशीकमिव सागरमार्गेण कृतकमपसरतः, सहसा चाक्रम्य शतगुणितवेगं परिवृत्य निरुच्छ्वासं तन्निरपवादं विमृद्नतः ···· कूटनीतिनैपुण्यं च भारतीयस्वभावं सम्यक् परिकलयतो, भस्मसात् कृत्वा देवलपत्तनं कपटमवलंब्य तं प्रतिरोद्धुं प्रवृत्तं सैंधवमात्रमानसं भयाक्रांतं कुर्वतः, प्राप्तमात्र एवावसरे शरणागतान् निरूढप्रदेशादिवासिनोऽभयमुदारेण मनसा ददतो, विजितजनपदलुंठनप्रवृत्तान् स्वसैनिकान् स्वामिभक्तानपि वीरानपि सप्रयोजनं सामान्यजनसमक्षं दण्डयतः, प्रभंजनवेगेन सर्वतः प्रसरन्तीमजेयत्वख्यातिमात्मनस्तैस्तैरुपायैः परिवर्द्धयतः, क्षुद्रवैयक्तिकस्वार्थसिषाधयिषया साहाय्यकरणाय स्वयमेवाऽऽगतान् घोरं देशद्रोहपातकमवधीर्य स्वनृपतेरेव दौर्बल्यस्थलान्यहमहमिकया समुद्घाटयतः काकमूकादीन् नराधमान् प्रकाशं संमानयतोऽपि विज्ञाय तेषां विश्वासघातप्रवणं चारित्र्यं नैकदाऽपि तेषु विश्वसतः, स्वबलमेव दुष्प्रसहबलमदत्वाऽवसरं प्रत्यर्थिबलाय हतोत्साहाय स्तोकमपि पर्यवस्थापयितुमात्मानमनवरतं तदनुधावने योजयतः, प्रत्यहं दीर्घतरीभवतः समरसामग्र्यापूर्तिमार्गान् सततमुपद्रवेभ्यो यत्नपूर्वकं रक्षतः, निश्चित्य प्रतीकारस्याऽऽधारस्तंभान् तन्नाशायैव स्वसैन्यं व्यापारयतः, सुविचार्य बाधा अवश्यंभाविनी भारतीये वर्षतौं सर्वथाऽपरिचितेऽनागतानामेव तासां प्रतीकारेऽवधानं ददतः, प्रवृत्तायां प्रावृषि स्वल्पमप्यवकाशमदत्वा शैथिल्याय विजिते प्रदेशे सामान्यजनकल्याणविधायिनीस्तत्सुखदायिनीस्तास्ता व्यवस्थाः कुर्वतः, समवलोक्य वर्षाकालं समतिक्रांतं पुनरपि द्विगुणितेनोत्साहेनावशिष्टस्य द्विपद्राज्यस्य विजयाय परिकरं बध्नतश्चारचक्षुषाऽवलोक्य जयसिंहं – सिंहमिव दुर्जेयं – प्रेप्सया मित्रसंपदस्तत्तद्भारतीयनृपाणां संसत्सु

स्वयमुपस्थातुं प्रचलितं कौटिल्येनानुपमेन तमनवहितं परकीय एव राज्ये वंदीकर्तुं यस्यतः, संसिद्धिं तत्रालब्ध्वा विद्युच्चपलं तं स्वराज्याद्विप्रकृष्टतरेषु राज्येषु बलादगमयतो, विनष्टपरिवाराम-साहाय्यतामेकांतिकीमापादितं तां निरुद्ध्य दुर्गे प्रहित्य तच्छक्ति-संचयं निरंतरैराक्रमणैरन्ते कपटेन वंदीकुर्वतः – एवं च विख्यातं सिंधुराज्यं संवत्सरेणैकेनैव स्ववशीकुर्वतः ।

अतोलयच्च तत् स्वपक्षस्यार्भकमात्रोचितेन निश्छलत्वेन तमोगुणमात्रसमुद्भवेन पारंपरिकरणव्यापारानुगमनेनाऽऽत्ममात्र-विघातकेन कूटनीतिवैमुख्येन च ।

"यदि हि नाम तातो, यवनानुरोधप्रत्याख्यानसमकालमेव, समुत्प्रेक्ष्यावश्यंभाविनमाक्रमणं, स्वबलसंग्रहने दत्तचित्तोऽभविष्यत् .... कपटपूर्णे तस्य सौहार्दसंदेशे क्षणमात्रमप्यविश्वस्य स्वसामर्थ्यपरिवर्द्धने च व्यापृतमनस्को .... यदि नाम तात .... ।"

"अथवा किमिति तातमुपालभे ? .... तेन खलु राज्याऽऽ-भ्यन्तरिकशांतिप्रस्थापनसंक्षीणोत्साहसंपदा वार्द्धके न्यस्तपदा यथा समीचीनं परिकल्पितं .... तथैवानुष्ठितम् । तातेन वीरभद्रेण वाऽतिक्रांतप्रौढावस्थेन प्रतीवारस्याऽऽक्रमणस्य च नूतना विधाः प्रावकलयितुमसमर्थचेतसा । तातेन सुमतिना स्थाविरवशान्मंदीभूत-गूढचरनेत्रज्योतिषा दमिश्काधिपतेरल्हज्जाजपक्षपातित्वं .... अल्-हज्जाजस्य वा धर्मविजयातुरत्वं साक्षात्कर्तुमशक्तेन ।"

"नूनं सर्व एतेऽनुभवविदग्धा अपि जरया विदग्धोत्साहा-वलंबाः .... नासन् प्रकृत्यैव समर्थाः प्रतिरोद्धुं स्वभावत एवाक्राम-काणां तत्रापि भारतवर्षसदृशीं स्वर्णभूमिं लुण्ठितुमुत्सुकानां, तत्रापि स्वधर्मप्रसारोत्साहाभिनिविष्टानां, तत्रापि प्रियदर्शनमादर्शचरितं वज्रसंकल्पं रणचतुरं युवानमधिगत्य नायकत्वेन शतगुणितावेशानां यवनानामाक्रमणम् ।

यवनदेशान्महेशदत्तेन संप्रेषितस्य तस्य दूतस्य मध्य एव विलयः ? सिंधुमद्दुर्गेऽदृष्टपूर्वेण गूढद्वारेण यवनसैनिकानां तस्मिन्निशामुखे प्रवेशः ? काकस्वभावं काककुटिलं सुष्ठु जानतोऽपि वज्रस्य, विवेकशून्यस्यार्भकस्येव, तस्मिन्नेव विश्वासन्यासः ? तद्विलय एव प्रथमरात्र एव तीव्रः ज्वरग्रहः ? रणांगणे तातस्य, चिरात् प्रज्वलितशौर्यज्योतिर्दुर्धर्षस्य, भीष्मभीष्मस्य, यवनसेनापतिमेव साक्षात् प्रहर्तुं समुत्क्षिप्ताऽऽयुधस्य, सहसा चकितस्येव, भीतस्येव, प्रहारापराधः ? अन्यभारतीयनृपसाहाय्यमृगमरीचिकाऽऽयास्यमानस्वांतस्य जयस्य, विहायाऽऽवां, तन्मात्रावलंबे, दुर्गं एव, स्वराज्यादपसरः ? .... प्रसरो यवनैश्छलेन बंदीकर्तुमीहितस्य सिंधुराज्याद्दूरतरवर्तिनि काश्मीरराज्ये ? .... उपसदश्च दुर्गं निःसर्तुं ततः कृतनिश्चयायां मयि नितांतमज्ञातेन भूमार्गेण द्विपत्सैनिकानां तस्मिन्नेव निशामुखे ?"

"अहो ! तामेव शक्तिं कार्यप्रवृत्तां नूनं व्यानक्, .... तस्मिन्नपराह्णे .... सिंधुसरितस्तीरे, औदुंबरस्य महावृक्षस्याधस्तादुपविष्टो महर्षिश्चिदानंदो विज्ञाय मे मनोगतम् ।"

"परंतु .... परंतु .... एतदपि तु स मां विस्पष्टाक्षरमुपादिशत् – 'अस्मिन् प्राणसंकटे मातृभूमेः .... महत्ते कर्तव्यम् ! महान् खलु ते भारः प्राक्तननिर्धारित' इति ।"

"अपि नामानुष्ठितं मया स्वं कर्तव्यम् ? व्यूढो मया स भारः ? .... प्रयतितमेव मया यावच्छक्यमाक्रमणं यवनानां प्रतिरोद्धुम् । .... न । न.... । अवशिष्टमेव मम कर्तव्यम् । वाह्य एव मया स भार इतःपरमपि .... वाह्य आप्राणोत्सर्गात् ।"

"कथं नाम .... अहमेवं वियोजिता स्वबांधवेभ्यः, स्वमातृभूमेरपकृष्टा, निक्षिप्ता शत्रुदेशेऽबलाऽसाहाय्या, कर्तव्यं स्वमनुष्ठातुं प्रभवेयम् ? .... भारं वा वोढुम् ? योजनशतविप्रकृष्टे भारतवर्षे

प्रबोधयितुं भारतीयान् नृपानात्मविनाशिन्या औदासीन्यतंद्राया अनवरतं प्रयतमानमेकाकिनं भ्रातरं सिंहं चोपकर्तुम् ?"

चिंतयन्ती चैवमेव किमपि किमपि, समुच्छलत्सागरतरंग-निखातनयना – रत्नाकरदुहितेव केश्चित् सामुद्रैरसुरैरपह्रियमाणा भासमाना – सा नावेत् पोतं तमनेकशृंगिणमविच्छिन्नगतिकं समुपेक्ष्य सिंधुसागरसीमावर्ति तेजपत्तनं तथैव पुरःसरन्तं, तृतीयेऽह्नि परिभ्रष्टे वियन्मध्यात्तपने प्रखरतरतापे सिंधुसागरान्निष्क्रामन्तं, प्रविशन्तं तेनैव रंहसा यवनसागरमपारमुच्चल्लोलकल्लोलं, समुपसर्पन्तमपरेद्युर्यावनं किमप्यज्ञातप्रायं क्षुद्रमेकं पत्तनं, गृहीत्वा ततः पेयजलभांडारं प्रचलन्तं पारसायोपसागराय, व्यतीत्य च तस्मिन् सप्ताहमेकमननु-कूलतया पवनस्य मंदगतौ प्रवासे –प्रविशन्तं, धूलिधूसरितनभोमध्यात् कष्टेनेव महताऽधःप्रचलिते हरिदश्वरथे, संतापभरेण भस्मसात्कर्तुमिव चराचरं विश्वं प्रवृत्ते प्रखरतमतापे तपने, खेदजनितजाड्य इवावाति वाते- नानादेशागतसांयात्रिकपोतसंघट्टितमुखं भारतवर्षात् सद्यः-प्राप्तानां चंदनकर्पूरलवंगनालिकेरहस्तिदंतादिबहुमूल्यपण्यवस्तु-वाहकानामजस्रानां वणिक्पोतानामुपतीरं कर्षण आदिनारंभात् प्रवर्तितानामसंख्यानामनावृतप्रायाणामुच्छ्वसद्वक्षःकपाटानां स्वेद-क्लिन्नकज्जलवर्णवपुषामारक्तोच्छूननयनानां भारवाहानां दासेराणां कोलाहलेन तीव्रेण निनादितं कलुषसलिलं विश्वविश्रुतं यावनं महापत्तनं बसराभिधानम् ।

अवुद्धयत त्वचिरादेव तस्या विचारतंद्रायास्तया वृद्धया दास्या निःशब्दं तत्समीपमुपसृतयोपस्थापयन्त्या चाधोदृष्टि तत्संमुखं तदेव कज्जलकृष्णमाप्रपदीनं तिरोधानम् ।

# विंशः परिच्छेदः

साक्षात्कृत्य यात्रायाः (सागरयात्रायाः, न तु विदेश-यात्रायाः, कुतः पुनः जीवनयात्रायाः) अन्तमुपगतं ···· सा, सहसाऽवहिता, चोलान्तर्गूढमवस्थापितमनुभूय स्वममोघं शस्त्रं समुपजाताऽऽश्वासा यावत् परिदधाति तदवगुंठनं परिधापयति च स्वभगिन्या ···· तावदशृणोत् कतिपयान् म्लेच्छभाषायां किमपि संलपतः खणत्खड्गान् समुद्धतवर्तनानुपानद्धपादान् कक्षं तस्याः साधिक्षेप-मुपसर्पतः, प्रविष्टानां च तेषां – द्वार एव विरतगतीनाम् – अन्यतमं तयोः समीप आगच्छन्तं, विनिगडयन्तं तयोर्मणिबंधयुगले लोहशृंखलया, समादिश्य च किमपि तां वृद्धां दासीं पुनः प्रतिष्ठमानम् ।

अन्वभवदात्मानं – स्कंधे गृहीत्वा सानुकंपं तया सेविकया कक्षान्नीयमानं, भगिन्या छाययेव सर्वदाऽनुवर्तमानयाऽनुपदमेवानुगम्य-मानं, पोतप्रांतस्थापितया कयाचिद्दार्व्या पद्यया सिकतिले समुत्तप्ते तीरप्रदेशेऽवतार्यमाणं, तीरावस्थितैराच्छन्नलोचनतयाऽदृश्यैरपि निःशब्दैरपि प्रस्वेदगंधेन तीव्रेण संसूच्यमानैरसंख्यैर्म्लेच्छैः सकौतूहलं निरीक्ष्यमाणं, पदानि सहस्रानधिकानि सैकते चाल्यमानं, छायाया-मतिविरलायां कस्यचिद्विटपस्य क्षीणक्षीणस्याऽऽदित एवोपवेशितस्य

क्रमेलकस्य पृष्ठभागे परिकल्पितायां शिबिकायामिव कस्यांचिन्मृदुल-विस्तृताऽऽसनायां सह भगिन्या सेविकया च स्थाप्यमानं, श्रुत्वैवाऽऽदेशं समुत्थितेन तत्क्षणमेव प्रचलितेन तेन क्रमेलकेन च समुह्यमानं केनचित् सुपथा ।

अन्वभवत्तमेकाह्मपि पन्थानं दीर्घदीर्घं .... पीड्यमाना तीव्रया पिपासयाऽऽसन्नराजतभृंगारजलपानेनाप्यनपनेयया .... समुपविष्टा शिबिकायां तस्यां, वस्त्रेण महार्हेणापारदर्शकेन सर्वतः परिवृत्य निवारिताऽऽतपायामप्युत्तप्तनिर्वाताऽभ्यन्तरायाम् ।

अन्वभवच्च, व्यतीते युगदीर्घे इव प्रहरद्वये, संतापं हठाश्यूनीभवन्तं सह प्रतापेन तपनस्य ।

यावत् बहु मानयति शीतलत्वं सायंसमीरस्य मंदमंदस्य क्लांतलोचना तावदेवारभत समनुभवितुं तत् प्रसह्य परिणममानं हिमशैत्ये ।

इत्थं दिवा प्रखरतमदिवाकरकरैर्दह्यमानं रात्रौ च हैमेनेव पवनेन बधिरीक्रियमाणं तं विदेशं स्वदेशेनानतिविषमतापमानेन सह तोलयन्ती, सर्वर्तुसुखदस्य च तस्यासकृत् स्मरन्ती, सा, विनिद्रैवोपोपितैव, समुपविष्टैव तस्यामनवरतप्रधावत्क्रमेलकदोल्यमानायां शिबिकायाम्, अतिवाहयामास तां निशां, क्षणमेकमप्यलोकमाना समुत्क्षिप्य यवनिकां दिगन्तप्रसृतं समतलं सिकतिलं यवनभूप्रदेशं, निःशब्दमिव संलपन्तमध इवावतरितेन स्थूलतरतारेणेन्द्रनीलनीलतरेण नभःप्रदेशेन ।

आरभत चाऽऽकर्णयितुमा प्रत्यूषादेव चरमररवमसंख्यानामुष्ट्रवाहनानामिव (भासमानानाम्), अभिमुखमागत्य दूरद्दूरतरं गच्छतां, समुपसृत्य वा विविधैर्जानपदैर्मार्गैः सह इव प्रचलतां — दुर्ज्ञेयसंलापशब्दमगणितानां पदिकानां यावनानां सह स्वैः स्वैः क्रमेलकैं

खरैर्वा विविधपण्यवस्तुभारभुग्नपृष्ठैः वृतोऽप्यागतानामानुग्रामिकाणां सहचलतां – कोलाहलं चासंख्यातानां पौराणां प्रागेवोदयाच्चंडकरस्य समुत्थाय कार्याणि स्वानि स्वानि सत्वरं चिकीर्षतां, क्रमशः परिवर्द्धमानम् ।

अनुमातुं च स्वात्मानं प्रतिक्षणं समीपतरमुपसर्पन्तं कस्यचिन्महानगरस्य ।

अचिरादेव च सापर्यलक्षयद्दलमात्मनोऽवरुद्धं केनचिन्नगररक्षकबलेनेव परीक्षमाणेन गतागतानि प्रवासिनां, तत्प्रमुखमिव कमपि समुपसृत्य तत्क्रमेलकं साधिक्षेपमादिशन्तं परिचिक्षिपया तीव्रया तच्छिविकावरणापनयनार्थं, निशम्य तु तुल्याधिक्षेपवचनं तद्दलप्रमुखस्य सहसा विरमन्तं स्वजिज्ञासाया, अपसरन्तं चाऽनुमोद्यास्फुटाक्षरं तत्प्रवेशम् ।

अन्वभवच्चानुपदमेवाऽऽत्मानं – नीयमानं केनचित् क्रेतृजनकोलाहलसंसूच्यमानाऽऽपणिकनिबद्धोभयपार्श्वेन, विविधभारवाहकैः खरैराकुलाकुलेन, रणत्क्षुद्रघंटिकाव्यज्यमानप्रचलनैरुष्ट्रैः संघट्टितेन, साटोपमिव वल्गद्भिः ह्रेषारवमुखरैस्तुरंगमैः निगालनिबद्धकांस्यकिंकिणीग्रैवेयकमुखरितदशदिशैः क्रतसंमर्देन, विक्रेयाणि वस्तून्यनवरतमुद्घोषयतां विक्रयिकाणां कर्कशैः स्वरैर्निनादितेन, पार्श्ववर्तिप्रासादपरंपरयेव निवारितप्राभातिकदुःसहाऽऽतपेन, कुत्रचित् सौगंधिकाऽऽपणनिःसरत्सुगंधलहरीभिः सुरभिणाऽन्यत्रापक्वपलालपूतिगंधिना, सद्यः प्रोक्षितेनेव शीतलेन योजनदीर्घेणेव राजपथेनैकेन – प्रवेश्यमानं केनचिदुत्तुंगेन विशालेन महाद्वारेणांगरक्षकरक्षितेनैकस्मिन् प्रच्छायशीतले सर्वतः प्रसरदगुरुधूपधूपिताऽऽभ्यन्तरे नीरवे प्रांगण इव कस्यचिन्महाप्रासादस्य – अवतार्यमाणं क्रमेलकादुपवेशितात् तत्पार्श्वस्पर्शिनिःश्रेण्या समुपसृतया बलिष्ठया कयाचिद्रक्षिकया गृहीत्वा हस्ते – नीयमानं सह भगिन्या वृद्धया दास्या च ततोऽतिमसृणया तुषारया पाषाणखचितया निःशब्दया पदव्या कयाचित् –

प्रवेश्यमानं कस्मिंश्चिन्नातिदूरवर्तिनि कक्षे – समुपवेश्यमानमासंद्यां कस्यांचिन्नवनीतकोमलायां – मुच्यमानं हस्तनिगडाद् – अनुमोद्यमानं चापनेतुमवगुंठनम् ।

तिरस्कृततिरस्कारिणी चाद्राक्षीत् स्वात्मानं सह भगिन्योपविष्टमेकस्यां राजतसिंहपादायामासनायामेकस्मिन् विशाले महार्हलोमशास्तरणाच्छादितभूतले निर्वातायने तिरस्करिणीतिरोहितगवाक्षे *लंबमानसुमनोमालाभूषितहरितभित्तिके मंदप्रकाशे शीतले कक्षे*, संमुखीनमेकस्या कज्जलकृष्णवर्णाया अपि वलिष्ठाया अपि कथमपि कोमलहृदयाया इव भासमानाया भंगुरालकाया ह्रस्वनासिकायाः स्थूलाधरोष्ठाया अन्तःपुररक्षिकाया यवन्याः सविस्मयमिव सकौतूहलमिव सानुकंपमिव सामेव निर्निमेषमवलोकयन्त्याः ।

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः ।' कथमिव ह्यन्यथा दृष्ट्वैव तां सहसा देवलदेव्या मनसि सौहार्दस्येव भावना समुत्पन्ना ? योजनसहस्रदूरे भारतवर्षे सनातनधर्मानुयायिनि विख्याते राजवंशे जाता, आजन्मन एव पित्रा पुत्रनिर्विशेषं लालिता पालिता शिक्षिता, आ शैशवादेवात्युच्चैः संस्कारैः संस्कृता, विविधकलापारंगता, प्रियदर्शना सा सिंधुकन्या क्व, क्व च तस्मिन् मरुप्राये देशे म्लेच्छधर्मानुगेऽतिसाधारणेऽज्ञाते वंशे जाता, आ जन्मन एव नियत्याऽपहृत्य पितृच्छायां दुस्तार्ये दुर्जननक्रभयंकरे संसारसागरे प्रक्षिप्ता, आ शैशवादेव साधारणैरपि संस्कारैः सहेतुकमिवोपेक्षिता कलानभिज्ञा कुदर्शना सा यवनकन्या ?

आन्तरात् कस्मादपि हेतोर्वा नियतिवशादवा काकतालीयाद्वा – *सा राजदारिका प्रथमदृष्टिपात एव परमस्निह्यत्तस्यां* यवनदास्याम् । सा च तस्याम् ।

इयं सा स्नेहभावना न केवलं तस्यास्तद्भगिन्या वा तस्या वृद्धाया दास्या वा जीवितं तस्मिन् वैभवातिशयमंडितेऽपि वस्तुतः

कारागृहानधिकविशेषेऽन्तःपुरे दमिश्काधिपतेः सुसह्यमकरोदपि तु -- तदभ्यंतरे तासां द्विपदाभ्यंतरिकभेदजिज्ञासया निर्बाधं प्रचारमपि ।

विशेषतो देवलदेव्याः । नातिचिरादेव हि सा विस्मृतस्वजनवियोगदुःखेव विश्वविख्यातयवनसभ्यतापरमोत्कर्षदर्शनसंभ्रांतेव तारुण्यवशादेवोपनतवैभवातिशयोपभोगाऽऽतुरातुरेव — साहाय्येन तस्या यवनकन्यायाः – प्रावर्तत तस्मिन् पुरसदृशेऽन्तःपुरे यथेच्छं विस्फारितलोचनं प्रशंसामुखरं भ्रमितुम् (अर्थात् परिहरन्ती दर्शनं साक्षाद्यवनाधिपतेः), जेतुमन्तःकरणानि कृतकनम्रताप्रदर्शनेन तत्रत्यानां रमणीनां प्रौढानामपि बालिशस्वभावानामन्वेष्टुं च निभृतं तन्मध्यात् कामपि म्लेच्छामपि समानशीलव्यसनां बुद्धिमतीं रमणीं सौहार्दसूत्रविभक्तसया ।

तस्या हि मानसमवलोक्य जीवनक्रमं तत्रत्यानां सुंदरीणामैन्द्रियकसुखोपभोगार्थमेव बलात् तत्राऽऽहृतानामपि परिहृत्य पुरुषान्तरदर्शनं तत्र स्थापितानामपि निषिद्धवहिःप्रसराणामपि लेशमात्रमभ्युनुद्विग्नानां प्रत्युत विषयसुखोपभोगमात्रेण धन्यंमन्यमानानां, परमखिद्यत, परं व्यस्मयत । आरभत च चिंतयितुं तासामवस्थां दर्शनीयानां कोमलकलकंठानां पक्षिणीनां तत्तद्वनेभ्यः प्रसह्याऽऽनीतानां स्थापितानां सौवर्णपंजरेषु विस्मृतस्वपूर्ववृत्तान्तानामवस्थया समां ···· निकृष्टां च भारतीयानां राज्ञामन्तःपुरेषु वर्तमानानां, नातिस्वतंत्राणामपि संमानभाजां, भारतीयरमणीनामवस्थायाः ।

अलभत च चिरात् खलु परिचयं याद्दच्छिकमिवैकस्याः प्रौढाया रमण्यास्तदन्यतमाया अप्यनन्यादृशायाः सुशिक्षितायाः कुलीनायाः प्रचलितेऽर्थकारणे चित्तं ददानाया अन्तःपुरपरिचारिकामाध्यमेन च गतागतानि यवनाधिपस्याहर्निशं परंतु निभृतं परीक्षमाणायाः ।

प्राक्रमत च शनैः शनैः परिवर्द्धयितुं तं स्नेहे निरतिशये। तयैव सहाऽधिकतरं भागं वासरस्य यापयन्ती, स्वदेशसंबंधिनीभिः कथाभिर्विविधप्रदेशवर्णनहृद्याभिस्तद्देशविषयकपृच्छाभिः स्वाभाविककौतूहलमात्रप्रेरिताभिरिव प्रासंगिकीभिस्तुलनाभिश्च स्वदेशवैशिष्ट्यानां तद्देशवैशिष्ट्यैर्विचारप्रसंगेषु तया पराजितेव स्वीकुर्वत्यनिच्छापूर्वकमिव तद्देशवैशिष्ट्यानां श्रेष्ठत्वं ···· सा ···· कतिपयैरेव दिवसैस्तस्या विश्वासपात्रमभवत्।

अध्यगच्छच्च तन्मुखादेव क्रमशो वास्तविकं ज्ञानं स्वभावस्य यवनाधिपस्य, सद्य एवाधिपत्यं यवनसाम्राज्यस्य प्राप्नुवतः, कतिपयमासपूर्वमेव प्रमीतस्य तुरुष्कप्रांताधिपस्याल् हज्जाजस्य द्वेषणस्य, स्वपूर्ववर्तिनो यवनेश्वराच्चितरां विलक्षणस्यातिकोपनस्याहंभावदुर्विदग्धस्याविमृश्यकारिणः, स्वद्वेषणेनाल्हज्जाजेन दिग्विजयार्थं भारतवर्षं प्रेषितं सेनाध्यक्षं तरुणमपि विगन्तविश्रुतं मुहम्मदं कासीमसुतं, तदाज्ञावशंवदमपि स्वर्णभूमेर्मूर्तिपूजकानामधिकाधिकं भागं तदाधिपत्ये स्थापयन्तमपि, न बहु मानयतः, प्रत्युत तस्मान्निभृतं बिभ्यतः, स्वयं गेहेशूरस्य।

इत्थं कणशो विज्ञाय वास्तविकं चारित्रं दिगन्तप्रसृतसाम्राज्यस्य यवनाधिपस्य ज्ञातज्ञातव्या, 'भारतीयानामिव सर्वसहानामेवैषां निसर्गत एवासहानां यवनानामप्याधिपत्ये नियत्या निष्ठुरोपहासप्रवणया एतादृशाः नियोज्यन्त' इति विस्मितस्वांता, 'यवनाधिपस्यास्य सद्योऽधिगतसाम्राज्यस्य सविधे न सन्ति बहवः रणचतुरा अभ्यमित्रीणा ऊर्जस्वला जैत्राः सेनान्यः ···· येऽपसृते मुहम्मदे भारतभुवः, तत्कार्यं (वस्तुतस्तन्मात्रकार्यं) कर्तुं समर्था भवेयुरिति समुपजातविश्वासा, 'तत् कथं स, विप्रलभ्य इममविवेकिनं यवनाधिपं, माध्यमेनास्यैव ततोऽपसारणीय' इति शनैः शनैः संकल्पयितुमारभत।

# एकविंशः परिच्छेदः

स चायं संकल्पस्तस्या अचिरादेव पर्यणम्यत वज्रकठोरे *निश्चये समाचारैस्तस्या एव रमण्यः, समुत्प्रेक्ष्य स्वसखीं बुद्धिमतीं* स्वभ्रातृवृत्तान्तविवित्साऽऽतुरां तैस्तैर्माघ्यमैर्भारतविजयाभियानोदन्तान् यवनाधिपस्य संसदोऽवचिन्वत्या मुखात् प्रत्यहं लभमानैः ।

ते हि प्रत्यहमधिकाधिकमेव विवव्रुः शोचनीयामवस्थां समाकर्ण्य स्वभगिन्योः प्राणाधिकयोः कपटेन बंदीकरणस्य छद्मना च ततोऽपनयनस्य वृत्तान्तं विस्मयमूढस्य, सर्वतः सहसा प्रसृतैः स्वभगिनी-विषयकैः कुत्सितैर्जनापवादैः सहेतुकं तच्छ्रुतिपथं प्राप्यमाणैर्दह्य-*मानस्य, 'दिगन्तविख्यातस्य छछकुलस्य गौरवलक्ष्मीः राज्यलक्ष्मीश्च,* मयाऽधन्येनानवहितेन स्वहस्ताभ्यां यवनहस्तेषु समर्पिते साहसिकेन' इति मत्वा परं खिद्यमानस्य, 'यदि ह्यहं, संनियम्य बालिशामाशां नृपान्तरसाहाय्यलाभस्य, मानयित्वा ज्येष्ठाया भगिन्याः सुविचारितं परामर्शं कनिष्ठायाश्च कातरमनुरोधं, ते मत्तः न व्ययोजयिष्यं .... तर्हि .... समुपस्थित एव ब्राह्मणावासदुर्गपातसमये, ते पणीकृत्याऽपि प्राणान् यवननक्रदंष्ट्राभ्यो दूरदूरतरं नेतुं समर्थोऽभविष्यम्' इति विचार्याहर्निशं विलपयतः, स्मारं स्मारं मुखकमलं ज्येष्ठाया भगिन्याः प्रस्थानसमयेऽपुनर्दर्शनाशंकया विस्फारिताभ्यामप्यमंगलाशंकया निरुद्धबाष्पाभ्यां तं ध्यायत्, कनिष्ठायाश्चासुरक्षाभयविह्वलाया

अनवरतप्रवहदश्रुधाराक्लिन्नं, व्याकुलतां परामनुभवतः, 'इत्थं दैवेन कृतांतक्रूरेणोत्खातयोरतिमयोः प्रेमांकुरयोरेतावन्कालपर्यन्तं कथमप्यवशिष्टयोः ···· किमिव ममाद्यन्यस्यैकाकिनः प्रयोजनं पैतृकेण राज्येन पुनर्लब्धेनापि' – इति सहसा निर्वेदमुपेत्य विरज्य च तत्क्षण एव नृपान्तरसाहाय्यलिप्सायाः स्वे राज्ये पुनःकृतप्रवेशस्य, 'मत्सर्वस्वापहर्ताऽपकर्ता च भारतमातुरयं यवनसेनाध्यक्षो मुहम्मदः प्राक् प्राणोत्सर्गात् प्राणदंडेन योजनीय एव' इति विनिश्चित्य तिरस्कृत्य प्राणभयं तमेव केवलं विजितसमस्तसिंधुराज्यं प्रवृद्धबलं सततमनुसरतस्तमेव केवलं – विधूय स्थलकालविवेकं – प्रहरतः, तिरस्कृत्य प्रयासवैफल्यं स्वोद्यमात् क्षणमेकमप्यविरमतः, प्रयासेष्वेवंविधेषु सततं क्षीयमाणबलस्य, विलोक्य तदवस्थां प्रवितान्तःकरणैरपि यवनसेनाप्रमुखावकृपाभीतभीतैः सैधवैर्नागरिकैः जानपदैश्च लेशतोऽप्यनुपक्रियमाणस्य, प्रतिदिनं विपन्नतरामवस्थामापद्यमानस्य, तस्या भ्रातुः जयसिंहस्य ।

····"अत्याहितम् ।" ···· प्रारभत सा चिंतयितुम् । "····एवं हि विलुप्तविवेकं प्रयतमानोऽस्मदपहर्तृशासनार्थं जयः क्षोभाऽधोऽचिरादेव नूनं पतिष्यति हस्तयोस्तस्य यवनस्य । अलक्षेंद्र इव वीरप्रशंसकः स यवनः स्वसमानवयस्कं तं हस्तपतितमपि बहु मानयिष्यतीत्यत्र न संशयः । स तु बहु मानयित्वाऽप्यवशंवदीभवन्तं तं समवलोक्य किं करिष्यतीत्यत्र । धीरगंभीरोऽपि प्रकृत्या, साक्षात्कृत्य स्वानुनयवैफल्यं सहसा क्रुद्धस्तं नूनं प्रा ···· । दष्टो वा कर्णे कर्णेजपैः काकादिभिर्नराधमैः ···· । तत् तत्पूर्वमेव यवनोऽयं ततोऽपसारणीयः । अपसारिते हि तस्मिन् ···· किंचिच्छ्यूनीभूतशोकावेगो जय आकर्ण्य कर्णोपकर्णिकयाऽऽवयोरक्षतकुलगौरवयोरेवात्ययस्य वार्तामुन्नतमस्तकः ···· नवीनतया वयसो दुष्प्रतिरोधतया च कालप्रभावस्य ···· (सविषण्णस्मितं) विस्मृत्य नः सर्वान् कालवशंगतान्, विलोक्य चानुकूलतरां परिस्थितिं समुत्पन्नां, भारतमातरं यवननक्रदंष्ट्राया

# एकविंशः परिच्छेदः

स चायं संकल्पस्तस्या अचिरादेव पर्यणम्यत वज्रकठोरे निश्चये समाचारैस्तस्या एव रमण्याः, समुत्प्रेक्ष्य स्वसखीं बुद्धिमतीं स्वभ्रातृवृत्तान्तविविरसाऽऽतुरां तैस्तैर्माध्यमैर्भारतविजयाभियानोदन्तान् यवनाधिपस्य संसदोऽवचिन्वत्या मुखात् प्रत्यहं लभमानैः ।

ते हि प्रत्यहमधिकाधिकमेव विवव्रुः शोचनीयामवस्थां समाकर्ण्य स्वभगिन्योः प्राणाधिकयोः कपटेन बंदीकरणस्य छद्मना च ततोऽपनयनस्य वृत्तान्तं विस्मयमूढस्य, सर्वतः सहसा प्रसृतैः स्वभगिनी-विषयकैः कुत्सितैर्जनापवादैः सहेतुकं तच्छ्रुतिपथं प्राप्यमाणैर्दंदह्य-मानस्य, 'दिगन्तविख्यातस्य छछकुलस्य गौरवलक्ष्मीः राज्यलक्ष्मीश्च, मयाऽधन्येनानवहितेन स्वहस्ताभ्यां यवनहस्तेषु समर्पिते साहसिकेन' इति मत्वा परं खिद्यमानस्य, 'यदि ह्यहं, संनियम्य बालिशामाशां नृपान्तरसाहाय्यलाभस्य, मानयित्वा ज्येष्ठाया भगिन्याः सुविचारितं परामर्श कनिष्ठायाश्च कातरमनुरोधं, ते मत्तः न व्ययोजयिष्यं ···· तर्हि ···· समुपस्थित एव ब्राह्मणावासदुर्गपातसमये, ते पणीकृत्याऽपि प्राणान् यवननक्रदंष्ट्राभ्यो दूरदूरतरं नेतुं समर्थोऽभविष्यम्' इति विचार्याहर्निशं विलश्यतः, स्मारं स्मारं मुखकमलं ज्येष्ठाया भगिन्याः प्रस्थानसमयेऽपुनर्दर्शनाशंकया विस्फारिताभ्यामप्यमंगलाशंकया निरुद्धबाष्पाभ्यां तं ध्यायत्, कनिष्ठायाश्चासुरक्षाभयविह्वलाया

अनवरतप्रवहदश्रुधाराक्लिन्नं, व्याकुलतां परामनुभवतः, 'इत्थं दैवेन कृतांतक्रूरेणोत्खातयोरंतिमयोः प्रेमांकुरयोरेतावत्कालपर्यंतं कथमप्यवशिष्टयोः ···· किमिव ममाधन्यस्यैकाकिनः प्रयोजनं पैतृकेण राज्येन पुनर्लब्धेनापि' – इति सहसा निर्वेदमुपेत्य विरज्य च तत्क्षण एव नृपान्तरसाहाय्यलिप्सायाः स्वे राज्ये पुनःकृतप्रवेशस्य, 'मत्सर्वस्वापहर्ताऽपकर्ता च भारतमातुरयं यवनसेनाध्यक्षो मुहम्मदः प्राक् प्राणोत्सर्गात् प्राणदंडेन योजनीय एव' इति विनिश्चित्य तिरस्कृत्य प्राणभयं तमेव केवलं विजितसमस्तसिंधुराज्यं प्रवृद्धबलं सततमनुसरतस्तमेव केवलं – विधूय स्थलकालविवेकं – प्रहरतः, तिरस्कृत्य प्रयासवैफल्यं स्वोद्यमात् क्षणमेकमप्यविरमतः, प्रयासेष्वेवंविधेषु सततं क्षीयमाणबलस्य, विलोक्य तदवस्थां द्रवितान्तःकरणैरपि यवनसेनाप्रमुखावकृपाभीतभीतैः संधवैर्नागरिकैः जानपदैश्च लेशतोऽप्यनुपक्रियमाणस्य, प्रतिदिनं विपन्नतरामवस्थामापद्यमानस्य, तस्या भ्रातुः जयसिंहस्य ।

····"अत्याहितम् ।" ···· प्रारभत सा चिंतयितुम् । "····एवं हि विलुप्तविवेकं प्रयतमानोऽस्मदपहर्तृशासनार्थं जयः क्षोभाऽद्योऽचिरादेव नूनं पतिष्यति हस्तयोस्तस्य यवनस्य । अलक्षेंद्र इव वीरप्रशंसकः स यवनः स्वसमानवयस्कं तं हस्तपतितमपि बहु मानयिष्यतीत्यत्र न संशयः । स तु बहु मानयित्वाऽप्यवशंवदीभवन्तं तं समवलोक्य किं करिष्यतीत्यत्र । धीरगंभीरोऽपि प्रकृत्या, साक्षात्कृत्य स्वानुनयवैफल्यं सहसा क्रुद्धस्तं नूनं प्रा ···· । दष्टो वा कर्णे कर्णेजपैः काकादिभिर्नराधमैः ···· । तत् तत्पूर्वमेव यवनोऽयं ततोऽपसारणीयः । अपसारिते हि तस्मिन् ···· किंचिन्न्यूनीभूतशोकावेगो जय आकर्ण्य कर्णोपकर्णिकयाऽऽवयोरक्षतकुलगौरवयोरेवात्ययस्य वार्त्तामुन्नतमस्तकः ···· नवीनतया वयसो दुष्प्रतिरोधतया च कालप्रभावस्य ···· (सविषण्णस्मितं) विस्मृत्य नः सर्वान् कालवशंगतान्, विलोक्य चानुकूलतरां परिस्थितिं समुत्पन्नां, भारतमातरं यवननक्रदंष्ट्राया

मोचयितुं प्रवृत्तः नूनं साफल्यं लभेत। तद्यवनोऽयमपसारणीयोऽयं कमपि चतुरमुपायमवलंब्य।"

चिंतयित्वा चैवमात्मनैव सह संप्रधार्यैव किमपि, दीर्घं निःश्वस्य, तदनुकूलानि पदानि निक्षेप्तुमारभत।

नातिचिरादेव चैकदा, निवेदयितुमिवापरदिगंगनायै स्वबलिदानसंकल्पमश्रुतपूर्वसदृशं सिंधुकन्यायास्तदंगणं ससंभ्रमं प्रविशति भगवति सवितरि, समासन्नप्रायमवलोक्य सिंधुराजदारिका-जीवनरूपकस्यान्तिममंकं खिन्नायाः प्रकृतेर्निःश्वास इव मंदं मंदं वहति कदुष्णे सायंसमीरे, विज्ञाय संकल्पितं स्वानन्यादृशपुत्रकापसरणं दुःखातुराया जगन्नियन्तारं करुणकरुणमाह्वयन्त्या यवनभुवो भावनावेगतीक्ष्णतीक्ष्णे प्रार्थनास्वर इव सर्वतः प्रसरति प्रमुखतमस्य यवनप्रार्थनामंदिरस्य शिखरात् सायंप्रार्थनाऽऽवाहनस्वरे तीव्रतीव्रे, – समरयज्ञकुंडे स्वात्माहुतिदानार्थं प्रवृत्ता, सद्यःस्नाता, परिवेष्टित-नीलदुकूलव्यज्यमानस्वर्णाभदेहलतिका विमुक्तकज्जलकृष्ण–भंगुरकेशपाशस्पृश्यमाननितंबा, भ्रमरकपरिचुंब्यमानललाटचंद्रकला, निराभरणाऽप्रतिमलावण्या, यवनाधिपस्यान्तःपुरप्रवेशमार्गे – यदृच्छयेव — किंचित्प्रस्फुटितकुसुमावचयलोभवशाच्चिरायमाणा नाम – यथासमयं मार्गेण तेनान्तःपुरप्रचलिताय, पुरःप्रधावमानैः राजतदीपदंडहस्तैः क्लीबैः स्त्रीवेषैरन्तःपुरपरिचारकैः समुपदिश्य-मानमार्गाय धवलमहार्हवेषाय दमिश्काऽधीश्वराय प्रादर्शयदात्मानं साध्वसाक्रांतमपि तदवलोकनकौतूहलपारवश्यात्ततोऽपगन्तु-मसमर्थमिव, संकोचवशान्मार्गकोणेऽन्यतमेऽवतमसपूर्णे विलीलीय-माणमपि विस्मयविस्फारिताभ्यां लोचनाभ्यां तं ध्यायन्तमिव, *किंचिदवगलितस्तनावरणानभिज्ञमिव*।

प्राद्रवदन्यस्मिन्नेव क्षणेऽवलोक्य तमुपरम्य मार्गाक्रमणात्ता-मेवाऽऽरक्ताभ्यामर्धमीलिताभ्यां सत्तामदालसाभ्यां सविस्मयं ध्यायन्तं

– त्रस्तेव प्रियका प्रियदर्शना लुब्धकदृष्टाऽनभिज्ञा नाम स्कंधात् सहसा स्खलितस्य दुकूलप्रांतस्यापावृण्वतः कनकशिलानिभं पृष्ठभागैकदेशम्।

प्रत्यपालयत् स्वकक्षपार्श्ववर्तिनि प्रांगणे संतमसाच्छन्ने समुपविष्टा दर्पयामासन्द्यामेकस्यां ······· ग्रहं ······· जालस्यैवं प्रक्षिप्तस्य।

अवैच्च नातिचिरादेव तं यथाऽऽपेक्षम्।

व्यतीतप्रायायामेव हि घट्यां सा तथैवोपविष्टाऽपश्यत् – परिश्रांतमिवान्विष्य तामन्तःपुरकक्षेष्वसंख्येषु स्वेदबिंदुकलंकितभालपट्टं, समुपजाताऽऽश्वासमिवावलोक्य तां तत्रोपविष्टां सहसा स्मेरवदनं, सुलक्ष्यविषमधवलरदनं, कृष्णवर्णमपि कृशकायमपि जुगुप्स्यरूपमपि विविधमंडनमंडितं, कौतूहलविस्फारिताभ्यां स्मयमानाभ्यां साकूताभ्यां कज्जलाक्ताभ्यां लोचनाभ्यामनुभवचतुराभ्यां तां निर्निमेषं ध्यायन्तं, परिचारकप्रमुखं स्वपुरतः समुपस्थितम्।

अशृणोत्तं घर्घरमंथरस्वरं गदन्तं – 'जयतु ···· जयतु सिंधुराजदारिका ! वर्धतेऽत्रभवती दुरापेनाऽप्सरोदुर्लभेन दुष्प्रधर्षपराक्रमप्रचंडस्य निखिलनराधिपपरिचुंबितचरणकमलस्य यवनाधीश्वरस्य प्रसादेन। ···· तदुत्तिष्ठत्वत्रभवती। बहु मानयतु स्वभाग्योदयमस्मिन्नेव क्षणे। ···· अनुगच्छतु माम्। (विनमय्याधिकमेव, पूर्वकायम्) करोतु च ···· अस्माकमपि ···· दासानुदासानां क्षुद्रं भाग्योदयमनुपदमेव' – इति।

अद्राक्षीत्तं यथापूर्वं विनम्रमपि सस्मितमपि सहसा कठोरीभूतनयनं ···· ततः प्रचलितं ···· तदनुसरणं च प्रतीक्षमाणम्।

अन्वसरत् तत्क्षणमेव – मृगादनेवाऽऽक्रमणोद्यता – सावधानापि स्वात्मानमश्रद्दधानमिव तादृशे भाग्योत्कर्षे, बहु मन्यमानमपि

कृपाप्रसादं दैविकं साध्वसवशादपारयन्तमिव पुरःसर्तुं तद्ग्रहणाय प्रदर्शयन्ती स्खलत्पदक्षेपेव .... तं .... तदवस्थैव ।

अपश्यच्च – समतिक्रम्य नातिदीर्घमपि सप्रयोजनमभिमुखमागच्छन्तीभिः साभिप्रायं तामवलोकयन्तीभिः सकुत्सं हसन्तीभिः म्लेच्छभाषायामस्फुटाक्षरं किमपि किमप्यन्योन्यं कथयन्तीभिरन्तःपुरपरिचारिकाभिराकुलाकुलतया दीर्घदीर्घमिव भासमानं मार्गं, एकस्मिन् निश्चलसनिस्त्रिंशमहाप्रमाणांगरक्षकरक्षितप्रवेशद्वारेऽतिविशाले चतुष्कोणप्रज्वलत्सौवर्णदीपदंडप्रकाशिताऽऽभ्यन्तरे महार्हविचित्ररोमशास्तरणाच्छन्नभूतले सर्वतः प्रसरच्चंदनधूपवासिते कक्षे कृतप्रवेशा, विस्तृते हिमधवलप्रच्छादने उपबर्हद्वयविभूषिते विविधविकचकुसुममालामंडितराजतपादे पर्यंके समुपविष्टं पार्श्ववर्तिनीभ्यां नवीने वयसि वर्तमानाभ्यां रमणीयदर्शनाभ्यां चामरग्राहिणीभ्यां मंदं मंदमुपवीज्यमानमर्धविकसितप्रसूनवलयभूषितमणिबंधेन दक्षिणेन हस्तेनासकृदामृशन्तं मृदुलश्मश्रुपाशं धवलवेषं प्रवेशद्वारनिखातनयनं दमिश्काधिपं मनसाऽऽतुरातुरेण प्रतीक्षमाणमागमनं तस्याः ।

मनसि धृत्वा च चरणकमलयुगलं कुलदेव्या....अवानमत् ।

अतिष्ठच्च .... भीत्या संहरन्तीवांगानि कुसुमकोमलानि, भावाकुलतया दशन्तीव पक्वबिंबाधरोष्ठं, लज्जयाऽऽवृण्वतीव स्तनमंडलमसकृत् .... अधोदृष्टिः ।

अशृणोच्च क्षणमात्रानन्तरमेव तं पर्यंकात् सहसा समुत्थितं प्रसार्य भुजौ भावावेगकंपमानौ तामुपसर्पन्तं गदन्तं च घर्घराक्षरं – 'स्वागतम् ! .... स्वागतम् ! सिंधुराजकन्यायाः ! मृष्यतु राजदुहिताऽमर्षणीयमपराधमस्य जनस्य भवतीमेतावत्कालपर्यन्तमुपेक्षमाणस्य । दुर्दैवमत्रापराध्यत्यस्य भवत्या दासस्य । दुर्दैवमेव । कथमिवान्यथाऽवधीर्य भवादृशीमलौकिकलावण्यखनीमन्यासु क्षुद्ररूपासूपभोगनीरसासु

ललनासु रमणमस्याद्यन्यस्योपपद्येत ? .... अहो ! अविज्ञाय समीपवाहिनीमपि मधुमधुरसलिलनिर्झरिणीं कंटकान् चर्वित्वैव तृषां शमयितुं प्रयतमान उष्ट्र इव नूनमुपहसनीयोऽस्मि संवृत्तः । .... अथवा .... अथवा तथा बहु मानयिष्यामि भवतीम् .... असकृदाघ्राय नितंवबिंबचुंबिनं पुंजीभूतममातिमिरमिव कृष्णं सुगंधिनं मृदुलं घनमिमं केशपाशमवमानप्रतिचिकीर्षयेवोद्दामं, मुहुर्मुहुः परिचुंब्य प्रतिपच्चंद्रनिभमिमं ललाटं रतिक्रीडाप्रस्वेदबिंदुतारकितं, वारं वारं निपीय मधुमधुरतरमिममधरोष्ठं कृतककोपप्रस्फुरन्तं .... तथा बहु मानयिष्यामि भवती सौंदर्यरसपानेन यथा विस्मृत्योपहासं संसारोऽयं 'सौंदर्यरसिक एतादृशः नास्माभिरदर्शि .... द्रक्ष्यते वा' – इति मामेव बहु मन्येत ! .... (सावेगमुपसर्पन्) .... तत्तर्पय .... एतत् स्वागताय तव समुच्छ्वसद्वक्ष.स्थलं संघट्टनेत स्ववक्षो .... ।"

अक्षमा च श्रोतुमधिकतरं सा .... अविरतवचन एव प्रसार्य बाहू प्रतिशब्दं समुपसर्पति तस्मिन् तदंगप्रत्यंगनिखातनयने .... क्रोधताम्रं वदनकमलं लज्जातिशयाऽऽरक्तमित्यपह्नुवाना, तीव्रया घृणयाऽध.कृतां दृशं साध्वसजडामिति गूहमाना, सहसा जानुभ्यां भूमौ जगाम ।

प्रसार्य च नलिनीनालनिभौ भुजौ, शोकावेगादिव प्रकंपमानाभ्यामोष्ठाभ्यां किंचिदस्फुटाक्षरं निवेदयितुमिवाऽऽरभत ।

दमिश्काधिपस्तु सर्वथाऽनपेक्षितामननुभूतपूर्वसदृशीं तस्यास्तां प्रतिक्रियामवलोक्य परं विस्मितः, सहसा निरुद्धोपसर्पो, हठात् खंडिताभिलापः, क्षणमात्रं किंकर्तव्यविमूढोऽन्यस्मिन्नेव तु कक्षकोणेषु निभृतमवस्थितानां कृतकविनयावनमितपूर्वकायानामप्यपांगदृग्भिस्तावेव सकौतूहलमवलोकयन्तीनामन्तःपुरदासीनां समक्षं गौरवमात्मनोऽक्षुण्णं रक्षितुं कृतनिश्चयः, क्रोधमात्मनः कृतकगांभीर्येणाऽऽवृण्वानो, जिज्ञासयेव तदभिप्रायस्य, तदनुपदमेव

निःशब्दमागत्य तत्पृष्ठतं उपस्थितां विस्मयस्तिमितया दृशा घटना-क्रमं सर्व तं सर्वथाऽनुत्प्रेक्षितं लोकमानां तद्दासी प्रश्नमुखरया दृशा क्षणमात्रमपश्यत् ।

अशृणोच्च तां, कतिपयक्षणानन्तरं, भूमौ तथैवोपविष्टाया-स्तथैवाधोदृष्ट्या विगलितबाहुलतायाः स्वामिन्या विलूनकमल-संनिभस्याऽऽननस्य समीप आनमितवदनां, श्रुत्वा तदभ्यर्थनां क्षणमात्रं विस्मयस्तब्धामाकर्ण्य तत्संबोधनं मंद्रस्वरमपि तीक्ष्णभावमुन्नमित-पूर्वकायां, क्षणमात्रं निश्चलमवस्थाय विचार्य किमपि स्वात्मनैव क्षणेऽन्यस्मिन्नेव मुकुलीकृत्य हस्तौ वार्धकाद्वा भयाद्वा कंपमानौ शुष्कस्वरं निवेदयन्तीं —

"अवघ्रातं स्वभंगकुसुमं .... कलंकितं .... स्वामिनोऽनर्हम् – इति भाग्यानि स्वानि निन्दति राजदारिका" – इति ।

....."अवघ्रातं .... दिव्यमपि कुसुमं .... नार्हमस्मत्स्वीकारस्य – गंभीरस्वरं प्रत्यवदत् स दमिश्काधिपः, .... परामृशन् स्वं श्मश्रुपाशं, समुच्छिष्टमुपभोगाय समर्पयता यवनसेनाध्यक्षेण मुहम्मदेन सेवक-जनसमक्षमपमानितमात्मानं मत्वा क्रुद्धोऽपि कृताऽऽकारगूहनः ।

अपृच्छच्च सकुत्सं – "परंतु .... कुत्र खल्वस्याः सः पतिः ? .... न खल्वस्माभिः, प्रतिसप्ताहमागच्छतां सैनिकदूतानां मुखेभ्योऽस्माकं सिंधुविजयस्य प्रगतिवार्त्तां सावधानं शृण्वद्भिः .... नाम तस्य एकदाऽपि श्रुतम् ! .... (सहासम्) अपि सः लुंठित्वैवास्याः कोमलांग्याः कौमार्यं .... क्षीणवीर्यः .... नरकं गतः ? .... अदर्शनं वाऽऽत्यंतिकं .... श्रुत्वैव यवनसेनाया दुष्प्रसहं प्रतापं भयेन स्फुटितहृदयः ?"

"अनूढाऽद्यापि राजकन्या" – मंद्रस्वरं प्रत्युवाच सा दासी ।

"अनूढा ? .... क्षतभगा च ? .... कथमेतत् ? .... (कुत्सितं विहस्य) .... आः ज्ञातम् ! .... वृषस्यन्त्याऽनयाः .... यौवनातिपातम-

सहन्त्या ···· वंचयित्वा बांधवान् ···· यौनं सुखं केनापि दास्याः पुत्रेण सह स्यादुपभुक्तम् ! (सक्रोधं) कुत्र खल्वस्याः रमणः ?" पुनरपृच्छत् स यवनाधीश्वरः ।

"कौमार्यं स्वं नैव लुंठयन्ति ···· आर्यकन्या–"स्तीक्ष्णस्वरं प्रत्यवदत् सा वृद्धाऽक्षमा सोढुं तस्य तुच्छां पृच्छाम् ।

"कथं तर्हि ···· ?"

"लुंठितं तेन पापेन बलात्" – सावेगमिवाऽऽह सा सेविका । "न शशाक रक्षितुं तत् ···· आत्मनोऽमूल्यं धनं ···· इयमसाहाय्या ···· निपतिता द्विपतः हस्तयोः ।"

"लुंठितं बलात् ? ···· अस्माकं हस्तयोर्निपतितायाः ? ···· केन कालदष्टेन कृतमेतद्दुःसाहसम् ? ···· कथं च गोपायितमस्माकं सेनाध्यक्षात् ···· ?"

"लुंठितं भवतः सेनाध्यक्षेणैव ···· न ···· अस्या एव····अस्या भगिन्या गौर्या अपि ···· एकस्यामेव निशायाम् ···· स्कंधावारात् भवत्सेवार्थं संप्रेषणात् प्राक् ····" श्रावयन्ती सर्वान् तीक्ष्णस्वरमवोचत् सा दासी ।

आकर्ण्य तद्वचः ···· न केवलो दमिश्काधिपः, न केवलस्तत्सेविकाजनः, न केवलो द्वाःस्थः रक्षकगणःसहस्रकर्णःलक्षाक्षः····अपि तु- समीपवर्तिनः प्रांगणारामान्मंदं मंदं प्रविशन् निशासमीरणोऽपि···· कोणचतुष्टयप्रज्वलद्दीपप्रकाशस्तोमोऽपि विस्मयजड इवाभवत् । निरुद्धगतिः सदागतिः कालः ।

प्रससार च विशाले तस्मिन् कक्षे युगदीर्घा विस्मयजडा निःस्तब्धता ।

"आः ···· दास्याः पुत्रेण ···· भोजयता स्वोच्छिष्टं ···· एवमपमानितोऽस्मि ! आः ···· शुन्याः पुत्रः ···· विगते एव संवत्सरे नरके पतित्वा न्याय्याद्दण्डादास्माकीनात् तथा प्रपलायितं तमल् हज्जाजं स्वश्वसुरमुपकर्तुमुत्सुकोऽस्मानेवं क्षेप्तुमीहते ! ···· रे ···· रे क्लीव ! प्रहिणु क्षणेऽस्मिन्नेव तस्य यवनापसदस्य समीप आज्ञां 'स्वामी तमोष्ट्रचर्मकोपपिनद्धं सद्यो दिदृक्षते कार्येण गुरुतरेण' इति । उपस्थापय च ···· इमां ···· इमा ···· समक्षमस्माकं ···· प्रत्यागत एव तस्मिन् यवनजातिकलंके नराधमे । अवलोकयतु नाम ···· इयं कीदृशी खलु गतिर्भवत्यस्मानुपहसितुं प्रयतमानस्य" — विदारयन् तां निःस्तब्धतामादिदेश स यवनाधिपः क्रोधताम्रो फेनिलमुखः ।

असमर्थश्च स्थातुं तत्र क्षणमपि ···· निर्जगाम ततः प्रभंजनवेगेन ।

# द्वात्रिंशः परिच्छेदः

राजदारिका तु, सिद्धहस्ता नटीवाभिनयकाले तस्मिन् क्षणमात्रमप्यविचलिता, 'पूर्वमनुपदिष्टयाऽपि प्रारंभे विस्मितयाऽप्यपरस्मिन्नेव क्षणे परिकलय्य मम मनोगतं तत्पूरणाय बद्धपरिकरयाऽनया वृद्धया दास्या स्वैन कथाछलेन कृतकाभिनयेन च तस्य नराधमस्य समक्षं भृशमुपोद्बलिताऽस्मि' इति संतुष्टाऽपि, संसिद्धप्रायं स्वमुद्दिष्टं मन्वानाऽप्यभिज्ञा कक्षे तस्मिन् निष्प्रतिबंधं प्रविश्य तामेव परिवृण्वतीनां सकुतूहलं स एवावलोकयन्तीनां तयोरेव विषये परस्परं मंद्रस्वरं किमपि किमपि निवेदयन्तीनां स एव लक्ष्यीकृत्य कुत्सितं हसन्तीनामन्तःपुरपरिचारिकाणामसमर्थयेव दर्शयितुं ता दुर्लभयवनाधीश्वरकृपातिशयवंचितं नियत्या यत्किंचित्कारिण्या स्वमाननं सतुच्छसेवकोपभोगकलंकितं .... आवृणोत्तत् स्वदुकूलांचलेन ।

निरगच्छच्च तस्माद्रंगमंचादनुसरन्ती विज्ञाय तदभिप्रायं पुरः प्रस्थितां स्वां दासीमातुरातुरेव निगूहितुमात्मानमाप्रलयं कस्मिंश्चिदसूर्यपश्ये पातालगंभीरे बिले ।

प्रविश्य च स्वे कक्ष आरभत यापयितुं प्रतीक्षाकालं, पुत्तलिकेव केनचिच्चाल्यमाना कथंचिदनुतिष्ठन्ती दैहिकानि कार्याणि,

क्षणमेकमपि कक्षं स्वमत्यजन्ती, निरपवादं परिहरन्ती दर्शनं सर्वासामेवान्तःपुररमणीनां येन केनापि मिषेणावलोकयितुं तां संभाषितुं सह तयोत्सुकोत्सुकानां, निषेधन्ती स्वसेवकाया भगिनिकायाश्च बहिर्गमनं कादाचित्कमपि, छलं स्वमननुशोचन्ती निमेषमात्रमपि, वांछन्ती तत्साफल्यमहर्निशं, सावधाना, निरनुक्रोशा ।

उपालभत चान्तं तस्य पक्षानधिकस्यापि युगदीर्घस्येव भासमानस्यैकस्मिन्निशामुख, उपरुद्धनिःश्वास इव निर्वाते, सन्तापतप्त इव सोष्मणि, भयादिव विरतविहंगमविरुतेऽसंमाय हृदि यवनराज्यलक्ष्म्या बहिः प्रवहता शोकेनेवावतमसेन कलुषिते, – प्रविश्य कक्षं निःशब्दं तत्पुरतः समुपस्थितायाः, मंदप्रकाशतया कक्षाभ्यन्तरस्यानतिलक्ष्यविशेषे शोकक्षाम इव निःश्रीके तदानने कज्जलकृष्णे स्वे लोचने साभिप्रायं निगडयन्त्यास्तांबूलरसरक्तदंतुरदंतपंक्ती निर्लज्जं विवृण्वत्या, अनिबद्धप्रणामांजलि एव दिदृक्षां परमप्रतापिनो दमिश्काधिपस्य निवेदयन्त्या, अन्तःपुरपरिचारिकायाः कस्याश्चिन्माध्यमेन ।

प्रातिष्ठत च पुनरप्येकवारं यवनाधीश्वरकक्षं तमेव समुद्दिश्य, तदनुपदमेव, केवलया वृद्धया दास्याऽनुगम्यमाना, समुत्सुका ज्ञातुं परिणामं स्वकपटप्रयोगस्य, साक्षात्कुर्वाणाऽन्तं स्वजीवनयात्राया दुःखबहुलाया आसन्नकल्पं, सावधाना, प्रशांतस्वान्ता, कृताऽऽकारगूहना ।

ददर्श च, कृतप्रवेशा तस्मिन्नपरिवर्तितविविधरमणीयवस्तुविन्यासेऽपि कथमप्यनभिनंदनीयतामप्रत्याख्येयामापन्ने कक्षे, पूर्ववदेव पर्यंके समुपविष्टमपि पूर्ववदेवोपवीज्यमानमपि पूर्ववदेव श्मश्रुपाशं स्वमामृशन्तमपि पूर्ववदेव धवलवेषमपि कथमपि वृद्धतरमिव क्षीणतरमिव दुर्बलतरमिव भासमानं, कक्षकोणेऽन्यतमे निपतिते पुरुषाधिकप्रमाणे कस्मिंश्चिदाध्माताऽऽभ्यन्तर औष्ट्रचर्मकोषे निखातनयनं, स्वं द्वेषणम् ।

अनुमिन्वत्येव च ज्ञातप्रायमपि पदार्थं कोपान्तःस्थितं सर्वतः प्रसरताऽतितीव्रेण पूतिगंधेन, सरभसमिव समुपसर्पता तस्याः समुच्छ्वसन्नासापुटमश्रृणोत् तं, समवलोक्य तां समुपस्थितां सहसा पर्यंकादुत्थितमपरस्मिन्नेव क्षणे विचार्येव किमपि पुनः पर्यंके समुपविष्टं, दर्पोद्धतेन स्वरेण तां संबोधयन्तमन्यस्मिन्नेव च क्षणे समादिशन्तं किमपि कक्षकोणावस्थितमधोमुखं सेवकमेकम् ।

अपश्यत् तं किंकरं लोहश्रृंखलानिगडितैरिव भूमिनिखातैरिव मंदमंदैः पदैस्तं कोपमुपसर्पन्तं विदारयन्तं च तं निशितधारया छुरिकया ।

अद्राक्षीच्च क्षणमात्रानन्तरं चर्मचक्षुषा निर्निमेषेण – असंभाव्येव तदन्तः वहिर्निःसरन्तमाध्मातमिवोच्छूनसर्वावयवं, क्लिन्नमिव सार्द्रपललं, रक्तमिव केनचिद्रंजनेन नारकेण कुवर्णं, कृतावासमसंख्यैः सूक्ष्मैः कृमिभिरतितीव्रविस्त्रगंधं मुद्रितनयनं कायं यवनसेनाध्यक्षस्य ।

स्मृतिचक्षुषा च तं गौरवर्णमतिविशालभालफलकं कर्णान्तविश्रान्तलोचनं दीर्घसरलनासमावद्धारक्तोष्ठपुटमीषदुन्नतचिबुकं सुकोमलश्मश्रुलकपोलं – एकवारं दृष्टमपि समुट्टंकितमिव सुस्पष्टमन्तर्हृदये ।

आरभत च सहसा – उच्चैर्हसितुं ···· मत्तेवोन्मत्तेव ग्रहगृहीतेव भूताविष्टेवाभिभूतेवापारेण हर्षेण समाक्रांतेवागाधेन दुःखेन ···· साम्रलोचनाऽऽताम्रमुखारविंदा ।

अविरम्यैव चातिहसनाद्विनिर्गत्यासकृद्यवनाधीश्वरं सर्जन्याऽऽवेगप्रकंपमानया कथयितुं कथमपि किमपि किमप्यस्पष्टाक्षरं पार्श्ववर्तिनीं स्वदासीं ···· विदन्तं सकुत्सं हसन्तीम् ।

दमिश्काधिपस्तु समवलोक्य तां लेशतोऽप्यप्रभावितां तदादेशप्रभावप्रदर्शनेन विगलितदर्पः, निरीक्ष्य तां तथा विहसन्ती विस्मितो, विलोक्य तां तथा विनिर्दिश्य तं किमपि कथयन्तीं स्वदासीं कौतूहलाविष्टः, व्यावर्त्य दृष्टीः भूमौ निपतिताच्छवादुच्चैर्हसन्त्याः राजदारिकायाश्च प्रवहदश्रुक्लिन्नकपोलान्मुखारविंदात्, तस्मिन्नेव ताः निबध्नन्तीनामन्तःपुरपरिचारिकाणां समक्षमुपहसितमिवाऽऽत्मानं मन्यमानः, क्रुद्धः, स्वरेण तीक्ष्णेनापृच्छत् तां वृद्धां दासीं—

"किमित्येवं हसति निर्लज्जेयम् ?"

"रे रे यवन ! न त्वं वस्तुतोऽधीश्वरो यवनानाम् .... अपि तु मूर्खाणाम् इति हसति त्वां स्वामिनी मम" – कथंचित् समुत्तार्याऽऽत्मानमपि दुष्प्रसहात् हास्यप्रवाहात् प्रत्यवदत् सा ।

"शृणु रे !" – प्राह सा – "स्वामिन्या ममातिचतुरया, प्रथम एव दृष्टिपाते तव यथार्थं स्वरूपं परिकलयन्त्या, त्वत्सदृशस्य कापुरुषस्य सामर्थ्यैकमूलं स्वामिभक्तमिममनन्यसदृशं सेवकोत्तमं त्वत्तोऽपहर्तुकामया, मिथ्यैव कथितमासीत् – 'लुण्ठितं मम मद्भगिन्याश्च कौमार्यमनेनेह संप्रेषणात् प्रागिति ।

"किं मिथ्यैव ?" – अश्रद्दधान इव स्वकर्णौ दमिश्काधिप आहास्फुटस्वरम् ।

"आम् ! .... मिथ्यैव ! त्वया तु मूढेनाविचार्यकार्यकारिणाऽस्या अपरिचिताया अपि शत्रुपक्षीयाया अपि वचसि तस्मिन् सहसा विश्वसता .... सहसाऽयं शूरः सेवकः प्राणात्ययं लंभितः !"

"कपटिनी !" उज्जगार स यवनाधिपो ज्वलन्नेत्रः ।

"अरे" आह सा वृद्धा समुपेक्ष्य तस्य क्रोधोद्गारं, "नायं प्राणात्ययं लंभितोऽपि तु समस्तस्य यवनसाम्राज्यस्यावश्यंभावी

भाग्योत्कर्ष एव। स्वर्गं गते हि तुरुष्कप्रांताधिपे यवनसाम्राज्यपरिवर्द्धनवद्धपरिकरे म्लेच्छधर्माभिमानिनि विमृश्यकारिणि तस्मिनलूहज्जाजेऽयमेकल एवावशिष्ट आसीदाधारो यवनसाम्राज्यलक्ष्म्याः। कियान् सबलश्चासीदयमाधारः! ···· अनतिवयसमनतिवयसमपि युद्धकलाकोविदं, युद्धकलाकोविदमपि सामोपायकुशलं सामोपायकुशलमपि भेदप्रयोगसिद्धहस्तं, भेदप्रयोगसिद्धहस्तमपि भेदसाधनावशं, यवनधर्मप्राणमपीतरधर्मसहनं, इतरधर्मसहनमपि यवनधर्मप्रसारैकलक्ष्यमभ्यमित्रमूर्जस्वलं जैत्रं ···· इमं स्वतनयमनन्याद्दशमवलंब्य हि यवनसाम्राज्यलक्ष्मीः संपूर्णामिमां वसुंधरां स्वदासीकर्तुं प्रवृत्ताऽऽसीत्। त्वया तु तद्दौर्भाग्यवशात् तत्पतिपदे वलादात्मानं प्रतिष्ठापयता स आधारो हठादपहृतो ···· विश्वस्यापवादेऽस्या युवत्या ···· द्विपत्कन्याया बलादिहाऽऽनीतायाः।"

"विलपतु माताऽस्याः शोकेन" जगादाऽस्फुटाक्षरं स यवनः।

"बहु खलूपकृतं त्वया!" तीव्रस्वरमुज्जुघोष सा दासी। "बहूपकृतम्। ···· न खल्वस्माकं बंदिनीनामेव। न खल्वस्माकं युवराजस्यैव। ···· अपि त्वस्माकं भारतभुवः। विनाशिते हि अस्मिन् दुर्धर्षे दुर्जेये वीरोत्तम आक्रामके ···· हाः हाः हाः विनाशिते स्वयं स्वामिना ···· सा नूनं लप्स्यते समयं साहसं सामर्थ्यं च ···· न ···· केवलाय स्वरक्षणायामि तु विजितस्य स्वैकदेशस्य विमोचनायाऽपि।

"हताशे!" प्राह फेनिलमुखो दमिश्काधिपः।

"अरे! यत् खलु सुदुष्करं कार्यमस्माकं राजकुमारो वज्रबाहुर्महाराजो दहरोऽस्माकमसंख्याः सैनिकाः न कर्तुं शेकुस्तत् त्वया झटिति कृतम्। नूनं यथाऽयं त्वया निरपराधं प्राणदंडेन दंडितो वीरवर इतिहासेऽजरामरं स्थानं

दमिश्काधिपस्तु समवलोक्य तां लेशतोऽप्यप्रभावितां तदादेशप्रभावप्रदर्शनेन विगलितदर्पः, निरीक्ष्य तां तथा विहसन्ती विस्मितो, विलोक्य तां तथा विनिर्दिश्य तं किमपि कथयन्तीं स्वदासीं कौतूहलाविष्टः, व्यावर्त्य दृष्टीः भूमौ निपतिताच्छवादुच्चैर्हंसन्त्याः राजदारिकायाश्च प्रवहदश्रुक्लिन्नकपोलान्मुखारविंदात्, तस्मिन्नेव ताः निवध्नन्तीनामन्तःपुरपरिचारिकाणां समक्षमुपहसितमिवाऽऽत्मानं मन्यमानः, क्रुद्धः, स्वरेण तीक्ष्णेनापृच्छत् तां वृद्धां दासीं—

"किमित्येवं हसति निर्लज्जेयम् ?"

"रे रे यवन ! न त्वं वस्तुतोऽधीश्वरो यवनानाम् .... अपि तु मूर्खाणाम् इति हसति त्वां स्वामिनी मम" – कथंचित् समुत्तार्याऽऽत्मानमपि दुष्प्रसहात् हास्यप्रवाहात् प्रत्यवदत् सा ।

"शृणु रे !" – प्राह सा – "स्वामिन्या ममातिचतुरया, प्रथम एव दृष्टिपाते तव यथार्थं स्वरूपं परिकलयन्त्या, त्वत्सदृशस्य कापुरुषस्य सामर्थ्यैकमूलं स्वामिभक्तमिममनन्यसदृशं सेवकोत्तमं त्वत्तोऽपहर्तुकामया, मिथ्यैव कथितमासीत् – 'लुण्ठितं मम मद्भगिन्याश्च कौमार्यमनेनेह संप्रेषणात् प्रागिति ।

"किं मिथ्यैव ?" – अश्रद्दधान इव स्वकर्णौ दमिश्काधिप आहास्फुटस्वरम् ।

"आम् ! .... मिथ्यैव ! त्वया तु मूढेनाविचार्यकार्यकारिणाऽस्या अपरिचिताया अपि शत्रुपक्षीयाया अपि वचसि तस्मिन् सहसा विश्वसता .... सहसाऽयं शूरः सेवकः प्राणात्ययं लंभितः !"

"कपटिनी !" उज्जगार स यवनाधिपो ज्वलन्नेत्रः ।

"अरे" आह सा वृद्धा समुपेक्ष्य तस्य क्रोधोद्गारं, "नायं प्राणात्ययं लंभितोऽपि तु समस्तस्य यवनसाम्राज्यस्यावश्यंभावी

भाग्योत्कर्ष एव। स्वर्गं गते हि तुरुष्कप्रांताधिपे यवनसाम्राज्य-परिवर्द्धनबद्धपरिकरे म्लेच्छधर्माभिमानिनि विमृश्यकारिणि तस्मिनलूहज्जाजेऽयमेकल एवावशिष्ट आसीदाधारो यवनसाम्राज्य-लक्ष्म्याः। कियान् सबलश्चासीदयमाधारः! ···· अनतिवयसमन-तिवयसमपि युद्धकलाकोविदं, युद्धकलाकोविदमपि सामोपायकुशलं सामोपायकुशलमपि भेदप्रयोगसिद्धहस्तं, भेदप्रयोगसिद्धहस्तमपि भेदसाधनावशं, यवनधर्मप्राणमपीतरधर्मसहनं, इतरधर्मसहनमपि यवनधर्मप्रसारैकलक्ष्यमभ्यमित्रमूर्जस्वलं जेत्रं ···· इमं स्वतनयमनन्या-दृशमवलंब्य हि यवनसाम्राज्यलक्ष्मीः संपूर्णामिमां वसुंधरां स्वदासीकर्तुं प्रवृत्ताऽऽसीत्। त्वया तु तद्दौर्भाग्यवशात् तत्पतिपदे बलादात्मानं प्रतिष्ठापयता स आधारो हठादपहृतो ···· विश्वस्या-पवादेऽस्या युवत्या ···· द्विपत्कन्याया बलादिहाऽऽनीतायाः।"

"विलपतु माताऽस्याः शोकेन" जगादाऽस्फुटाक्षरं स यवनः।

"बहु खलूपकृतं त्वया!" तीव्रस्वरमुज्जुघोष सा दासी। "बहूपकृतम्। ···· न खल्वस्माकं बंदिनीनामेव। न खल्वस्माकं युवराजस्यैव। ···· अपि त्वस्माकं भारतभुवः। विनाशिते हि अस्मिन् दुर्धर्षे दुर्जेये वीरोत्तम आक्रामके ···· हाः हाः हाः विनाशिते स्वयं स्वामिना ···· सा नूनं लप्स्यते समयं साहसं सामर्थ्यं च ···· न ···· केवलाय स्वरक्षणायापि तु विजितस्य स्वैकदेशस्य विमोचनायाऽपि।

"हताशे!" प्राह फेनिलमुखो दमिश्काधिपः।

"अरे! यत् खलु सुदुष्करं कार्यमस्माकं राजकुमारो वज्रबाहुर्महाराजो दहरोऽस्माकमसंख्याः सैनिकाः न कर्तुं शेकुस्तत् त्वया झटिति कृतम्। नूनं यथाऽयं त्वया निरपराधं प्राणदंडेन दंडितो वीरवर इतिहासेऽजरामरं स्थानं

प्राप्स्यत्यसामान्यः सेनाध्यक्षोऽसाधारणः स्वामिभक्तः सेवक इति .... इयं वा मम स्वामिनो लोकविलक्षणाऽर्थनीतिप्रयोगकुशला सिंधुकन्या स्वमातृभूमिरक्षणार्थं प्राणाधिकचारित्र्यापवादमपि साधनत्वेन प्रयुंजाना वीरबालेति .... तथा त्वमपि .... त्वमपि (उच्चैर्विहस्य) नियत्या यत्किंचित्कारिण्या बलादस्य यवनसाम्राज्यस्याधीश्वरपदे समारोपितो मूर्खः न केवलो मूर्खोऽपि तु चतुरंमन्यः, न केवलश्चतुरंमन्योऽपि तु जाल्मः .... क्षुद्रो यवनः शासकश्च इति ।"

"अपनयत .... अपनयत रे वाचाटामिमां कद्वदां दास्याः पुत्रीमितः" सहसाऽक्रोशत् कोपातिरेकवेपमानो विस्फारिताक्षो दमिश्काधिपः सहसोत्थाय पर्यंकात् । "प्रक्षिपत चापहृत्यास्या वासांसि .... तस्मिन् .... तस्मिन् वृश्चिकबहुले निर्वाते भूकक्षे .... मर्तुं .... एवमेव मुखरमुखम् ।"

"इमां रूपयौवनसंपन्नां सिंधुराजकन्यां .... इमामतिचतुरां वीरबालां .... इमामद्वितीयामार्यकन्यां .... तथा सबहुमानं नरकं प्रापयिष्यामो .... यथा स्मृतोऽप्यस्या अत्ययः रोमाणि सर्वेषामञ्चयिष्यति । अनया खलु कौमार्यलुंठनस्य कृतकमपवादं निर्लज्जं प्रसारयन्त्याऽस्माकं श्रेष्ठः सेनानीरस्मद्भ्यः छलेनापहृतः .... तत् .... तत् .... (सावेश) श्वः प्रभात एव .... अस्माकं प्रासादस्य पुरस्तात् .... महाचत्वरे .... पश्यतामस्माकमसंख्यानां पौराणां .... शताधिका बलिष्ठा यवनदासा मदोन्मत्ता .... अस्या एतद्भगिनिकायाश्च .... अलुंठितं कौमार्यं लुंठिष्यन्ति .... यथा .... यथा विदीर्णभगे रुधिरविलग्नजघे शुष्कमुख एव .... इमे नरकं यास्यतः" – वदंश्चैव निरगच्छत् तस्मात् कक्षात् .... ज्वलन्नयनस्त्वरितगमनोऽधोमुखः नितरामसमर्थो दर्शयितुं मुखं स्वं हतप्रभं कक्षान्तःकृतसंघट्टाभ्यो विस्फारितनयनाभ्यश्चित्रलिखिताभ्य इव निश्चलाभ्य आन्तःपुरिकाभ्योऽधिकतरम् ।

राजदारिका तु, परिकलय्य स्वं व्यूहं सर्वथा सफलीभूतं संजाततोषा, साक्षात्कृत्य तं क्रोधस्फोटं द्वेषणस्याधिकतरमेव तुष्टा, निशम्य तं दंडघोषं तस्येषदप्यविचलिता, सहसाऽऽत्मानं कृतकृत्यं मन्यमाना – पथिकीव विहाय पथिकशालां कंचित्कालं कृतनिवासां समाक्रमणाय पथः पुनरुद्यता, तटस्थेवोदासीनेवासंपृक्तेव, शांतेन चित्तेन तस्य तन्निर्गमनं, वृद्धायाः स्वदास्या क्षणमात्रं तच्चरण-योर्नतायाः क्षणमात्रं निर्निमेषाभ्यां धवलपक्ष्मलाभ्यामपि तेजस्विभ्यां कार्यसंपादनहर्षोत्फुल्लाभ्यां निर्भयाभ्यां लोचनाभ्यां तामेव ध्यायन्त्या महाप्रमाणैः कज्जलकृष्णैरन्तःपुररक्षकैस्ततोऽपनयनं, आत्मनश्च द्वंद्वातीतस्येव पुर आगतायाः निमेषमात्रमवलोक्य तां विचारमग्नया दृशा प्रचलितायाः अन्तःपुररक्षिकायास्तस्या यवननवयौवनाया अनुगमनं च ···· नावेत् लेशतोऽपि ।

कृतप्रवेशा च परिचितेऽप्यपरिचित इव भासमाने स्वे कक्षे, किंचिद्वक्तुमिव तत्समीपमागतायां, परिकलय्य इवासामर्थ्यं स्वं प्रकटीकरणे मनोभावनानां क्षणमात्रानन्तरं दीर्घं निःश्वस्य निपीय च तां भावातुरया दृशाऽनिमेषया ततोऽपसृतायां तस्यां यवन्यां, समुपा-सरत्, पर्यंकप्रांते समुपविश्य तस्या एवाऽऽगमनं प्रतीक्षमाणां, चित्रलिखितामिव मंत्रमोहितामिव निश्चलमवस्थितां, म्लानामप्य-प्रत्याख्येयरामणीयकां विकसनोन्मुखां कुंदकलिकामिवाकाललूनां, समवलोक्य तां सकुशलं प्रत्यागतां हृष्टाभ्यां 'किमतः परं' इति पृच्छामुखराभ्यां नयनाभ्यां पक्ष्मलाभ्यां तामेव निर्निमेषं लोकमानां, स्वभगिनिकाम् ।

परामृश्य च तां लुलितालके निःस्नेहे मस्तके आश्वासमिव ददता सांत्वनामिव संक्रामयता किंचिदप्यविकंपमानेन हस्तेन, सस्मितवदनकमला, स्वैरमिव सविलासमिव समुपसृत्य द्वारं कक्षस्य, दृढं तदप्यदधात् । उपविश्य तस्याः समीपे स्वचोलान्तर्निगूढं रत्नं शनैः शनैरकर्षत् । अचूर्णयत् तत् प्रहारैस्तीव्रै रेकस्य मद्यचषकस्य सौवर्णस्य । समगृह्णात् तच्चूर्णं स्वे करतले कुसुमदलकोमले ।

अवलोक्य तत् क्षणमात्रमविचलितया दृष्ट्या ···· सस्मितं ···· प्रथमं स्वयमलेट्। अलेहयच्च तदनंतरं स्वभगिन्याऽनुमितानुमततत्-संकल्पयेव तदिच्छानुवर्तिन्या।

अशेत च शनैः शनैः पर्यंके, निर्मले निधायोपधाने मस्तकं, वक्षःसमीपे च कृत्वा संमुखीनं मुखं भगिन्या ····अनुपदमेव तत्समीपमेव शयितायाः।

आरभत च ···· प्रशांतेन चित्तेन प्रतीक्षितुं प्रभावं रत्नचूर्णस्यावलीढस्य, मीलयन्ती स्वदृष्टिं स्नेहमयीं दृष्ट्या भगिन्यास्तामेव निर्निमेषं ध्यायन्त्या, विस्मरन्ती विनायासमेव तं काराकक्षं कक्षैकदेशे निष्कंपं प्रज्वलन्तं – सावधानमिवावलोकयितुं तन्महाप्रयाणं – तं निशादीपं बहिःप्रसृतं विस्तृतं यवनराजप्रासादं योजनशतविशालं च साम्राज्यं म्लेच्छस्य, स्मरन्ती च तातं तस्मिन्निशीथे तस्यां तृणशय्यायां निपतितायाः स्मारं स्मारं राजकुलपुरोहितं पार्षैर्यवनैस्तथा निर्दयं निहतं निःशब्दं रुदत्यास्तस्याः समीपे सहसा प्रादुर्भूतमेकदेशज्वलदलातप्रकाश्यमानविलुलितपीतधवलविरलालकमाश्यानगल्लक्षतं क्षतजारक्तश्मश्रुजालमसृग्लोहितकवचं करतलेन खड्गसंघट्टकठोरेणापि स्नेहमृदुलेन तां परामृशन्तं खेदघर्घरया वाचा तां स्वकर्तव्यकरणाय प्रेरयन्तं ददानं च तद्रत्नं प्रकंपमानेन हस्तेन।

"तातेन दत्तमासीत् तत् परिमले !" सस्मितं मन्थरमकथयत् सा। "औषधं सर्वासामेव व्याधीनां ···· निरसनं सर्वसामेव विपदाम्। पारं नेष्यति खलु तदावां सर्वासामेव यातनानाम्।"

"मा, तात ! चिंतय – आवामेव निगडबंधादेवं मुच्यावह – इति ···· आवयोः सा वृद्धा सेविकाऽपि, मोचिता देहहतकस्य पाशात् कालकूटनिभेन तेन विषेणाहर्निशं तयाऽन्तर्यंत्रान्तर्निगूढेन, नूनमनुपदमेवानुसरिष्यत्यावां प्रस्थित इतः ···· अपुनरावर्तनाय।"

"एतत् खलु शस्त्रं .... तातेन दत्तमासीत् .... परिरक्षणाय शीलस्यावयोः, प्रतीकाराय द्विपतो यावच्छक्यं प्रयत्य कृतार्थयोः।"

"प्रयतितं यावच्छक्यं प्रतीकाराय द्विपतः .... सफलीभूतं च। अन्तमात्यंतिकं लंभिते तेपामनन्यादृशे सेनाध्यक्षे जैत्रे, यवनानां भारतमातुरवस्कंदनं नूनं दौर्बल्यं परमुपेप्यति। प्रदास्यति च जयायावसरं प्रबलाय प्रत्याक्रमणाय।"

"किं मन्यसे – तं वीरमन्तमात्यंतिकं लंभयितुं प्रयुक्तो मया स उपायः निंद्य आसीत्? .... गर्ह्यं आसीत? .... राक्षसीभिरप्यप्रयुक्तपूर्वः? .... अपेहि बाले! .... नास्ति कोऽप्युपायः निंद्यः राजनीतौ .... गर्ह्यो वा। अपरं च – कमिवान्यमुपायं .... अनिंद्यं .... अगर्ह्यं .... निःशस्त्राऽहं निर्बलाऽनाथाऽवसरे तस्मिन् प्रयोक्तुमासं समर्था? मयाऽपि स निंद्यो गर्हित उपाय आदित एव सुविचार्य नासीत् संकल्पितः। .... कौमार्यमावयोः लुंठितुं प्रवृत्तः स जाल्मो यवनाधीश एव विचारं तस्य मनसि ममोदभावयत्! उपादिशच्चाजानन्नेव मां प्रयोक्तुं तं रक्षणाय स्वशीलस्य समूलोन्मूलनाय चालक्षेन्द्रादपि प्रबलतरस्याऽऽक्रामकस्य भारतभुवः!"

"किमिति चालयसि स्वशिरः वक्षसि मम लग्नं....परिमले? किं न विश्वसिपि मद्वचने? .... भवतु नाम सः .... संकल्पितपूर्वः। परंतु – यदि नामान्यः कोऽपि शोभन उपायस्तच्छतांशेनाप्यभीष्टफलप्रदस्तस्यां वेलायामुपलभ्योऽभविष्यत् .... तर्हि .... शपे तव जीवितेन .... स मया तस्मिन्नेव क्षणे तत्रैव परित्यक्तोऽभविष्यत्।"

"ममापि .... तात! ...." श्रांतस्वरमवदत् सा, खेदभरादनभिज्ञैव स्वभगिन्या अपुनरुन्मीलनाय मीलितलोचनायाः, "ममापि विलक्ष्यत्येवान्तरात्मा, सफलप्रयोगाया अपि, प्रतिक्षणं स्मृत्वा तं .... आरक्तगौरवर्णमतिविशालभालफलकं कर्णान्तविश्रान्तलोचनं घन-

भ्रूलतं दीर्घसरलनासमारक्तौष्ठपुटमाजानुबाहु महाप्रमाणं सुरूपं तरुणं कुवर्णेऽतितीव्रविस्रगंध आध्माते सार्द्रे कृमिल एकस्मिन् उच्छूने पललपिंडे हठात् परिणमितं ···· तामानीलाक्षिकूटकां स्वभावोदग्रतारकां त्रैलोक्यमिवाभिभवन्तीमलौकिकत्वमिवाऽऽत्मनः प्रकाशयन्तीमात्मविश्वासमिवापारं प्रख्यापयन्तीं दृष्टिं चिरनिद्रयाऽसमय एव निमीलितां, तां स्तनितगंभीरां स्मृतामपि रोमांचकरीं वाचमकाल एव बलान्मुद्रिताम् ।"

"सत्यं ब्रवीमि····ते····परिमले ! ···· सत्यं ब्रवीमि । नासीदन्यः कोऽप्युपायः ।"

"का ···· हि ···· सति पर्याये ···· तादृशं पौरुषपुष्पं ···· परदेशीयमपि ···· पादतलेन दलयेत् ?"

"परिमले ! (सलज्जं) यदि हि नाम स युवा ···· नियत्या ···· भारतवर्षेऽस्माकं समुद्भावितोऽभविष्यत् ···· तर्हि किं ···· ?"

(सहसाऽवलोक्य) "परिमले ! परिमले ! ···· कथं समुपेक्ष्यैव मां – एकलैव –निमील्य लोचने प्रतितिष्ठाससे ? ··· प्रतीक्षस्व, जाल्मे ! ममापि सहप्रस्थानम् ।"

"अहमपि" (श्रांतस्वरं) "त्वमिवाऽऽतुरा द्रष्टुं तातम् ! ···· कियान् खलु स्नेहस्तस्य ममोपरि ।···· वदति सदा 'त्रयो मम सुताः···· एका च सुता' इति । अत एव तु तेन ···· आ बाल्यादहं सुतनिर्विशेषं संवर्द्धिता शिक्षिता प्रयुक्ता च प्रशासनकर्मणि । वदति सः 'अस्माकमेतत् सिंधुराज्यं, मया कथंचिदुत्तारितमन्तःकलहादेकलेन, वज्रदृढोऽयं वज्रः सूर्यसमश्चायं सूर्यः – द्वाविमौ मम सुतौ – तथा बलवत्तरीकरिष्यतः ···· यथा जये, सुदीक्षिते आभ्यां यथासमयं संक्रामितं, नूनं भारतवर्षस्य निखिलस्य नेतृत्वं कर्तुं समर्थं भविष्यति ।"

"एवं हि स्नेहशील: स: ···· एकलामेव त्वामागतां दृष्ट्वा किं न भविष्यति दुर्मना: ?"

····"अहमपि" (निमील्य किंचिन्नयने)" त्वमिवातुरा द्रष्टुं मातरम् ।···· अधिक: नूनं स्नेहस्तस्यास्तवोपरि । भवतु नाम । वदति सदा 'इयं सूर्या ···· पितरं स्वं सर्वात्मनाऽनुकरोति । ···· मम त्वेकैव दुहिता । ···· इयं परिमला । ···· अहमिव कोमलहृदया । ···· अहमिवाऽऽज्ञापालनतत्परा । ममेवास्या जीवनं सुयोग्यहस्त-समर्पितमेव सुखीभविष्यति' । (क्षीणं विहस्य) ···· अयि ! न जानासि तस्या अप्रकटान् प्रयत्नान् समर्पयितुं त्वां, गौरीमेव, सुयोग्यहस्तयो: । ···· वदति – तातेन सपरिहासं पृष्टा – 'सूर्या तु सुयोग्यं वरं स्वयमेवापहृत्याऽऽनेष्यति' इति ।"

(मंद्रस्वरं) ····"शप मम जीवितेन ···· परिमले ! ···· न त्वं कमपि कथयिष्यसीति । परंतु-पुरुषाधिकप्रमाण आरक्तगौरवर्णोऽतिविशालभालफलक: कर्णान्तविश्रान्तलोचनो दीर्घसरलनास आरक्तोष्ठमुद्रो दीर्घभुजदंड:, निर्माय इव महता मनोयोगेन विधिनाऽत्र संसारे संप्रेषित: कार्यविशेषाय, अभिज्ञ इव तस्य कार्यविशेषस्य, लोकविलक्षणत्वमात्मन: प्रख्यापयन् गूढभावया दृशा, ···· ऊर्जस्वलोऽनुकामीन:, कोऽपि युवा ···· नरनिर्विशेषं संवर्द्धितयाऽपि नार्या किमपहर्तुं शक्यते ? ····दृप्यते वा ? ···· श्रेष्ठतरो वज्रबाहोरपि ?"

"चकिताऽसि किं निशम्यैतत् ···· परिमले ? ···· तातेन सुतनिर्विशेषं संवर्द्धितया अपि शिक्षितया अपि मम हृदयं तु स्त्रीहृदयमेव । तत् किं न कामयेत पुरुषं कमप्येतादृशं ···· यस्मिन् समर्प्य स्वं सर्वं भारं नि:शंकं मोदेत ? भ्राता मम वज्रबाहुरेव मम हृदयस्येमां स्वाभाविकीं कामनां, मया सर्वेभ्य: निगूहितामपि, सम्यग्जानाति । ···· परिहासप्रसंगेनैव चैकान्ते ···· तं राजपुत्रं

कश्मीरस्य .... किं तस्याभिधानम् ? .... किम् ? .... अहो स्मृतम् । .... ललितादित्यं मुक्तापीडं .... असकृदुल्लिखति । परंतु .... सत्यं ब्रवीमि ते । .... (सस्मितं) रमणीमिव रमणीयदर्शनं कोमलांगीमिव सुकोमलं .... तं .... मनो मम न क्षणमेकमपि कांक्षति । .... एकमेव पुरुषं .... अपेक्षानुरूपं .... समुपलभे । महाप्रमाणं स्तनितगभीरस्वर प्रियदर्शनमपि दुरभिभवनीयम् । .... एकमेव पुरुषम् । (स्वगतमिवास्फुटास्फुटं) परंतु – स .... तु .... नः .... विष .... ।"

"दिष्ट्या .... न जानाति वज्रो विडंवनामिमाम् । मम भ्राता .... मम बाल्यसखः ।"

(सावेगं) "आतुरा खल्वहमपि त्वमिव द्रष्टुं तम् । .... इयमागताऽस्मि .... अनुपदमेव ।"

उच्चारयन्ती चैवंविधानि कान्यप्यस्पष्टान्यक्षराणि .... अवशा ....मस्तकं स्वमुद्ग्रीवमुपधाने शनैः शनैर्न्यधात् । अस्थात् तथा मुहूर्तमात्रम् । उदतिष्ठत् हठात् शय्यायाः कंपमानेनोत्तमांगेन । अवालोकयदासमन्ताद्विस्फारिताभ्यां ज्वलद्भ्यामिव रक्ताभ्यां लोचनाभ्याम् .... अनभिज्ञा मंदप्रकाशस्य विद्धृतनिःश्वासस्येव निःस्तब्धस्य तस्य काराकक्षस्य....शरीरस्य च निश्चेतनस्य भगिन्याः स्वसमीप एव निपतितस्य ।

आरभत च सहसा प्रफुल्लवदनकमला विहसन्नयनेंदीवराऽस्फुटं जल्पितुं – "कथं .... कथं .... महाबलाधिकृतः .... स्वयं तातो .... वृद्धो ब्रह्मदत्तोऽयं वज्रः .... सर्वे एवागताः ? .... अस्मिन् सिंधुरोधसि ? .... मदर्थम् ? .... इयं चपला परिमलाऽपि .... अत्रैव ? .... कथं खलु ज्ञातं युष्माभिः .... तात ! .... अपुनरावर्तनायेतः प्रस्थिताऽप्यहं .... मातरमिमां सिंधुं प्रेक्ष्यैव .... अनुज्ञातैवानया .... स्वर्लोकमारोक्ष्यामीति ? ....अनेन स्मेरवदनेन वज्रेण कथितं स्यात् ।

"... अनया वा परिमलया। अथवा – सुविदितमेव युष्माकं – कियान् ममानुरागो जनन्यामस्याम्!"

(बाष्पगद्गदं) "माता नः सर्वेषामियम्।... त्रिकालज्ञा! ...आर्यसंस्कृतिर्मूर्तिमती। भारतवर्षस्य जीवनवाहिनी जीवनदायिनीयं महानदी। अस्याः कलकलेन संमिश्रिता कवीनामुत्स्फुरिता गिर एकदा दिवौकसामपि स्पृहणीया अभवन्। अस्याः रोधसि विकसिताऽऽर्यसंस्कृतिः परमोदारा परमोदात्ता सर्वमंगला पूर्णं विकासमेकदाऽन्वभवत्।... अनापृच्छ्येमां कथं खल्वहं सुरलोकमप्यारोढुं समर्था?"

(सकृतककोपम्) "किमिति नुदति तातो मामितश्चलितुं त्रिदशालयायाविलंबमेव? नाहं वांछाम्युज्झितुं क्रोडं जनन्या अस्या इयच्छीघ्रम्!... किं ब्रवीति तातः? जननी ते दिवि सर्वानस्मान् प्रतीक्षते मनसाऽधीरेणेति?... भवतु तावत्। इयं चलामि। परंतु – आपृच्छ्येमां जनन्या अपि जननीम्।"

(सविस्मयम्) "कथं निशम्यैव ममेतःप्रस्थानसंकल्पं खिन्ना संजातेयम्?"

(सानुरोधम्) "अयि अंब! मा कुरु मनः खेदमलीमसम्। नाहं गमिष्यामि त्वामुज्झित्वा।"

(सानुरोधम्) "तात! गच्छतु भवान् अनया परिमलयैव सह!...प्रियतरयाऽनया हि पुनर्मिलित्वा संजाताश्वासा जननी मम ... विनाऽपि मया न तथा दुर्मनायेत यथेयं (सकृतककोपं) सर्वजनन्यपि मय्येव विशेषाग्रहा!"

"अवक! संतुष्टासि संप्रति?...संतुष्टा?... आरोहय तर्हि मां क्रोडं स्वम्। श्रांताऽस्मि चिरात्। (सखेदं) प्रयतितं मया, मातः

रमणीयायाः शशांककलाया, एकांतविश्रंभात् तया समुत्सारितस्य दुकूलस्येव प्रसृतस्य धवलविरलस्य शारदस्याभ्रखंडस्य, समीप एव सकौतुकमिव स्मयमानायास्तारकाया, अनभिज्ञा सर्गस्येव दिव्यस्य स्वे प्रवाहे प्रशांते प्रतिबिंबितस्य ।

....न खलु प्रसुप्ता। अपि तु व्यापृता....व्यापृता नूनमनन्यमानसा स्वापने स्वकन्यायाश्चिरजागरितायाः....चिरश्रांतायाः.... चिरात् खलु तदंकनिलीनायाः ।



प्रयतितं त्वां मोक्तुं यवननक्रग्रहात् । न तु सफलीभूतम् । प्रयतितं यावच्छक्यम् । सर्वजनसमक्षं कौमार्यभंगछद्मापि कुत्सितं प्रयुक्तं निर्लज्जयेव । ···· त्वमेव कथय, अंब ! अपि कयाऽपि कृतमेतादृशं दुःसाहसमार्यकन्यया ? (सनिर्वेदम्) कृतं दुःसाहसम् । न त्वधिगतं साफल्यम् ।"

"किं ब्रवीषि, अवक ? ···· सफलीभविष्यति मम प्रयत्नः ? कदा भविष्यति, मातः ? ···· क्षीणे पापराशौ भारतीयानामेषां भोगेन विविधानां दुःखानां पारदास्यस्य ? नैर्मल्यं लभितेषु पश्चात्तापेनैषां चित्तेषु ? ···· किं वदसि ? ·· उद्भावयिष्यति तदा दृष्टान्तोऽस्माकमसंख्यान् महेशदत्तान् शीलभद्रान् वज्रबाहून् दहरान् जयसिंहान् देवलदेवीश्च ! ···· मोचयिष्यति च तन्माध्यमेन न त्वामेव केवलामपि तु समस्तामपि भारतभुवम् ?"

"अहो, कृतार्थाऽस्मि संवृत्ता (सकृतककोपम्) ····अपेहि ! एवं श्रांतामपि कन्यां स्वां न स्वापयसि ? (साग्रहं) ····स्वापय····मां···· स्वे····अंके स्वा ···· ।"

निधाय च पुनः स्वं मस्तकं शनैः शनैरुपधाने ···· न्यमीलयत् ···· संतृप्तेव नयनकमले स्वेऽस्फुटं वदन्ती ···· 'एवं····एवं ···· अव ···· मम ····।"

निरवाच्च सहसा तस्य कक्षस्यैकदेशे निष्कंपं ज्वलन्निशादीपः ···· प्रशामित इव निशांतमंदपवमानेन दक्षेण संगोपितुमुपद्रवेभ्यश्चिरनिद्रां सिंधुकन्यायाः ।

····अवहच्च ···· पारेयवनसागरं योजनसहस्रदूरं···· सिंधुः···· चित्रलिखितैरिव निःस्तब्धैरुत्तुंगैः सरलवृक्षैः निबद्धकूलाऽनभिज्ञा वैदूर्यनीलस्य नभोंऽगणस्य दिगन्तप्रसृताया आकाशगंगायास्तत्समीप एव तदवगाहनसमुत्सुकाया इव मंदं मंदं प्रकाशमानायाः पांडुर-

रमणीयायाः शशांककलाया, एकांतविश्रंभात् तया समुत्सारितस्य दुकूलस्येव प्रसृतस्य धवलविरलस्य शारदस्याभ्रखंडस्य, समीप एव सकौतुकमिव स्मयमानायास्तारकाया, अनभिज्ञा सर्गस्येव दिव्यस्य स्वे प्रवाहे प्रशांते प्रतिबिंबितस्य ।

....न खलु प्रसुप्ता। अपि तु व्यापृता....व्यापृता नूनमनन्य-मानसा स्वापने स्वकन्यायाश्चिरजागरितायाः....चिरश्रांतायाः.... चिरात् खलु तदंकनिलीनायाः ।



# शुद्धि-पत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ४ | प्रकाशमानां | प्रकाशमाना |
| २१ | १६ | पाश्चात्य | पाश्चात्त्य |
| २३ | १ | –स्योचै– | –स्योच्चै– |
| २९ | २० | समुत्सुकं | समुत्सुकैः |
| ३२ | २० | योधृ | योध |
| ३९ | ११ | –च्चावनौश्रृंग– | –च्चावचनौश्रृंग– |
| ५० | ५ | –मशिष्यन्तीत ।" | –मशिष्यन्तीति ।" |
| ५८ | ७ | प्रतीक्षमाणानाम् । | प्रतीक्षमाणाम् । |
| ५८ | १३ | योजनसहस्त्राविशालं | योजनसहस्रविशालं |
| ६१ | १ | –मेकाकिन | मेकाकिनं |
| ६१ | १ | –प्येकवार | –प्येकवारं |
| ६५ | १२ | –संचितस्य | सूचितस्य |
| ८२ | २२ | मूर्तिभंजकं | मूर्तिभंजकं |
| ८३ | २६ | देवलगरात् | देवलनगरात् |
| १०५ | २१ | योद्धंुम् | योद्धुम् |
| १०५ | २२ | सेंधवी | सैंधवी |
| १०९ | ३ | कदाचित्केन | कादाचित्केन |
| ११६ | १२ | पादस्पृट | पादस्पृष्ट |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२० | १९ | भारतीयनां | भारतीयानां |
| १२१ | १ | श्रान्यव | श्राव्येव |
| १२१ | २ | क्षण- | क्षणे- |
| १२२ | १३ | नि यें | निलये |
| १३९ | ४ | -मश श्याम | -मशश्याम |
| १७९ | ५ | भ्राता | भ्रात्रा |
| १८३ | २० | -त्तकव | -त्त्रैव |
| १९९ | ५ | -तद्वलमभि- | -तद्वलमेभि- |
| १९९ | २२ | सुविचाय | सुविचार्य |
| २१६ | १४ | स्वस्वस्थानेप | स्वस्वस्थानेपु |
| २१९ | २२ | -श्व | श्च |
| २३२ | | -श्व | श्च |
| २३५ | १ | गृया | गुर्‍या |
| २४० | ३ | -प्टैक- | दृष्ट्वैक |
| २४६ | ३ | -अवशेपा | -अवशा- |
| २५५ | ३. | -दुर्वा- | -वा- |
| २५५ | ४ | -र्भा- | -भा- |
| २६२ | १७ | -चन्तं | -चत्तं |
| २७७ | २ | -मार्गक- | -मार्गक- |
| २७९ | १२ | संघट्टनेत | संघट्टनेन |
| २८० | २६ | -ऽनयाः | ऽनया |
| २८८ | ५ | -साम्राज्वस्य | -साम्राज्यस्य |